2.2

संस्कृतविद्या[illegible] पञ्चनवतितमं पुष्पम्

# वैदिकदर्शनविमर्शः

प्रधानसम्पादकः

प्रो. रमेशकुमारपाण्डेयः

कुलपतिः (प्रभारी)

लेखकः

डॉ. महानन्दझाः



…रीराष्ट्रियसंस्कृतविद्यापीठम्

( मानितविश्वविद्यालयः )

नवदेहली-110016

प्रमाणैरर्थपरीक्षणस्य दर्शनस्य वेदार्थ-विरोधितर्कनिरसनोपयिकं वैदिकसिद्धान्तरक्षणो-पयोगिप्रमाणादिप्रतिपादनं परमं प्रयोजनं प्रकृतग्रन्थस्य।

सिद्धान्तदृढीकरणं, प्रतिपक्षे निग्रहणं, दुर्जेयपाण्डित्याधिगमनं वा भवतु, सर्वत्र विचारशीलस्य मानवसमाजस्य कृते दर्शनदृष्टि-र्नितान्तमुपादेया भवति। वेदप्रामाण्यविप्लावन-तत्पराणां प्रखरतर्कनिरसनमनायासेन नैतद्विना कर्तुं सुकरम्, युक्तमुक्तमाचार्येण-''तत्त्वाध्य-वसायसंरक्षणार्थं जल्पवितण्डे, बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्'' इति।

दर्शननभोमण्डले गूढार्थप्रकाशको वैदिकदर्शनविमर्शाख्यो ग्रन्थो विद्वत्सु प्रत्यक्षादिप्रमाणानां विविधदर्शनप्रमेयाणाञ्च मूलङ्कषविवेचनदृशा प्रथते।

संस्कृतविद्यापीठग्रन्थमालायाः पञ्चनवतितमं पुष्पम्

# वैदिकदर्शनविमर्शः

प्रधानसम्पादकः
प्रो. रमेशकुमारपाण्डेयः
कुलपतिः (प्रभारी)

लेखकः
डॉ. महानन्दझाः



श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नवदेहली-16

# समर्पणम्



सुविचारितरमणीयो वैदिकदर्शनविमर्श इत्याख्यः।
ग्रथितोऽयं मणिबन्धः ग्रन्थोस्तु सतां प्रमोदाय॥
यो वाचस्पतिनामा महामहोपाध्यायो बुधप्रवरः।
तस्यामलपदकमले मणिरत्नमर्पये भक्त्या॥
दर्शनकाननसरणौ यत् कृपया मोदतो यामि।
अबुधो बुधजनलोके सोऽहं झाह्वो महानन्दः॥

# नैवेद्यम्

**दर्शनेन विहीनस्तु संसारं प्रतिपद्यत** इत्युक्त्या दर्शनस्य वेदार्थविरोधितर्कनिरसनोपयिकं वैदिकसिद्धान्तरक्षणोपयोगिप्रमाणादिप्रतिपादनद्वारा परमं प्रयोजनं मोक्ष इति समवगम्यते सारल्येन। भारतीयपरम्परायां यावत्प्रामाण्यं वेदस्यास्तीति तावत्प्रामाण्यम् ऋषिप्रणीतानां वैदिकदर्शनानामपि नाविदितं विदुषां समवाये। आत्मसाक्षात्कारं विधेयत्वेन निर्दिशन्त्याम् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतौ दर्शनमुपजीव्य यच्छ्रवणमननादिकमुक्तं तत्र मध्यममणिरिव विद्योतमानं मननमभ्यर्हितम्, तेनैव हि असम्भावनादिसकलदोषनिरासः फलति।

**वैदिकदर्शनविमर्श** इति प्रस्तुते ग्रन्थरत्ने बहूनां दार्शनिकविचाराणामेकत्र न केवलं सयुक्तिकं व्यवस्थापनमपितु दार्शनिकग्रन्थिभेदनमपि न्यायविभागीयैः आचार्यैः आयुष्यमद्भिः श्रीमन्महानन्दझामहाशयैः कृतमिति महत्प्रमोदस्थानम्। सर्वेऽपि शिक्षाविदः दर्शनानि प्रति श्रद्धान्विताः भवन्ति तत्रापि अस्मिन् भारते देशे सविशेषं समादरं धारयन्ति विद्वांसः। चिरकालादत्र भारतीयमनीषिभिः शास्त्रमन्थनद्वारा लोककल्याणकरं नवनीतं समुपस्थापितम्। दार्शनिकसम्प्रदाये न्याय-वैशेषिक-सांख्ययोग-पूर्वोत्तरमीमांसेति षडास्तिकानि दर्शनानि प्रथितानि सन्ति तथैव षड् नास्तिकान्यपि। न केवलं भारते अपितु पाश्चात्त्यदेशेष्वपि दार्शनिकसम्प्रदायस्य बीजानि स्वतन्त्ररूपेण स्वकीयमस्तित्वं प्रकाशमानानि विलोक्यन्ते। उपर्युक्तानां सर्वेषामपि वैदिकदर्शनानां मध्ये समन्वयस्थापकोऽयं ग्रन्थरत्नः। यतोऽहि तत्तद्दर्शनसूत्रकाराणां महर्षीणां मध्ये नास्ति भेदभित्तिः, दर्शनेषु परस्परं भेदस्थापकाः भाष्यकाराः, व्याख्यातारश्च भवन्ति। दर्शनसमन्वयविषये सूत्रकाराः महर्षयः यथा समन्वयं विदधति तद्धि अद्भुतं चमत्कारं जनयति। यथा-जगतः सर्वमपि कार्यं कर्मसाध्यमिति

मीमांसासिद्धान्तः, न्यायशास्त्रे कारणत्रैविध्यस्य चर्चा, चतुर्विंशतितत्त्वानां विवेचनं सांख्यशास्त्रे, आत्मस्वरूपनिरीक्षणं योगशास्त्रस्य दृष्टिः, तस्मादात्मनः आकाशः सम्भूत इत्यादिना सृष्टितत्त्वनिरूपणं वेदान्तदर्शनस्य दृष्टिः। पुष्पमालावत् सूत्रपुष्पैरेकत्र ग्रथनमेवोपनिषद्वाक्यानां लक्ष्यम्। एतेन ज्ञायते यत् स्व-स्वदृष्टिभिः महर्षयः एकमेव जगच्चक्रमीश्वरकर्तृकं निरूपयितुं प्रवृत्ताः सन्ति। सर्वाण्यपि दर्शनानि स्वानुभूत्या सिद्धपदार्थनिरूपकाणि सन्ति। शास्त्राणि जीवनसाधनानि सन्त्यपि विविधजनरुचिवैचित्र्याद् भिन्नानि प्रतीयन्ते। तथाचोक्तं पुष्पदन्ताचार्येण शिवमहिम्नस्तोत्रे--

**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम् ।**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥**

अभिनवचिन्तनस्य विकास एव दर्शनस्य मौलिकं लक्ष्यम्। एतल्लक्ष्यं सर्वथा पूरयति-- अस्मिन्नेव विद्यापीठे न्यायविभागीयस्सहायकाचार्यः **डॉ. महानन्दझा** नामा न्यायशास्त्राध्यवसायी मनीषी। स्वविद्यासम्पद्बलेन आयुष्मता महानन्दझामहाशयेन पूर्वकुलगुरूणां कीर्तिशेषाणामाचार्य **वाचस्पत्युपाध्याय-महोदयानां** चरणयोरिमां कृतिं समर्प्य स्वकीयं कार्तज्ञ्यं प्रदर्शितं तदर्थमहं तं धन्यवादैः सभाजयामि। तदीयमिदमनवद्यमुपस्थापनं वैदिकदर्शनरहस्य-बुभुत्सूनां परितृप्तये सरस्वत्याः सम्पत्समृद्धये च भवेदिति समीहे।

**10.04.2015** **—रमेशकुमारपाण्डेयः**
प्रभारी कुलपतिः

# कृतज्ञताज्ञापनम्

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।
अस्मदाचार्यपर्य्यन्तां वन्दे गुरुपरम्पराम्।।

शिक्षा किल मानवजीवनविकासस्य निदानम्, तदभावे समाजस्य, राष्ट्रस्य वा विकासासम्भवः। भौतिकोपकरणसम्भाराक्रान्तोऽयमाधुनिकः कालः किल शिक्षा प्रसूत एव। शिक्षयैव मानवानां मानसिको, बौद्धो, नैतिकः, सामाजिकः, शारीरिकः, आध्यात्मिकश्च विकासः सम्भवतितराम्।

शिक्षैव असभ्यान् मानवान् सभ्यान् संस्कृतांश्च विदधाति। अत एवोक्तं संस्कृतवाङ्मये- "विद्याविहीनः पशुः" इति।

प्रस्तुतकार्यस्य पूर्तिः प्रभुगुरुकृपाभ्यां जाता। एतदवसरे येषां-येषां सहृदयानामाचार्यप्रवराणां कृपया, स्नेहेन, उपदेशेन चैतत्कार्ये समर्थोऽहम् तांस्तान् मान्यमान्यान् प्रति कृतज्ञतापूर्णं सश्रद्धं भूयो-भूयो नमस्कारपर्यायं विज्ञापयामि।

तत्रादौ महिमामण्डितानां न्यायविद्यापारावारीणानां कीर्तिविश्रुतानां सं.सं. विश्वविद्यालये न्याय-वैशेषिकविभागाध्यक्षचराणां दर्शनसङ्कायाध्यक्षचराणाश्च अस्मद्गुरुवर्य्याणां **प्रो. वशिष्ठत्रिपाठिमहोदयानां** बहुमूल्यं कृपामयमवदानं सप्रश्रयं स्मारं-स्मारं तत्रभवतां चरणकमलयोर्निवेद्यन्ते मामकाः सश्रद्धप्रणमाञ्जलयः।

तदनु पूज्यमातृपितृ **श्रीधर्मनाथझा-श्रीमतीचन्द्रकलादेवि** चरणयोः विनिवेद्यते हार्दिकं श्रद्धार्घ्यम्।

यथा करुणामयी माता धूलिधूसरितमपि बालकशरीरं स्नेहेन हृदि निधाय कालुष्यमपहाय शुद्धं विधत्ते तद्वदौदार्यकरुणापरतन्त्राः श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठस्य प्रभारिकुलपतयः **प्रो. रमेशकुमारपाण्डेयमहोदयाः** प्रस्तुतकार्यप्रवृत्तौ उत्सभूताः। तेषां हृदयानुकूल्यमृते कार्यमिदं कथमपि न लभेदणुमात्रमपि सफलतामिति तेभ्यो विनिवेद्यते हार्दिकं श्रद्धार्घ्यम्।

जगत्पावन्याः सुरनिर्झरिण्याः यमुनायास्तटे देहल्यां यदीय चरणकमल-योस्समुष्य एतत्कार्यं मयापूरि तेषां करुणावताराणां श्रीमतामनुग्रहमूर्तीनां श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतिचराणां यशःशरीरमवाप्ताना-

माचार्यवाचस्पत्युपाध्यायवर्य्याणां स्वकीयां श्रद्धां विदधन् तेषां मूर्तिमतीमनुकम्पां प्रार्थयमाणोऽहं भाग्यशालीति विभावये।

येषां भव्यव्यक्तित्ववशादोजस्विदार्शनिकव्याख्यानाच्च लक्षाधिकाः जनाः कृतकृत्यतामनुभवन्ति तेषां मनीषिकुलपूजितानां मम दीक्षागुरूणामनन्त**श्रीविभूषितानां श्रीस्वामिरङ्गरामानुजाचार्याणाञ्चरणयोः** कोटिशः प्रणामाञ्जलिं निवदेयामि।

येषां जीवनसाराल्यमवलोक्य वैदिकऋषीणां साक्षात्कारः स्वयमेव जायते, येषाञ्च जीवनं ऋषीणामनुभूतिं सम्पादयति तेषां परमपूज्यानां **सद्गुरु-श्रीज्ञानजीवनदासजीस्वामिवर्य्याणां** (कुण्डलधाम) परमपूज्यानां **सद्गुरु-श्रीरामकृष्णदासजीस्वामिवर्य्याणाञ्च** (श्रीसंस्कारधामगुरुकुलम्, ध्रांगध्रा गुर्जरप्रदेशः) चरणयोः मामकाः शतशः प्रणामाञ्जलयः विनिवेद्यन्ते। मदुपरि एतेषां वात्सल्यं नैसर्गिक एवेति सानन्दमनुभवामि जन्मान्तरीण-सुकर्मफलमिह जन्मनि।

एवं धन्यवादं ज्ञापये अत्रस्थैवाग्रजकल्पान् न्यायवैशेषिकविभागाध्यक्षान् **प्रो. पीयूषकान्तदीक्षितमहोदयान्, प्रो. हरेरामत्रिपाठिमहोदयान्, डॉ. बिष्णुपद-महापात्रमहोदयान्, डॉ. रामचन्द्रशर्ममहोदयानपि** येषां सुदीर्घकालीनं सहयोगमन्तरेण नाशक्यत रत्नान्वेषणकामेन मया।

कार्येस्मिन् बहुवारमितस्ततः कार्यव्यापृत्ताः ममान्तेवासिनः डॉ. सञ्जीतकुमारझा-राघवेन्द्र-हरीश-सीमा-पारुल-सौरभप्रभृतयः तेभ्यः स्नेहाशिषः। एतदवसरे प्रकाशनविभागस्य शोधसहायकेभ्यः **डॉ. ज्ञानधरपाठकमहोदयेभ्यः** पारेशतं धन्यवादं प्रस्तौमि।

ग्रन्थलेखनादारभ्य प्रकाशनपर्य्यन्तं मम पाणिगृहीत्याः **श्रीमती अञ्जुदेव्याः** प्राप्तं साहाय्यं सदा स्तुत्यं विद्यते अतस्ताभ्यो मङ्गलशतं समीहे। **सुताभ्यामक्षरानामि-काभ्यां** आशीर्वचांसि वितनोमि।

अमरप्रिंटिंगयन्त्रालयस्य स्वत्वाधिकारिभ्यः सपुत्रेभ्यः **श्रीहीरालाल-महोदयेभ्यश्च** धन्यवादशतं विज्ञापयामि।

अन्ते पुनः जगतः पितरौ प्रणम्य ''त्वदीयं वस्तुगोविन्द तुभ्यमेव समर्पये'' इति भावनाभरित हृदयोऽहं विरमामीति शम्।

महानन्दझा

**आचार्यस्नेहधन्यः**

**महानन्दझाः**

# भूमिका

विदितमेवं समस्तानां जनानां यदिदं भारतवर्षं चिरकालाद् विविधविद्यानां प्रशस्तमायतनमस्ति। यासाम्–

**अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।**
**धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश।।[1]**

इत्येवं संक्षेपत उद्देशो भवति। तत्र न्यायविस्तरशब्देन गौतमीय-न्याय-वैशेषिकदर्शनमेव समुद्दिष्टमस्ति न तु बौद्धजैनन्यायदर्शनानि तत्र उपदिष्टानि। वेदस्य साहचर्यदर्शनेन वैदिकानामेव दर्शनानां तत्र ग्रहणस्य औचित्यात्। यतो हि समस्ताश्चतुर्दशविधा विद्याः वेदावलम्बिन्यः साक्षात् परम्परया वा परमपुरुषार्थस्य मोक्षस्य प्रवर्त्तिकाः भवन्ति। सोऽयं सर्वेषामेव जनानां वाञ्छिततमः परमपुरुषार्थपदवाच्यो भवति। तत्साधनायैव न्याय-वैशेषिकदर्शने प्रवर्तेते। शास्त्रमिदं चिरकालान्निःश्रेयसोपायप्रदर्शने प्रवर्तते। तथा चोक्तं श्रुतौ–"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति। तत्र द्रष्टव्यः इत्यनेन इष्टः परमपुरुषार्थः अपवर्गः ज्ञातो भवति। श्रोतव्यः मन्तव्यः इत्यनेन च निःश्रेयसोपायभूतमात्मदर्शनम्। इममेवाशयं स्मृतिरपि बोधयति–

**आगमेनानुमानेन ध्यानाभ्यासरसेन च।**
**त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्।।[2]**

अत्र स्मृतौ उत्तमयोगपदमात्मसाक्षात्कारपरम्। अत्रापि मननस्यात्म-दर्शनसाधनत्वं बोध्यते। अनया रीत्या आत्मनो मननस्य आत्मदर्शनद्वारा परमपुरुषार्थापवर्गोपयोगित्वं बोध्यते, तच्च मननमनुमानात्मकमेव।

---

1. स्मृतिः।
2. स्मृतिः।

अनुमानप्रतिपादकञ्च शास्त्रं न्यायशास्त्रम्। तच्च शास्त्रं गौतमीयं न्यायशास्त्रम्। यथा च गौतमीयं शास्त्रं न्यायपदवाच्यं तथैव वैशेषिकदर्शनमपि न्यायपदव्यवहार्यं भवति। यतो हि नि + ईयते प्राप्यते विवक्षितस्य आकांक्षितस्य अर्थस्य सिद्धिः अनेन इति व्युत्पत्या न्यायपदव्यवहार्यत्वं न्यायवैशेषिकदर्शनयोः भवति।

इत्थं प्रकारेण गौतमीयो न्यायो वैशेषिकन्याय इत्युभयमपि समीचीनमेव। भगवता न्यायभाष्यकारेण वात्स्यायनेन न्यायपदमित्थं प्रकारेण परिष्कृतम्– "प्रमाणैरर्थपरीक्षणं न्यायः[1]"। प्रत्यक्षागमाश्रितमनुमानम् सा अन्वीक्षा। प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्तते इति आन्वीक्षिकी न्यायशास्त्रमिति। एतस्य भाष्यग्रन्थस्य विवेचनावसरे तात्पर्यटीकाकर्त्रा वाचस्पतिमिश्रेण प्रत्यक्षादि- प्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि, तैः अर्थस्य लिङ्गस्य परीक्षणं परीक्षा। तत्र प्रतिज्ञादयः पञ्चावयवाः अर्थपरीक्षायां नहि साक्षात् उपयुक्ताः भवन्ति, अपितु स्वकारणीभूतप्रमाणद्वारैव। अनेन परार्थानुमानमेव न्याय इति लभ्यते परन्तु केवलं परार्थानुमानमेव न न्यायपदवाच्यम् अपितु प्रतिज्ञादिपञ्चकसमुदायत्वमपि न्यायत्वमिति लक्षणं मणिग्रन्थे उपलभ्यते। तथा च–"न्यायान्तर्गततत्त्वे सति प्रतिज्ञादिपञ्चक-समुदायत्वं न्यायत्वम्।[2]" न्यायशास्त्रस्य पक्षप्रतिपक्षाभ्यां विचारप्रधानत्वेन परार्थानुमानप्राधान्यात् परार्थानुमानस्य च न्यायसाध्यत्वात् न्यायप्रधानमिदं शास्त्रमस्तीति युज्यते एव अस्य गौतमीयदर्शनस्य न्यायसंज्ञा।

अस्य गोतमः गौतमो वा अक्षपादापरनामधेयः अस्य प्रथमः प्रवक्ता विद्यते न तु गौतमः अस्य शास्त्रस्य कर्ता। यतः वेदविद्यावत् अनादिकालतोः वाको वाक्यपदबोध्यत्वेन अस्य शास्त्रस्य श्रवणात्। यतो हि वेदविद्यानामेव नारदसनत्कुमारसंवादे सनत्कुमारपृष्टेन नारदेन एवमुक्तम्–

"ऋग्वेदं भगवोध्येमियजुवेदं सामवेदमाथर्वणं चतुर्थम्, इतिहासपुराणं पञ्चमं वेदानां वेदं पित्रयम्, राशिं दैवं निधिं वाको वाक्यमिति[3]"।

---

1. तर्कसंग्रहटीका
2. पक्षताप्रकरणे
3. उपनिषद्–नारदसनत्कुमारसंवादे

एतद्वाक्ये वाको वाक्यशब्देन न्यायशब्दस्यैवोल्लेखः। नहि शास्त्रमिदमध्यात्मविद्यामात्रपरमपितु अध्यात्मविद्यासाधनतासम्पादकमपि। अत एव इदं शास्त्रं लौकिकवैदिकोभयविधकर्मणां साधकम्, तदुपयोगि च।

दर्शनं तावद्दृष्टिविषयकरणमेव। भावव्युत्पत्या दृशिर् प्रेक्षणे इति भौवादिकाद् भावेऽर्थे "ल्युट् च[1]" इति ल्युटि दर्शनम्। अस्यार्थः प्रेक्षणं दृष्टिः दर्शनम् इति जनाः कथयन्त्यपि तत्र ममेयं दृष्टिः अहमेव पश्यामि। वस्तुतो ज्ञानदृष्ट्या दिव्यदृष्ट्या दर्शनमेव दर्शनशब्दस्याभिधेयम्। अतो येन तत्त्वदर्शनमात्मदर्शनं वा सञ्जायते तद्दर्शनम्। उपनिषत्काले आत्मदर्शनार्थे दर्शनशब्दस्य प्रयोगो भवति स्म। तदानीमात्मदर्शनमेव प्रामुख्यं भजते स्म। ईशावास्योपनिषदि एवं प्रकारेण लिखितमस्ति यत् "हिरण्यमयेन पात्रेण सत्यस्यापिहितं मुखं तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये"[2] अत्र दृष्टिशब्दो दर्शनबोधकः। छान्दोग्योपनिषदि दर्शनशब्द आत्मदर्शनपरक एव[3]। मनुयाज्ञवल्क्यौ दर्शनशब्दस्य प्रयोगं सम्यग् दर्शनमात्मदर्शनं वाभिप्रेत्य चक्रतुः।

तत्र आस्तिकदर्शन-नास्तिकदर्शनभेदेन दर्शनस्य विभागद्वयं भवति। प्राक्तना आचार्या द्वादश दर्शनानि स्वीकुर्वन्ति। तेषां भेदकारणञ्च वेदोक्तसिद्धान्तस्वीकरणास्वीकरणमङ्गीकुर्वन्ति। तथाहि-

**अस्ति वेदोदितो लोको मतिर्येषां त आस्तिकाः।**
**नास्ति वेदोदितो लोको मतिर्येषां त एव ते[4]।।**

वेदे प्रतिपादितं सिद्धान्तं ये स्वीकुर्वन्ति, ते हि आस्तिकाः कथ्यन्ते। ये नैव मन्यन्ते ते शास्त्रेषु नास्तिकाः गीयन्ते। "अस्तिनास्तिदिष्टं मतिः[5]" इति पाणिनिसूत्रेण ठकि तस्य "ठस्येक[6]" इति इकि

---

1. अष्टाध्यायी - 3.3.115
2. ईशावास्योपनिषद्
3. छान्दोग्योपनिषद्
4. आर्यविद्यासुधाकरः
5. अष्टाध्यायी - 4.4.60
6. पाणिनिसूत्रम् - 7.3.50

आस्तिकनास्तिकशब्दयोः सिद्धिर्ज्ञेया। ये हि वेदं ब्रह्मप्रोक्तं स्वतःप्रमाणं मन्यन्ते, तत्र श्रद्धां विदधति ते आस्तिकाः ये च अनेवंविधाः ते नास्तिकाः इति निष्कर्षः।

अत्र इदमपि ध्यातव्यं यत् अस्ति परलोक इति मतिर्यस्य स आस्तिकः, नास्ति परलोक इति मतिर्यस्य स नास्तिकः इति भारतीयविदः भारतीयदार्शनिकसम्प्रदायस्य द्विविधत्वं प्रतिपादयन्ति। किन्तु अनया व्युत्पत्या जैनबौद्धदर्शने आस्तिकदर्शनेषु अन्तर्भूते स्याताम्। अतः अयमर्थः न युक्तः। वस्तुतो "वेद प्रामाण्याभ्युपगन्तृत्वमास्तिकत्वम्[1]" "वेदप्रामाण्यानभ्युपगन्तृत्वं नास्तिकत्वम्[2] इति।" मनुस्मृतावपि "नास्तिको वेदनिन्दकः" इति मनुना उक्तम्।

वेदप्रामाण्यं स्वीकृत्य एव न्यायः, वैशेषिकम् सांख्यं, योगः, मीमांसा, वेदान्ताश्च षड् आस्तिकदर्शनानि[3] एवञ्च तेषां प्रामाण्यमस्वीकृत्य एव चार्वाकः, जैनः, माध्यमिकः, योगाचारः सौत्रान्तिकः, वैभाषिकाश्च षड् नास्तिकदर्शनानि प्रवर्तन्ते। आस्तिकनास्तिकयोः एका अन्याऽपि व्याख्या भवितुमर्हति। तथाहि- अस्ति जगतः किमपि सत्कारणमिति आस्तिकाः। नास्ति किमपि सत् कारणं जगतः इति नास्तिकाः। इत्थं हि आस्तिकनास्तिक-लक्षणे स्वीकृते सर्वेऽपि इमे पूर्वोक्ताः आस्तिकनास्तिकाः वा दार्शनिकाः आस्तिका एव सिद्ध्यन्ति। यतो हि इमे सर्वेऽपि दार्शनिकाः कार्यकारणभावं स्वीकुर्वन्ति। कस्मादपि सतः कारणात् पूर्वमविद्यमानं कार्यं जायते। अन्यथासिद्धशून्यत्वे सति कार्यनियतपूर्ववर्ति हि कारणं कथ्यते। प्रागभावप्रतियोगि हि कार्यमुच्यते।

इत्येवमास्तिकनास्तिकलक्षणे विद्यमाने कथं नेमे आस्तिकाः स्युः। यतोऽहि चार्वाकान्ताः सर्वेऽपि तु दार्शनिकाः जगतः किमपि कारणं तु स्वीकुर्वन्त्येव। प्रकृतिं वा परमाणुं वा ईश्वरं वा कालं वा स्वभावं वा, ये हि कार्यकारणभावं स्वीकुर्वन्ति ते सर्वेऽपि आस्तिका एव। अस्यां दृष्टौ ते

---

1. न्यायसिद्धान्तमुक्तावली – किरणावलीटीका।
2. तत्रैव।
3. षड्दर्शनसमुच्चयः।

हि नास्तिकाः अवैदिकास्तिष्ठन्ति ये जगतः किमपि कारणं न मन्यन्ते। अकारणमिदं जगदनीश्वरमेव भवति ते हि नास्तिकाः ज्ञेयाः। श्रीमद्भगवद्गीतायां भगवान् श्रीकृष्णोऽपि इमामेव दृष्टिं पुष्णन् वक्ति–

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्।।[1]

भगवता श्रीकृष्णेन दैवीसम्पत् आसुरीसम्पत् इति भेदद्वयमुक्तम्। दैवीसम्पत्प्रवर्तकाः आस्तिकाः आसुरीसम्पत्प्रवर्तकाः नास्तिका इति। इह प्राच्याः विद्वांसः सर्वानपि दार्शनिकान् विभागचतुष्टये स्थापयन्ति। तथाहि–

आरम्भवादः कणभक्षपक्षः स कापिलः स्यात् परिणामवादः।
संघातवादस्तु भदन्तपक्षो वेदान्तपक्षस्तु विवर्तवादः।।[2]

कणभक्षस्य कणादमुनेः आरम्भवादः सिद्धान्तः। कपिलमुनेः परिणामवादः पक्षः सिद्धान्तः। भदन्तस्य सौगतमुनेः संघातवादः, परमाणुसमूह एव कार्यकारी भवति नास्ति अवयवावयविभावकल्पनायाः प्रयोजनम्। वेदान्तस्य पक्षस्तु विवर्तवाद एवास्ति। तत्रैव सर्वेप्यन्ये वादाः समाप्यन्ते। प्रतिविम्बवादं, आभासवादं, अणुजीववादं, विभुजीववादम्, अद्वैतवादम्, एकजीववादम्, अनन्तजीववादमित्यादिनामान्तराणि तस्यैवोच्यन्ते।

तत्र "सतोऽसज्जायत[3]" इति नैयायिकाः। यतः विद्यमानात् पूर्ववर्तिनो वस्तुनः कारणात् असत् प्रागभावप्रतियोगिकार्यं जायते। द्वितीयः परिणामवादः। "सतः सज्जायते[4]" इति परिणामवादः कपिलाद्याचार्यसम्मतः। ते हि आचार्याः कपिलादयः–

नासतो विद्यते भावो नाभावो विद्यतेऽसतः।
उभयोरपि दृष्टोन्तस्त्वनयोस्तत्त्वदर्शिभिः[5]।।

---

1. श्रीमद्भगवद्गीता - 16.8
2. सर्वज्ञात्ममुनिः।
3. छान्दोग्योपनिषद् - 6.2.1
4. सांख्यतत्त्वकौमुदी।
5. श्रीमद्भगवद्गीता - 2.16

इति भगवद्गीतोक्तक्रमानुसारं सतः विद्यमानादेव प्रधानात् प्रकृतेः सत् विद्यमानमेव महदादिचतुर्विंशतिः तत्त्वं परिणमते इति परिणामवादः साधु विवृतोऽस्ति। संघातवादस्तृतीयः इत्थं भवति बीजे यथा पृथिवीधातुस्तत्र काठिन्यं गन्धञ्च प्रददाति। जलधातुः स्नेहरसौ प्रकर्षति। तेजो धातुः रूपोष्णते प्रयच्छति। वायुधातुः स्पर्शं विदधाति। आकाशः शब्दं वितनोति। ऋतुः सर्वत्र साहाय्यमाचरति। प्राणिषु समाजरचना, पशुषु समज्या, काकादिपक्षिषु चैकात्मतेति संक्षिप्तः संघातवादः।

चतुर्थः विवर्तवादः। विवर्तो नाम अतत्त्वतः अयथार्थतः असत्य-रूपेण मिथ्यैव अन्यथाभानमन्यतया कथ्यते। यथा अन्धकारे रज्जौ सर्पभानं भवति। तत्र नहि रज्जौ कोऽपि विकारः जायते। सा तु वराकी यथा पूर्वं तादृशी एव तिष्ठति। जनः एव स्वाज्ञानेन तां सर्वं मन्यते, बिभेति, पलायते च। तथैव जगदिदं सच्चिदानन्दस्वरूपस्य ब्रह्मणः विवर्तः। यथा सच्चिदानन्दात्मकं ब्रह्म सुखदुःखमोहात्मकं भासते नहि तत्र ब्रह्मणि कोऽपि विकारः जातः रज्जुवत् सच्चिदानन्दरूपं स्थिरमस्तिविवर्तप्रभावोऽयं यत् तत्रानेकत्वं वैविध्यं, वैचित्र्यञ्च विभाति। एतस्यैव विवर्तस्य स्वरूपविषये निर्मितमिदं पद्यम्–

**दैवी ह्येषा गुणमयी मम माया दुरत्यया।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते[1]।।**

अत्रेदं विचार्यते यत् कथं षण्णामपि वैदिकदर्शनानामेकवाक्यत्वं कथञ्च तानि दर्शनानि ईश्वरं मन्यन्ते। जनेषु बहुधा प्रवादोऽस्ति यत् भारतीयवैदिकानि षड्दर्शनानि परस्परं विरुन्धन्ति। इतीयं धारणा निर्मूलैवास्ति। नास्ति भित्तिरस्याः धारणायाः यतो हि सूत्रकारेषु न दृश्यते क्वापि तादृशी प्रवृत्तिः। ते हि केवलं स्वीयम् "ऋतम्भरा तत्र प्रज्ञा" इति पातञ्जलसूत्रनिर्देशात् ऋतम्भरया प्रज्ञया अनुभूतं मन्तव्यमेव निर्दिशन्ति। नहि ते परस्परं विरोधलेशमपि प्रदर्शयन्ति। दर्शनेषु परस्परविरोधं तु व्याख्यातार उत्थापयन्ति, तद्भित्तिं च स्वव्याख्यया द्रढयन्ति। दर्शनसूत्रकाराः महर्षयो दर्शनसमन्वयं यथा विदधति तद्धि अद्भुतं चमत्कारं जनयति। अत्रोपस्थाप्यते यथा

---

1. श्रीमद्भगवद्गीता – 7.14

महर्षिभिः दर्शनसमन्वयः कृतम्। तत्र तावन्मीमांसकाः जगतः सर्वमपि कार्यं कर्मसाध्यमेवोनिरूपयन्ति। तथैव सूत्रम्- ''आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्[1]'' तस्मादनित्यमुच्यते इति। न्यायशास्त्रे कारणत्रैविध्यनिरूपणम्, यथा–

समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम्।।[2]

सांख्यशास्त्रे चतुर्विंशति तत्त्वानां निरूपणम्, यथा–

प्रकृतेर्महान्स्ततोऽहंकारस्तस्माद्गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि।।[3]

योगे "तदा द्रष्टुः स्वरूपेऽवस्थानम्[4]" इति आत्मस्वरूपनिरूपणम्, वेदान्ते च "तस्मादात्मनः आकाशः सम्भूतः" आकाशाद्वायुः वायोरग्निः ......[5]" इत्यादिना सृष्टितत्त्वनिरूपणम्। सर्वोपनिषद्वाक्यानां पुष्पमालावत् सूत्रपूष्पैरेकत्र ग्रथनमेव। षड्भिः कर्मभिः षण्णामङ्गानामावयवाना पूरणेन जगन्निर्माणप्रदर्शनमेव सूत्रकाराणां प्रधानकर्म दृश्यते, नहि तत्र कुत्रापि विरोधचर्चा दृश्यते। एकस्यैव वस्तुनोऽन्यथानिरूपणे विरोधोपस्थापनं भवति। अत्र ते सर्वेऽपि महर्षयः स्वानुभूत्या सर्वेषां जगत्साधनानां समन्वयं परस्परं कुर्वन्त एव स्वमतं प्रकाशयन्ति। यथाहि न्याय-वैशैषिकौ सृष्टेः स्थूलतत्त्वविवेचनं कुरुतः। सांख्याचार्याः हि सूक्ष्मातिसूक्ष्मतत्त्वानां विवेचनं कुर्वन्ति। पतञ्जलिः प्रकृति पुरुषयोः जडचेतनयोः पार्थक्यं विवृणुते। उभे अपि समानतन्त्रे सांख्ययोगदर्शने परस्परं विषयभेदनिरूपणाद्भिन्ने। तथैव न्यायवैशेषिकदर्शनेऽपि वैशेषिकं स्थूलतत्त्वानां ''क्षित्यप्तेजोमरुद्व्योमादीनां[6]'' न्यायदर्शनं ''प्रमाणादि षोडशपदार्थतत्त्व[7]'' निरूपणाद्विशेषतो उद्देशलक्षण

1. जैमिनिसूत्रम् - 1.2.1
2. कारिकावली - का.सं. - 17
3. सांख्यकारिका
4. योगसूत्रम् - 3
5. तैत्तिरीयोपनिषद्, ब्रह्मानन्दवल्ली- 1
6. क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः, द्रव्याणि - का. - 2
7. न्यायसूत्रम् - 1.1.1

परीक्षामात्रप्रदर्शनात् परस्परं भिद्येते। तथैव पूर्वमीमांसादर्शनं कर्मविपाकनिरूपणेन समाजसंघटनकर्मविज्ञानात् उत्तरमीमांसा च बादरायणीयं वेदान्तदर्शनं चतुर्वेदप्रतिपाद्यब्रह्मतत्त्वनिर्वचनादेव परस्परं भिद्येते। इत्थं षण्णामपि वैदिकदर्शनानां समन्वयविधानं कृतम्। एतेन प्रतीयते यत् सर्वेऽपि महर्षयः स्व-स्व दृष्टिभिरेकमेव जगच्चक्रं ईश्वरकर्तृकं निरूपयितुं प्रवृत्ताः। न तत्र उच्चावचादिविचारणा प्रसरति। इयं हि भ्रान्तधारणा यत् न्यायवैशेषिके हीनकोटिके दर्शने उच्चंतमं कोटिकं तु वेदान्तदर्शनमिति। लोके विविधानि जीवनसाधनानि तथैव शास्त्राण्यपि विविधजनरुचिवैचित्र्याद् भिन्नानि। उक्तञ्च पुष्पदन्तेन–

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्।
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥[1]

एतावता प्रबन्धेन "वैदिकदर्शनविमर्शइति विषयमधिकृत्य यथामति-किञ्चिदुपस्थापितं तत्र भवतां निखिलशास्त्रतत्वाभिज्ञानां मान्यवराणां पुरस्तात् यद्यपि एतद्विषये शास्त्रकृद्भिः पण्डितप्रकाण्डैश्चेतावता पाण्डित्यपूर्णमालोचनं कृतम् तथापि सार्वभौमरीतिमाश्रित्य दर्शनादिपर्यालोचनेन एकत्र सम्यगालोचना प्रायशो नैव परिलक्ष्यत इति तथाविधालोचनार्थं समुत्सुकचेतसा एतत्ग्रन्थरचने कुतूहलं मम मनसि सञ्जातम् किन्तु दुर्ज्ञेयतमेऽस्मिन् विषये कुशाग्रधियां नानाशास्त्रजटिलतत्त्वार्थविचारक्षमाणां विदुषामेवाधिकारः न तु पुनर्मादृशानां शास्त्रानभिज्ञानां क्षुद्रबुद्धीनां तदालोचनकौतुहलमपि समुचितम्।

अथ मदीयाचार्याणां पुरतो ममाभिलाषप्रख्यापनानन्तरं तेषामुपदेशेन सर्वथाऽनुकूल्यदानप्रतिश्रुत्या च सञ्जातसमाश्वासोऽहं ग्रन्थचनायां प्रवृत्तोऽभवम्। तेषामेवानुकूल्येन ग्रन्थोऽयं विद्वज्जनसमीपे समुपस्थापयितुं समर्थोऽस्मि। किञ्च नानातत्त्वाभिज्ञैर्निखिलनिगमागमशास्त्रमहोदधिसमुद्धृतरत्नराजिभि-र्मान्यमान्यैराचार्यप्रवरैः एतद्विषये यादृशं निबन्धादिकं विरचितम्, तेनैव यथा "मणौ वज्रसमुत्कीर्णेसूत्रेस्येवास्ति मे गतिः" इति महाकविवाक्यार्थालोचनेन प्राप्तसाहसः क्षुद्रबुद्धिरपि किञ्चिज्जिजिगमिषुर्महति कर्मणि प्रवृत्तोऽहम्।

---

1. श्रीशिवमहिम्नस्तोत्रम्

विशेषतोऽस्मद्गुरुवर्य्याणां नानाशास्त्रनिष्णातानां सदयमुपदेशेनोत्साहप्रदानेन च समाश्वस्तो एतत्कर्मणि साहसं प्राप्तवानहम्।

प्रस्तुतेऽस्मिन् ग्रन्थे पञ्च अध्यायाः सन्ति। तत्रादौ प्रथमेऽध्याये प्रमेयविवेचनानन्तरं कथानिरूपणमस्ति। तदनु न्यायदृष्ट्या अभावपदार्थविमर्शः तदनन्तरमपवर्गविवेचनं भिन्नभिन्नदर्शनदृष्ट्या विहितम्, अनन्तरञ्च विभिन्नदर्शनानां समालोचनपुरः सरं न्यायदर्शनरीत्या आत्मनः स्वरूपविषये निवेदनमस्ति।

द्वितीयेऽध्याये सर्वादौ प्रमाणानां विवेचनं विद्यते। व्याकरणादिशास्त्रसमालोचनपूर्वकशब्दस्य नित्यत्वानित्यत्व पर्यालोचनानन्तरं संशयस्वरूपं, सामान्यस्वरूपं, संसर्गस्वरूपं निरूपितम्। हेत्वाभासस्य यथाशक्तिनिरूपणानन्तरं कुमारिलप्रभाकरयोः प्रसिद्धं प्रामाण्यविषयकं निरूपणं मया विहितम्।

सांख्ययोगदर्शनमनुसृत्य अपवर्गः, पुरुषः, प्रकृतिः, सृष्टिः, अविद्याप्रभृतिविषयेषु किञ्चिद्विचारितं मया। सांख्यशास्त्रस्य महत्वपूर्णोविषयः सत्कार्यवादः। तदुपर्य्यपि यावच्छक्यमुल्लेखं मया प्रस्तुतं तृतीयेऽध्याये।

चतुर्थेऽध्याये प्रमाणप्रमेययोः विचारानन्तरमपूर्वविषये किञ्चिदालोडितम्। ईश्वरस्यास्तित्वानास्तित्वविषये शास्त्रकाराभिमतं स्वविचारं प्रकटितम्। भावनाद्वैविध्यस्यापि चर्चा अस्मिन्नेवाध्याये विहिता। तत्र धर्मविषयकव्याख्यानपूर्वकशब्दस्य नित्यत्वसाधनं शब्दार्थयोः कः सम्बन्धः इति जिज्ञासा समाहिता।

अन्तिमे पञ्चमे चाध्याये जगतः चराचरात्मकं वस्तु अविद्याया एव परिणामभूतमिति सिद्धान्तितम्। तदनु ब्रह्मणः ऐक्यत्वव्यवस्थापनानन्तरं बिम्बप्रतिबिम्बाध्यासानां विषये विचारान् प्रकटितवानहम्। अविद्याभूतं ब्रह्म न वेति जिज्ञासा तस्य समाधानपूर्वकब्रह्मणः परमलक्ष्यत्वसाधनं विद्यते।

अथ समस्ते जगति वर्तमानाः शिक्षाविदो दर्शनानि प्रति सर्वदा श्रद्धान्विताः प्रतीयन्ते। तत्रापि भारवतवर्षे तु विशिष्टं समादरं धारयन्ति भारतीयाः। प्राचीनकालादत्र दार्शनिकचिन्तने निमग्ना अस्माकं महर्षयः सततं शास्त्रमन्थनेन किमपि-किमपि लोककल्याणकारित्वं प्रास्तुवन्।

तत्परिणतिरेवबहूनां दर्शनानां सृष्टिः फलवत्यभूत्। साम्प्रतं दार्शनिकजगति षड्दर्शनान्यास्तिकानि तथैव नास्तिकानि च प्रसिद्धानि सन्ति। विदेशेष्वपि दर्शनधारा स्वतंत्ररूपेण स्वकीयमस्तित्वं धारयन्ती विलोक्यते। तस्यामपि निरंतरसत्कारसेवनतया भूयान् विस्तारः सम्प्रति परिलक्ष्यते। अस्तु–

एतावानेव मम प्रयासोऽल्पीयानपि विद्वत्समीपे समुपस्थाप्यते। तत्र च यद्यपि शास्त्रसिद्धान्तविषये समालोचनकाले मदीयबुद्धिमान्द्यात् क्वचित्क्वचित् स्खलनादिकं सम्भवदपि यथाशक्ति मया तत्र परीक्षितम्, यथामति समालोचना विहिता। बहुप्रवादप्रचलिते निरीश्वर सेश्वर सांख्यविषयेऽपि तथापि यदि स्खलनं परिलक्ष्यते तत्क्षन्तव्यं विद्वद्भिः। यच्चैतस्मिन् ग्रन्थे किञ्चित्समुत्कृष्टं विद्वद्भिः परिलक्ष्यते तत्तु महतां शास्त्रकृतां तथा मदीयगुरुवर्य्याणां च उपदेश गुरुत्वस्यैव फलम्, यच्च पुनः किञ्चित् दोषदुष्टं परिलक्ष्यते तत्तु मदीयबुद्धिजाड्यस्य फलमिति। अतः एतद्दोषानुपेक्ष्य–

**जौं बालक कह तोतरि बाता, सुनहि मुदित मन पितु अरु माता।**

इति श्रीगोस्वामिवर्य्यस्य उक्तिरियमनुस्मर्य कृपां विधास्यन्ति विद्वांसः मयीति।

पुनश्च–

**अज्ञानेन च संतृप्तिः अल्पज्ञानेन दृप्तता।**
**नूत्नज्ञानेन वैमुख्यं न ममास्तु कदाचन॥**

इति कामनया विरमामीति शम्।

महानन्द झा
**डॉ. महानन्दझाः**
सहायकाचार्यः, न्यायवैशेषिकविभागे
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

**वसन्तपञ्चमी**
**24.01.2015**

# सङ्केतसूची

| | संकेताः | विवरणम् |
|---|---|---|
| १ | अ० त० श० | अद्वैततत्त्वशुद्धिः |
| २ | अ० को० | अभिधर्मकोशः |
| ३ | अम० को० | अमरकोशः |
| ४ | अष्टा० | अष्टाध्यायी |
| ५ | कारि० | कारिकावली |
| ६ | काशि० | काशिका |
| ७ | किर० | किरणावली |
| ८ | कु० म० | कुमारिलमतोपन्यासः |
| ९ | का० मी० | काव्यमीमांसा |
| १० | ख० ख० खा० | खण्डनखण्डखाद्यम् |
| ११ | गादा० | गादाधारी |
| १२ | गु० स० प० | गुरुसम्मतपदार्थः |
| १३ | गो० भा० | गोविन्दभाष्यम् |
| १४ | कठ० | कठोपनिषत् |
| १५ | चि० | चित्सुखी |
| १६ | छान्दो० | छान्दोग्योपनिषत् |
| १७ | जै० द० | जैमिनिदर्शनम् |
| १८ | त० चि० प्र० | तत्त्वचिन्तामणि प्रत्यक्षखण्डः |
| १९ | त० चि० अ० | तत्त्वचिन्तामणि अनुमानखण्डः |
| २० | त० चि० श० | तत्त्वचिन्तामणि शब्दखण्डः |
| २१ | त० चि० त० | तत्त्वचिन्तामणि प्रत्यक्षखण्डस्य तुलनात्मकमध्ययनम् |
| २२ | त० प्र० | तत्त्वप्रदीपिका |

| | | |
|---|---|---|
| २३ | त० वि० | तत्त्वबिन्दुः |
| २४ | तं० र० | तन्त्ररत्नम् |
| २५ | तं० वा० | तन्त्रवार्तिकम् |
| २६ | त० सि० र० | तन्त्रसिद्धान्तरत्नावली |
| २७ | त० कौ० | तर्ककौमुदी |
| २८ | त० ता० | तर्कताण्डवम् |
| २९ | त० प्र० | तर्कप्रकरणम् |
| ३० | त० भा० | तर्कभाषा |
| ३१ | त० भा० प्र० | तर्कभाषाप्रकाशिका |
| ३२ | त० शा० नि० | तर्कशास्त्रनिरूपणम् |
| ३३ | त० सं० | तर्कसंग्रहः |
| ३४ | तर्का० | तर्कामृतम् |
| ३५ | ता० टी० | तात्पर्य्यटीका |
| ३६ | तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| ३७ | च० सं० | चरकसंहिता |
| ३८ | ता० ब्रा० | ताण्ड्यब्राह्मणम् |
| ३९ | थेर० | थेरवादः |
| ४० | दर्श० | दर्शनोदयः |
| ४१ | दिन० टी० | दिनकरीटीका |
| ४२ | दी० | दीधितिः |
| ४३ | दीपिका | दीपिका तर्कसंग्रहः |
| ४४ | द० फो० टे० | फोकटेल-एस० थामसन |
| ४५ | द० सा० फा० | साइंस आफ फाकलोर-अलेक्जेण्डरक्राप |
| ४६ | दि० न्या० सि० मा० | दि न्यायसिद्धान्तमाला |
| ४७ | नी० शा० | नीतिशास्त्रम् |
| ४८ | नी० त० | नीतितत्त्वाविर्भावः |
| ४९ | नी० प्र० | नीलकण्ठप्रकाशिका |
| ५० | न्या० क० | न्यायकन्दली |
| ५१ | न्या० कलि० | न्यायकलिका |
| ५२ | न्या० क० | न्यायकुसुमाञ्जलिः |
| ५३ | न्या० को० | न्यायकोशः |
| ५४ | न्या० ता० च० | न्यायतात्पर्यचन्द्रिका |

| | | |
|---|---|---|
| ५५ | न्या० ता० टी० | न्यायतार्त्पटीका |
| ५६ | न्या० द० | न्यायदर्शनम् |
| ५७ | न्या० द० बि० | न्यायदर्शनबिन्दुः |
| ५८ | न्या० प० | न्यायपरिशुद्धिः |
| ५९ | न्या० बो० | न्यायबोधिनी |
| ६० | न्या० मु० | न्यायमुक्तावली |
| ६१ | न्या० र० मा० | न्यायरत्नमाला |
| ६२ | न्या० वां० | न्यायवार्तिकम् |
| ६३ | न्या० सा० | न्यायसारः |
| ६४ | न्या० सि० दी० | न्यायसिद्धान्तदीपः |
| ६५ | न्या० सि० | न्यायसिद्धिः |
| ६६ | न्या० सू० वृ० | न्यायसूत्रवृत्तिः |
| ६७ | न्या० सू० नि० | न्यायसूचीनिबन्धः |
| ६८ | न्या० म० | न्यायमञ्जरी |
| ६९ | न्या० सि० मा० | न्यायसिद्धान्तमाला |
| ७० | न्या० भा० | न्यायभाष्यम् |
| ७१ | प० ध० सं० | पदार्थधर्मसंग्रहः |
| ७२ | प० त० नि० | पदार्थतत्त्वनिरूपणम् |
| ७३ | प० र० मा० | पदार्थरत्नमाला |
| ७४ | परि० | परिशुद्धिः |
| ७५ | परि० द० | परिष्कारदर्पणम् |
| ७६ | प्र० प० | प्रकरणपञ्चिका |
| ७७ | प्र० म० | प्रमाणमञ्जरी |
| ७८ | प्र० पा० भा० | प्रशस्तपादभाष्यम् |
| ७९ | प्र० सू० | प्रज्ञापनासूत्रम् |
| ८० | पं० सू० | पंचशिखसूत्रम् |
| ८१ | प्र० क० म० | प्रमेयकमलमार्तण्डः |
| ८२ | प० पु० | पद्मपुराणम् |
| ८३ | प्रा० न्या० क० उ० वि० | प्राच्यन्याय में कथा का उद्भव एवं विकास |
| ८४ | ब्र० सू० | ब्रह्मसूत्रम् |
| ८५ | बृ० | बृहती |

| | | |
|---|---|---|
| ८६ | व्र० पं० | वृहतीयपञ्चिका |
| ८७ | भा० चि० | भाट्टचिन्तामणि: |
| ८८ | भ० र० | भट्टरहस्यम् |
| ८९ | भा० सा० | भाट्टसार: |
| ९० | भा० | भामती |
| ९१ | भा० च० | भाष्यचन्द्र: |
| ९२ | मा० मे० | मानमेयोदय: |
| ९३ | म० द० | मणिदर्पणम् |
| ९४ | मा० मे० र० वा० | मानमेयरहस्यवार्तिकम् |
| ९५ | मी० द० | मीमांसादर्शनम् |
| ९६ | मीमांसाभ्युदय: | मीमांसाभ्युदय: |
| ९७ | मो० मी० | मोक्षमीमांसा |
| ९८ | मुक्ता | मुक्तावली |
| ९९ | मुक्ता प्र० | मुक्तवली प्रभा |
| १०० | महाभा० | महाभाष्यम् |
| १०१ | मुण्ड० | मुण्डकोपनिषद् |
| १०२ | मा० वृ० | माठरवृत्ति: |
| १०३ | मोनियर विलियम्स संस्कृत इंगलिश डिक्शनरी–आक्सफोर्ड | |
| १०४ | मा० धा० वृ० | माधवीयधातुवृत्ति: |
| १०५ | यु० दी० | युक्तिदीपिका |
| १०६ | यो० द० | योगदर्शनम् |
| १०७ | याज्ञ० स्मृ० | याज्ञवल्क्यस्मृति: |
| १०८ | लक्ष० | लक्षणावली |
| १०९ | वि० त० | विवेकतत्त्वम् |
| ११० | वे० प० | वेदान्तपरिभाषा |
| १११ | वै० सि० कौ० | वैयाकरणसिद्धान्तकौमुदी |
| ११२ | वै० सि० म० | वैयाकरणसिद्धान्तमञ्जूषा |
| ११३ | वै० द० | वैशेषिकदर्शनम् |
| ११४ | वै० रसा० | वैशेषिकरसायनम् |
| ११५ | वै० उ० | वैशेषिकोपस्कार: |
| ११६ | व्यु० | व्युत्पत्तिवाद: |
| ११७ | वा० वि० | वादिविनोद: |

| | | |
|---|---|---|
| ११८ | वि० प्र० सं० | विवरणप्रमेयसंग्रहः |
| ११९ | वि० मु० वा० | विदेहमुक्तिवादः |
| १२० | वाक्यप० | वाक्यपदीयम् |
| १२१ | वे० सं० | वेदार्थसंग्रहः |
| १२२ | व्या० भा० | व्यासभाष्यम् |
| १२३ | व्या० सू० | व्याससूत्रम् |
| १२४ | व्या० भा०व्या० | व्यासभाष्यव्याख्या |
| १२५ | शक्ति० | शक्तिवादः |
| १२६ | शा० भा० | शाबरभाष्यम् |
| १२७ | शा० तर० | शाब्दतरङ्गिणी |
| १२८ | श्रीमद् भग० | श्रीमद्भगवद्गीता |
| १२९ | श्रीमद्भा० | श्रीमद्भागवद्गीता |
| १३० | श्लो० वा० | श्लोकवार्तिकम् |
| १३१ | श०नी० सा० | शुक्रनीतिसारः |
| १३२ | श० क० | शब्दकल्पद्रुमः |
| १३३ | शि० म० स्तो० | शिवमहिम्नस्तोत्रम् |
| १३४ | श्वेता० | श्वेताश्वतरोपनिषत् |
| १३५ | स० प० | सप्तपदार्थी |
| १३६ | सर्व० द० सं० | सर्वदर्शनसंग्रहः |
| १३७ | सां० का० | सांख्यकारिका |
| १३८ | सां० त० कौ० | सांख्यतत्त्वकौमुदी |
| १३९ | सां० प्र० भा० | सांख्यप्रवचनभाष्यम् |
| १४० | स्या० म० | स्याद्वादमञ्जरी |
| १४१ | सि० ले० सं० | सिद्धान्तलेशसंग्रहः |
| १४२ | सु० र० भा० | सुभाषितरत्नभाण्डागारम् |
| १४३ | षड्द० समु० | षड्दर्शनसमुच्चयः |
| १४४ | न्यायावतार | न्यायावतारः |
| १४५ | न्या० नि० | न्यायनिर्णयः |
| १४६ | भा० द० | भारतीयदर्शनम् |
| १४७ | भा० द० शा० | भारतीयदर्शनशास्त्रम् |
| १४८ | प० प० | पत्र परीक्षा |
| १४९ | न्या० परि० | न्यायपरिशिष्टम् |

| | | |
|---|---|---|
| १५० | मनु० | मनुस्मृतिः |
| १५१ | सर्व० द० सं० | सर्वसिद्धान्तर्कसंग्रहः |
| १५२ | सर्व० द० कौ० | सर्वदर्शनकौमुदी |
| १५३ | ईशा० | ईशावास्योपनिषत् |
| १५४ | आर्य० वि० सु० | आर्यविद्यासुधाकरः |
| १५५ | रा० च० मा० | रामचरितमानस |
| १५६ | ऐ० ब्रा० | ऐतरेयब्राह्मणम् |
| १५७ | ऋ० सं० | ऋक् संहिता |
| १५८ | विण्टरनिट्ज इण्डियन लिटरेचर | |
| १५९ | ऐ० श्रु० | ऐश्वर्यश्रुतिः |
| १६० | रामरुद्री | रामरुद्री |
| १६१ | हनु० ना० | हनुमन्नाटकम् |
| १६२ | ता० र० | तार्किकरक्षा |
| १६३ | तै० सं० | तैत्तिरीयसंहिता |
| १६४ | भा० न्या० शा० | भारतीयन्यायशास्त्रम् |
| १६५ | ना० उ० | नारायण उपनिषत् |

# विषयानुक्रमणिका

# प्रथमोऽध्यायः

## न्यायाभिमतप्रमेयविवेचनम्

**1. आत्मा–**

भगवता अक्षपादेन न्यायसूत्रे "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः[1]" इति प्रमेयस्योल्लेखः कृतः। अत्रेदं विचार्यते यत् को नाम प्रमेयः एतेषां प्रमेयाणां संख्या का इति।

अत्र न्यायसूत्रे उल्लिखितानां प्रमेयाणामित्थं प्रकारेण व्यवस्थापयति केशवमिश्रः। अनेनैव क्रमेण प्रमेयाणां व्याख्याऽपि करिष्यामः।

1. आत्मा 2. शरीरम् 3. इन्द्रियम् 4. अर्थः क–द्रव्यम्, (पृथिवी, अप्, तेजः, वायुः, आकाशः, कालः, दिक्,) ख- गुणः–रूपादारभ्य संस्कारपर्यन्तं चतुर्विंशति गुणाः ग–कर्म–उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि। घ–सामान्यम्, ङ–विशेषः, च–समवायः, छ–अभावः 5. बुद्धिः, 6. मनः, 7. प्रवृत्तिः, 8. दोषः, 9. प्रेत्यभावः 10. फलम् 11. दुःखम्, 12. अपवर्गश्च। एतेषां द्वादशानां प्रमेयाणां गणना केशवमिश्रेण कृता।

न्यायदर्शने आत्मनः गणना प्रमेयत्वेन अथ च वैशेषिकदर्शने तस्य द्रव्यत्वेन कृता विद्यते। अत्र आत्मनः लक्षणं वदति अन्नंभट्टपादः–ज्ञानाधिकरणमात्मा। स आत्मा-जीवात्मा, परमात्मा भेदेन द्विविधः। इदं लक्षणं जीवात्मनि परमात्मनि च सामान्यरूपेण संगच्छते। जीवस्य ज्ञानमनित्यं प्रत्यक्षानुमित्यादि बहुरूपञ्च। परमात्मनः ज्ञानं नित्यं प्रत्यक्षात्मकञ्च। एवमेव इच्छाप्रयत्नादिकमपि।

आत्मत्वजातिस्तु जीवात्मनि परमात्मनि च विद्यते। जीवात्मनि सुखदुःखादि समवायिकारणतावच्छेदकतया आत्मत्वजातिः सिद्ध्यति। "आत्मा वा अरे द्रष्टव्यः

---

1. न्या. सू. 1/1/1

श्रोतव्यः मन्तव्यो निदिध्यासितव्यः इत्यादि श्रुतौ आत्मशब्दव्यवहारात् सुखादीनां स्वरूपयोग्यतात्मककारणतासत्त्वात् तदवच्छेदकतया आत्मत्वजातिसिद्धेः।

ननु नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमः इति वचनात् ईश्वरे सुखदुःखादिस्वरूपयोग्यतायाः सत्त्वे सुखदुःखोत्पत्यादि प्रसङ्गः इति चेन्न जलपरमाणौ स्नेहानुत्पत्त्या उक्तनियमे मानाभावात्। अन्यः कश्चित् वदति यत् ईश्वरे आत्मत्वजातिरस्त्येव नहि।

**जीवात्मस्वरूपम्–**

नास्तिकानां मते चैतन्यविशिष्टो देह एवात्मा। तेषां मते पृथिव्यप्तेजोवायु-चतुष्टयस्य परिणामेन देहे चैतन्यमुत्पद्यते। चार्वाकैकदेशिनः इन्द्रियाण्येवात्मा इति वदन्ति, तन्न समीचीनम्–तथाहि विश्वनाथः कारिकावल्यामाह–

**तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः।**

अपरे केचन मनसः आत्मत्वमभ्युपगच्छन्ति। तदपि अशोभनम्–

**मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।**

यतोऽहि मनसः अणुत्वात् प्रत्यक्षे च उद्भूतरूपं महत्वञ्च कारणम्, मनसि ज्ञानसुखादि सत्वे तत्प्रत्यक्षानुपपत्तिः। योगाचारबौद्धानां मते विज्ञानस्वरूप आत्मा।

ननु आत्मनः क्षणिकविज्ञानरूपत्वे सुखादि समवायिकारणत्वानुपपत्तिः। ज्ञानोत्पत्तिक्षणे सुखाद्युत्पत्तौ विज्ञानस्य पूर्ववृत्तित्वाभावेन कारणत्वस्यैवानुत्पत्तेः विज्ञानोत्पत्ति द्वितीयक्षणे च सुखाद्युत्पत्तिस्वीकारे सुखाद्युत्पत्तिकाले विज्ञानस्यैव नाशात् समवायिकारणत्वानुपपत्तेः, समवायिकारणस्य कार्यकालवृत्तितया हेतुत्वादत आह–ज्ञानसुखादिकं तु तस्यैव आकार विशेषः तस्यापि भावत्वादेव क्षणिकत्वम् इति चेन्न–तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः।

**जीवात्मनः परिमाणम्–**

आत्मनः परिमाणविषये दार्शनिकानां मध्ये मतभेदबाहुल्यं दरीदृश्यते। रामानुजाचार्याणां मते अणुपरिमाणवानयमात्मा। मध्यमपरिमाणवान् इति जैनः। जैनाद्वैतवादिनः नैयायिकानामिव आत्मनः विभुत्वमङ्गीकुर्वन्ति।

आत्मनः अणुपरिमाणे का क्षतिः? यदि आत्मा अणुपरिमाणवान् स्यात्तदा तस्य शरीरैकदेशे एव अवस्थितिः स्वीकार्या तथा च शरीरत्वावच्छेदेन सुखदुःखादेः प्रतीतिः कथं स्यात्? अथ च प्रदीपवत् अणुरूपस्यात्मनः सर्वशरीरावच्छदेन प्रभाप्रसारणाङ्गीकारे सुखाद्युपलब्धिः प्रसिद्धा इदमपि न युक्तियुक्तम्। अप्रत्यक्षस्य

अणोः गुणानामपि अप्रत्यक्षत्वापत्तिः। आत्मनः मध्यमपरमाणमपि नैयायिकेभ्यः न रोचते। यत् मध्यमपरिमाणं तदनित्यमिति नियमात् आत्मनः अनित्यत्व प्रसङ्गः। योगस्य उपपत्तिसिद्धौ आत्मनः विभुत्वं स्वीकार्यम् आत्मकार्यस्य सर्वत्र उपलब्धेः। उपलब्धिं प्रति विभुत्वस्य कारणत्वात्।

**जीवात्मनो बहुत्वम्–**

जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च। सुखदुःखादि वैचित्र्यात् जीवात्मनो बहुत्वं नैयायिकानां सम्मतम्। आत्मनः एकत्वे एकस्य जन्मनि सर्वे एव जायेरन् एकस्य च मरणे सर्वे एव म्रियेरन्, एकस्य करणवैकल्ये सर्वेषां करणवैकल्यं स्यात् न तु एवं भवति। लोके च जीवानामयुगपद्प्रवृत्तिर्दृश्यते। एके धर्मे प्रवृत्ताः अन्येऽधर्मे वैराग्ये च अन्ये। जीवानां मध्ये त्रिगुणभावविपर्ययश्च दृश्यते। यथा–कोऽपि सात्विकः सुखी, राजसः दुःखी, तामसश्च मोहवान् प्रत्यक्षमेवावलोक्यते। अतएव जीवात्मनः बहुत्वं सिद्धम्।

एतद्विषये सांख्यैः सह नैयायिकानामपि ऐकमत्यं भजते। तथाहि–

**जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्च॥**

सुखित्वदुःखित्वात् ज्ञानाज्ञानादि परस्परं भिन्नत्वात् जीवात्मपरमात्मनोः परस्परभेदः। यद् युगपद्विरुद्धनानाधर्माध्यासस्तन्नाना इति नियमात् जीवानां भेदः स्वीकर्तव्यः।

वैशेषिकदर्शने आत्मा अप्रत्यक्षः। कणादेनोक्तम्–तत्रात्मामनश्चाप्रत्यक्षे। किन्तु उदयनाचार्याणां मते अहं सुखी, अहं दुःखी इत्यादि मानसप्रत्यासत्या आत्मनः प्रत्यक्षत्वम्। सुखदुःखज्ञानेच्छादिभ्यो आत्मा अनुमीयते च। इन्द्रियाणां करणत्वेन तैः करणैश्च कर्त्ता अनुमीयते स एव कर्त्ता आत्मा इति।

**2. शरीरम्**

महर्षिगौतमप्रतिपादितेषु द्वादशविधप्रमेयेषु मध्ये शरीरमपि द्वितीयं प्रमेयमस्ति। अक्षपादः शरीरस्य लक्षणं प्रस्तौति–"चेष्टेन्द्रियार्थाश्रयः शरीरम्[1]। केशवमिश्रः चेष्टायाः "क्रिया" अर्थं प्रतिपादयति न तु स्पन्दनम्[2]। स्वस्थशरीरे सत्ये एव

1. न्या. सू. 1/1/11।
2. चेष्टा तु हिताहितप्राप्तिपरिहारार्था क्रिया न तु स्पन्दमात्रम्। त. भा.।

स्वस्थानीन्द्रियाणि भवन्ति। अतः शरीरमिन्द्रियाश्रयम् उच्यते। एवमेव यस्मिन्नधिष्ठाने इन्द्रियार्थसन्निकर्षैः सुखदुःखयोः प्रतिसंवेदनं प्रवृत्तं भवति तद् शरीरमेव[1]।

यद्यपि शरीरे पृथिव्यप्तेजोवाय्वाकाशादि पञ्च द्रव्याणि तिष्ठन्ति तथापि पृथिवीभागस्याधिक्यात् इदं शरीरं पार्थिवसंज्ञां लभते। शरीरस्य उपादानकारणं केवलं पृथिवी भवति। नैयायिकः पाञ्चभौतिकत्वं न स्वीकरोति अन्यथा शरीरं यदि पृथिव्यादि विजातीय द्रव्याणामुपादेयं स्यात्तदा तत्र पृथिवीत्वजलत्वादेः सांकर्य प्रसक्तिः। तथा च द्रव्याणां नवधावर्गीकरणमसङ्गतं भविष्यति।

केशवमिश्रस्याशयं यत् आत्मनः भोगाश्रयमन्त्यावयवी च यद् भवति तच्छरीरम्[2]। भोगस्याशयः–सुखदुःखयोःप्रत्यक्षानुभवः। यद्यपि आत्मा व्यापकः, अस्य संयोगः सर्वमूर्तद्रव्यैः सह भवति, अतः आत्मा सर्वमूर्तद्रव्यावच्छिन्नो भवति तथापि आत्मनि सुखदुःखानुभूतिः न भवति। शरीरमेव भोगायतनम्। आत्मा शरीरे एव सुखदुःखानुभवं करोति। शरीरञ्चान्त्यावयवी।

### 3. इन्द्रियम्–

इन्द्रियशब्दस्य व्युत्पत्तिः भगवता पाणिनिना इन्द्रः देवता यस्य इति विग्रहे इन्द्रशब्देन घ प्रत्यये कृता। तथा च सूत्रम्–"इन्द्रियमिन्द्रलिंगमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा[3]" अनेन सूत्रेण घ प्रत्यये तस्य "आयनेयनीयियः फढखछघां प्रत्ययादीनामिति[4]" सूत्रेण इयादेशे इन्द्रियशब्दः सिद्ध्यति। आत्मसम्बन्धी च इन्द्रियशब्दार्थः मन्यते तदा शरीरादावतिव्याप्तिः। बुद्धघोषानुसारेण इन्द्रियशब्दस्य व्युत्पत्यर्थं पाणिनिना कल्पितम्, यदि इन्द्रशब्दस्य "सुगत" अर्थः क्रियेत तदा शब्दार्थस्य संगतिः स्यात्।

जैनाचार्याः इन्द्रशब्दस्यार्थः जीवः आत्मा वा मन्यन्ते। माठरवृत्तौ–"यद् विषयान् प्रति धावति तदिन्द्रियम्[5]" इति। वाचस्पतिमिश्रः आत्मनः ज्ञापक[6] इन्द्रियशब्दार्थः इति कथयामास। विषयस्य संकल्पनायाः आधारे एव इन्द्रिय

---

1. न्यायभाष्यम् 1/1/11।
2. तस्य भोगायतनमन्त्यावयवी शरीरम्। त. भा. बदरीनाथशुक्ल–पृ. 221।
3. पा. सू. 5/2/93
4. पा. सू. 7/1/2
5. इन इति विषयाणां नाम, तानिनः विषयान् प्रति द्रवन्ति इति इन्द्रियाणि।
6. इन्द्रस्यात्मश्चिह्नत्वात् इन्द्रियमित्युच्यते। सां. त. कौ. पृ. 236

शब्दस्य भिन्नानि[1] नामानीति वात्स्यायनस्य मतम् इति।

संवेदनायाः षड्भेदाः इति बौद्धाः। यथा—चाक्षुषं, श्रावणं, घ्राणजं, रासनं, स्पार्शनं, मानसं च। एतेषां षड् आश्रयाश्च। चक्षुः, श्रोत्रं, घ्राणं, रसना, त्वक्, चेतना च। षड्विषयाश्चैतेषाम्—रूपं, शब्दः, गन्धः, रसः, स्पर्शः, मनश्च। बौद्धदार्शनिकैः इन्द्रियाणां पञ्चैव संख्या स्वीकृता। चक्षुः, श्रोत्रं, घ्राणं, रसना, त्वक् च।

सर्वेषु प्राणिषु इन्द्रियाणां विकासः समानरूपेणैव भवति। केचन एकेन्द्रियवन्तः भवन्ति, केचन द्वीन्द्रियवन्तः, केचन त्रीन्द्रियवन्तः। अस्याः विषमतायाः इदं कारणं यत् येषां प्राणिनां शरीरे यावती ज्ञानग्राहिका शक्तिः भवति तावदेव इन्द्रियाणि तत्र भवन्ति।

जैनाचार्याः त्वगिन्द्रियस्यैव भेदाः पञ्च कर्मेन्द्रियाणीति मन्यन्ते। पञ्चानामपीन्द्रियाणां भेदद्वयम्—द्रव्येन्द्रियं, भावेन्द्रियञ्च। द्रव्येन्द्रियस्यापि भेदद्वयम्—निवृत्तिः, उपकरणञ्च। भावेन्द्रियस्य लब्धि, उपयोगाख्यं भेदद्वयम्। आवरणादुत्पद्यमाना शक्तिः लब्धिभावेक्रियाख्या तद् अन्यदुपयोगभावेन्द्रियमिति कथ्यते[2]।

इन्द्रियसम्बन्धे सर्वेऽपि दार्शनिकाः स्वकीयान् मतान् दर्शयामासुः किन्तु केशवमिश्रस्य इन्द्रियसम्बन्धी या भावना सा सर्वानाह्लादयति। तन्मते इन्द्रियस्य इयं परिभाषा विद्यते—"शरीरसंयुक्तं ज्ञानकरणमितीन्द्रियम्[3] इति। उक्त लक्षणे इन्द्रियपदं प्रकाशे अतिव्याप्ति वारणार्थम्। इन्द्रियार्थसन्निकर्षे अतिव्याप्तिवारणाय शरीरसंयुक्तमिति पदम्। कालादावतिव्याप्तिवारणार्थं ज्ञानकरणमिति पदमवश्यमेव देयमिति।

**इन्द्रियाणि भौतिकान्यभौतिकानि वा—**

सांख्यदर्शने प्रकृतेः महत्तत्त्वं महत्तत्वात् अहंकारः अहंकारात् तन्मात्रस्योत्पत्तिः तन्मात्रतः एकादशेन्द्रियाणि जायन्ते इति मन्यते। अहंकारस्य त्रयो भेदाः वैकारिकः, तैजसः तामसं चेति। वैकारिकाहंकारात् मनसः तैजसाहंकारात् दश इन्द्रियाणां, तामसाहंकारात् पञ्चतन्मात्राणां पञ्च महाभूतानाञ्चोत्पत्तिः भवति। दश इन्द्रियेषु मध्ये पञ्च ज्ञानेन्द्रियाणि श्रोत्रं, त्वक्, चक्षुः रसना, घ्राणं, पञ्च कर्मेन्द्रियाणि च

1. एवं समाख्या निर्वचनसामर्थ्यात् बोद्धव्यं स्वविषयग्रहणम्
2. प्रज्ञापनासूत्रम्—तत्त्वार्थसूत्रम् 1/1/9 मुनि सुशील। जैनधर्म, पृ. 117
3. शरीरसंयुक्ते ज्ञानकरणमतीन्द्रियम्—त. भा.।

वाक्, पाणि, पाद, पायु, उपस्थः भवन्ति। मनः इति अन्तरिन्द्रियमिति कृत्वा एकादशेन्द्रियाणि सांख्याः स्वीकुर्वन्ति[1]। यथा क्रममेतेषां विषयाः- शब्दः, स्पर्शः, रूपं रसः, गन्धः, वचनम्, आदानं, विहरणम्, उत्सर्गः, आनन्दं, स्मृतिश्च।

समस्तानामपीन्द्रियाणामुत्पत्तिः अहंकारादेव भवति। अतएव तान्याहंकारिकाणि[2]। आहंकारिकत्वादेव तानि विषयग्रहणयोग्यानि भवन्ति[3]।

सांख्याचार्यः पञ्चाधिकरणमते इन्द्रियाणि भौतिकानि[4]। ईश्वरकृष्णः सात्विकाहंकारादेव इन्द्रियाणामुत्पत्तिः स्वीकरोति। पुराणमतानुसारेण सात्विकाहंकारात् मनसः, तामसाहंकारात् दशेन्द्रियाणां तामसाहंकारात् पञ्च तन्मात्राणामुत्पत्तिः जायते।

वाचस्पतिमिश्राणामत्रवैमत्यमस्ति। ते कथयन्ति–प्रकाशकारित्वात् एकादशेन्द्रियाणि सात्विकानि। यद्यपि अहंकारः एक एव तथापि गुणभेदात् कार्यभेदः[5]। अत्रेयमाशंका जायते यत् यदि सर्वाणीन्द्रियाणि सात्विकानि तदा कर्मेन्द्रियाणि कथं न विषयस्य प्रकाशं कुर्वन्ति। अत्र समाधानं यत् उत्कृष्ट सात्विकाहंकारात् मनसः, मध्यमसात्विकाहंकारात् बुद्धीन्द्रियाणि तथा निकृष्टसात्विकाहंकारात् कर्मेन्द्रियाणि उत्पद्यन्ते। निकृष्टसात्विकाहंकारेण जन्यत्वात् कर्मेन्द्रियाणि विषयस्य प्रकाशं न कुर्वन्ति[6]।

न्यायवैशेषिकदर्शनयोः रीत्या इन्द्रियाणि आकाशादि भूतेभ्यो जन्यत्वात् भौतिकानि। भगवान् व्यासः स्थूलसूक्ष्मभेदेन इन्द्रियस्य द्वैविध्यं प्रतिपादितवान्[7]। विज्ञानभिक्षुः कथयामास यत् बुद्धिः अहंकारश्च सूक्ष्ममिन्द्रियम्[8], पञ्च ज्ञानेन्द्रियाणि

---

1. सात्विक एकादशकः। प्रवर्तते वैकृतादहंकारात्।
2. सां. सू. 2/20, व्याख्या, सां. का. 22, 24, 25
3. आहंकारिकाणीन्द्रियाण्यर्थं साधयितुमर्हन्ति नान्यथा। सांख्यदर्शनस्येतिहासः पृ. 480 सन्दर्भ सं. 13, युक्तिदी. पृ. 123।
4. भौतिकानीन्द्रियाणीति पञ्चाधिकरणमतम्। युक्तिदीपिका पृ. 108, सांख्यदर्शनेस्येतिहासः–पृ. 525।
5. सात्विक एकादशकः प्रवर्तते, वैकृतादहंकारात्–सां. का.। सात्विकाहंकारापादानकत्वमिन्द्रियत्वम् तच्च द्विविधं बुद्धीन्द्रियं कर्मेन्द्रियञ्च। सां. त. कौ. पृ. 236।
6. सां. त. कौ. प्रभा. पृ. 239, मिश्रः आद्याप्रसादः
7. योगभाष्यम् 2/18
8. महदहंकारौ सूक्ष्मेन्द्रियम्, एकादशं स्थूलेन्द्रियाणि योगवार्तिकम् 2, 18।

पञ्च कर्मेन्द्रियाणि मनश्च स्थूलेन्द्रियाणि। व्यासस्य मतं यत् मनः इन्द्रियेण पदार्थानां निश्चयात्मकं ज्ञानं भवति[1]। योगभाष्ये मनसः सर्वार्थग्राहित्वं स्वीकृतम्[2]।

**4. अर्थः–**

न्यायसूत्रे परिगणितेषु द्वादशविधप्रमेयेषु इदं चतुर्थं प्रमेयम्। अर्थशब्दस्य अर्थे नैयायिकेष्वपि वैमत्यं दृश्यते। सूत्रकारः गौतमः अर्थशब्देन पञ्चेन्द्रियाणां ग्रहणं करोति। वैशेषिकदर्शने अर्थशब्दस्य संकेतः द्रव्यगुणकर्मसु विद्यते[3]।

वात्स्यायनानुसारेण आत्मादि द्वादशप्रमेयातिरिक्तानि द्रव्यं, गुणः, कर्म, सामान्यं, विशेषः, समवायादय अपि प्रमेयानि सन्ति किन्तु मोक्षप्राप्तिदृष्ट्या महर्षिणा गौतमेन द्वादशप्रमेयाणामेव गणना कृता।

वात्स्यायनः वैशेषिकदर्शने परिगणितानां षण्णां पदार्थानां गणना प्रमेये एव कृतवान् किन्तु न्यायदर्शने एतेषां चर्चा नास्ति[4]।

**5. बुद्धिः–**

न्यायशास्त्रे बुद्धिः ज्ञानस्य पर्यायवाची[5]। नैयायिकाः आत्मनः विशेषगुणः बुद्धिरिति वदन्ति। अत्र न्यायवैशेषिकमतम्–सूत्रकारः गौतमः उपलब्धिज्ञानयोः पर्यायः बुद्धिरिति मनुते। जयन्तभट्टस्यायमभिप्रायः यत् बुद्धेः व्यवच्छेदकधर्मत्वात् बुद्धेः लक्षणमपि भवति। पर्यायेष्वपि लक्षणत्वं तिष्ठति[6]। केशवमिश्रः वदति यत् "अर्थप्रकाशो बुद्धिः[7]। अन्नंभट्टपादः कथयति यत्–सर्वव्यहारहेतुर्गुणो बुद्धिर्ज्ञानम्[8]।

शिवादित्यः आत्माश्रयप्रकाशकत्वेन बुद्धेर्ज्ञानं भवति इत्यवोचत्। जिनवर्धनानुसारेण अज्ञानरूपान्धकारस्य दीपतुल्य प्रकाशकस्य नाम बुद्धिरिति

---

1. यो. भा. 2, 19।
2. तदेव
3. अर्थ इति द्रव्यगुणकर्मसु वै. सू. 8/2/3
4. अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयं तद्भेदेन चापरि संख्येयम्, अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्संसार इत्यत एतदुपदिष्टं विशेषणेति। न्या. भा. 1/1/9।
5. बुद्धिरुपलब्धिज्ञानमित्यनर्थान्तरम्। न्या. सू. 1/1/15
6. पर्यायप्रयोगस्यैव लक्षणक्षमत्वात्।–न्यायमञ्जरी
7. तर्कभाषा–केशवमिश्रः।
8. तर्कसंग्रहे।

व्यवस्थापितम्। अनुव्यवसायगम्यज्ञानं बुद्धिरिति तर्कदीपिकाकारः। अत्र सर्वप्रथमः इन्द्रियेण सह विषयस्य संयोगः तदनन्तरमयं घटः इत्याकारकं ज्ञानमात्मना सह सम्बद्धं भवति, तदनन्तरं घटज्ञानवानहमित्याकारकमनुव्यवसायात्मकं ज्ञानं भवति। इदमेव न्यायशास्त्रस्य[1] मन्तव्यम्।

सांख्यशास्त्रे "घटमहं जानामीति" अनुव्यवसायात्मकं ज्ञानं वेदान्तमते च "अयं घटः" इत्याकारकमेवानुव्यवसायात्मकं ज्ञानं भवति।

अत्र सांख्याः ब्रुवन्ति–ज्ञानमन्यदुपलब्धिरन्येति तद्भ्रमापनायैवमुच्यते बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमिति। ईश्वरकृष्णः अध्यवसायं बुद्धिमुपैति। ज्ञानवैराग्यैश्वर्यादि तस्य सात्विकं रूपज्ञानमवैराग्यमनैश्वर्यं तस्य तामसं च रूपं भवति।

वैशेषिकदर्शने बुद्धेः भेदद्वयम्–अविद्या विद्या च। अविद्यायाः चत्वारः भेदाः–संशयः, विपर्ययः, अनध्यसयायः स्वप्नञ्चच। विद्याऽपि चतुर्विधा–प्रत्यक्षलैंगिकस्मृतिआर्षभेदात्। विश्वनाथः अन्नंभट्टश्च बुद्धेः भेदद्वयं निदर्शितवान्। यथा–स्मृतिः अनुभवश्च।

**6. मनसः स्वरूपम्–**

केशवमिश्रानुसारेण समवायसम्बन्धेन मनस्त्वजातिः यत्र भवति तन्मनः। मनः अणुपरिमाणकं, आत्मना संयुक्तम्, सुखदुःखादिकरणकम्, नित्यं च। अस्मिन् संख्या, परिमाणं, पृथक्त्वं, संयोगः, विभागः, परत्वापरत्वे, वेगाख्यसंस्कारश्च अष्टौ गुणाः सन्ति। बाह्येन्द्रियाणि मनसः साहाय्येन स्वान् विषयान् गृह्णन्ति। अतः सर्वविषयाणामुपलब्धिकारणं मन एव भवति। अतीन्द्रियत्वात् मनसः साक्षात्कारो न जायते। तद्धि अनुमानेन सिद्धयति–सुखसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षाकारवत् इत्यनुमानेन मनसः करणत्वसिद्धिः[2]।

अत्र विश्वनाथः सुखादि साक्षात्कारे मनः एव करणम्[3]। अन्नंभट्टः[4] अपि

---

1. बुद्धित्वसामान्यवती आत्माश्रयः प्रकाशो बुद्धिः। स. 40 अज्ञानान्धकारतिरस्कारकारक सकलपदार्थस्यार्थप्रकाशकः प्रदीप इव देदीप्यमानः यः प्रकाशः सा बुद्धिः, जानामीत्यनुव्यवसायगम्यज्ञानत्वम्।
2. कारिकावली टीका।
3. साक्षात्कारे सुखादीनां करणं मन उच्यते। कारिकावली का. सं. 85।
4. सुखाद्युपलब्धिसाधनमिन्द्रियं मनः।

तथैव समर्थितवान्। तर्कदीपिकायामपि मनसो लक्षणं स्पर्शरहितत्त्वे सति क्रियावत्वमित्युक्तम्[1]।

**दर्शनेषु मनस्स्वरूपम्–**

येन जगति निखिला:व्यवहारा: प्रवर्तन्ते येन च ज्ञानेच्छासुखादय: सम्पाद्यन्ते यत्र चागते सति दोषे विक्षिप्तोन्मत्तप्रमत्ता:, निर्दोषं च सद्विचारज्ञानशीलसम्पन्ना: भवन्ति तस्यैव नाम मन: इति। "चेत: समुत्कण्ठ्यते" इति कालिदासोक्तवचनरीत्या अत्र मदीयश्चेत: चित्तविषये किमपि वक्तुं समुत्कथ्यते।

श्रुतिस्मृतिपुराणदर्शनकाव्यनाट्यसाहित्यकलापेषु अहरहरनुष्ठीयमानव्यवहारेषु च उद्देश्यत्वेन मनसो नैकश: उल्लेखं विद्यते। प्रायश: सर्वैरपि दार्शनिकै: तत्त्वविद्भिश्चायं पदार्थ: उद्देशलक्षणपरीक्षा वाग्व्यवहार: विषयीकृत:।

1. संगच्छध्वं संवदध्वं सम्वो मनांसि जानताम् .........
2. तन्मे मन: शिवसंकल्पमस्तु .........
3. चन्द्रमा मनसो जाता .........
4. चञ्चलं हि मन: कृष्ण .........
5. मनो दुर्निग्रहं परं .........
6. मनस: काममाकूतिं वाच: .........
7. मन एव मनुष्याणां कारणं .........
8. मेरो मन अनत कहाँ सुख पावै .........

इत्यादि बहुविकारधनेषु स्वकीय सिद्धान्तरीत्या मन: प्रतिपादितम्। तत्र न्यायदर्शनेऽपि द्वादशविधव्यापी एकदेशवर्ति वा, इन्द्रियमनिन्द्रियं वा, द्रव्यमद्रव्यं वा नित्यमनित्यं वा परिच्छिन्नमपरिच्छिन्नं वेति। प्रथमं मनस्वरूपम् तत: तत्परिमाणादिविषयो प्रतिपादयिष्यते।

तत्र तावन्नैयायिकै: घटपटादिबाह्यवस्तुप्रत्यक्षे यथा चक्षुरादीन्द्रियाण्यपेक्ष्यन्ते तथैव ज्ञानसुखदु:खेच्छाद्वेषप्रयत्नादीनां प्रत्यक्षार्थं साधनत्वेन मन: अपेक्ष्यते इति प्रतिपादितम्। एतत्सादृश्येनैव सकलान्यपीन्द्रियाणि विषयानवगच्छन्ति। एतस्यानवधाने इन्द्रियार्थसन्निकर्षेऽपि पश्यन्नपि न पश्यतीतिवत् ज्ञानं न सञ्जायते। एवं एतन्माध्यमेनैव

1. तर्कदीपिका।

सुखादीनामुपलब्धिः। तदुक्तं भाषापरिच्छेदे–"साक्षात्कारे सुखादीनां करणं मन उच्यते" इति "सुखाद्युपलब्धिसाधनमिन्द्रियं मनः इति अन्नंभट्टः। स्पर्शरहितत्त्वे सति क्रियावत्वमिति तर्कदीपिकायाम्, मनस्त्वजातिमत्वमिति तर्कभाषाकृद्भिः केशवमिश्रैः निगदितम्। यदि मनो न स्वीक्रियते चेत्तर्हि ज्ञानेच्छादीनामुत्पत्तिरपि न स्याद्यतः पुरीतत् नामक नाडीप्रदेशात् बहिः शरीरावच्छेदेन यदा आत्ममनसोः संयोगः तदानीमेवात्मगुणानामुत्पत्तिः सञ्जायतेऽतो मनोऽपरिहार्यमिति। परञ्च अतीन्द्रियत्वात् तस्य प्रत्यक्षं न जायतेऽपितु अनुमानं क्रियते। अनुमानस्वरूपमेवम्–

सुखादिकं चक्षुरादिभिन्नेन्द्रियग्राह्यं चक्षुराद्यभावेऽपि ग्राह्यत्वात् कुठारभिन्न वह्निजन्यपाकक्रियावत्।

सांख्यशास्त्रे मनो नाम इन्द्रियाणां नियन्त्रकः, ज्ञानेन्द्रिकर्मेन्द्रियोभयोः कार्यसम्पादकत्वादस्य उभयेन्द्रियत्वेन व्यवहारः। लक्षणन्तु संकल्पविकल्पात्मकत्वे सति मनस्त्वजातिमत्वमिति तदुक्तं ईश्वरकृष्णेन–

उभयात्मकमत्र मनः संकल्पमिन्द्रियञ्च साधर्म्यात्।
गुणपरिणाम विशेषान्नानात्वं बाह्यभेदाश्च॥

अत्रेदमाशंक्यते यद् अचेतनं मनः कथं संकल्पविकल्पात्मकं चेतनकार्यं कर्तुं समर्थः इति तत्समाधीयते यथा तप्तायः पिण्डः वह्निभिन्नः सन्नपि वह्निसंयोगात् अग्निमत्पिण्डः इति व्यवह्रियते तथैवाचेतनं मनोऽपि चेतनपुरुषस्य संयोगात् चेतनगुणैर्युक्तं चेतनवत् प्रतीयते।

तत्त्वतः सांख्ययोगयोः न पार्थक्यं तथापि मनसस्वरूपविषये उभयोः मतभेदः दृश्यते, प्रायशः तत्परिमाणमादायासहमतिः नित्यत्वविषये च सहमतिरित्यनयोः निष्कर्षः।

मीमांसकमतेऽपि तार्किकसिद्धान्तानुकूलं सुखदुःखादिप्रत्यक्षकरणत्वेन अन्तरिन्द्रियरूपेण च मनः अभ्युपगम्यते। उक्तञ्च प्रभाकरेण प्रकरणपञ्चिकायां–मनसोऽभ्युपगमे सकलात्मगुणोदय एव प्रमाणम्। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना-दृष्टसंस्काराणां नवानामपि वैशेषिकगुणानां मनः संयोगेनैवोत्पत्तेरिति।" तत्र प्रभाकरमते आत्ममनसोः संयोगः ज्ञानस्यासमवायिकारणम्, आत्मा च समवायिकारणमिति उभयोः संयोगः आत्मनः प्रयत्नेन पूर्वजन्मोत्पन्नादृष्टेन वा भवति आत्मानं स्वविशेषगुणानां ज्ञानं मनसैव जायते।

भट्टमतेऽपि सुखादिसाक्षात्कारकरणत्वेन इन्द्रियत्वेन च मनसः सिद्धिः। तदुक्तं श्लोकवार्तिके–

**मनसस्त्विन्द्रियत्वेन प्रत्यक्षा धीः सुखादिषु।**
**मनसा संप्रयुक्तो हि तानात्मा प्रतिपद्यते॥**

अद्वैतवेदान्तरीत्या मनः अन्तःकरणरूपमेव मनबुद्धिचित्ताहंकारादि नाम्ना व्यवह्रियमाणः अन्तःकरण एव वृत्तिभेदेन सुखदुःखबन्धमोक्षादीनां हेतुः सञ्जायते। अन्तःकरणमेव संशये सति मनः, निश्चये सति बुद्धिः, गर्वे सत्यहंकारः, स्मरणे सति चित्तमिति विविधरूपेण व्यपदिश्यते। तदुक्तं ब्रह्मसूत्रशाङ्करभाष्ये-

**वृत्तिभेदेन मनोबुद्ध्यहंकारचित्तव्यपदेशीभजनमतः।** 2/4/17

सुखदुःखबन्धमोक्षादिसर्वव्यवहारकारणं व्यवहारमात्रस्यैवान्तःकरणवृत्तिविशेषजन्यत्वादित्यद्वैतवेदान्तिनः प्राहुः।

एतन्मते अहमहमित्याकारिकया वृत्या संशयनिश्चयादिधर्मभूतस्य मनसः प्रत्यक्षो जायते। केचन वेदान्तिनः मनसः इन्द्रियत्वं न सहन्ते इति ब्रह्मसूत्रशाङ्कर-भाष्ये लिखितम्, परञ्च तेऽपि तस्य कारणत्वपक्षे एकमतमेव। वस्तुतस्तावत् वेदान्तिमतेऽन्तःकरणरूपमेव मन इति सुस्थिरः सिद्धान्तः।

विशिष्टाद्वैतवादिरामानुजमते मनः सांख्यवन्नोभयेन्द्रयमपितु पञ्चज्ञानेन्द्रियवत् ज्ञानेन्द्रियमेव, स्मृत्यादीनां कारणत्वेन तस्येन्द्रियत्वम्। एक एव मनः वृत्तिभेदेन बुद्धिचित्ताहंकारादिनाम्ना बुध्यतेऽयमस्ति रामानुजीयानां निष्कर्षः।

चार्वाकमते यथा शरीरातिरिक्तं नास्ति आत्मा तथैव मनोऽपि न विद्यते।

जैनदर्शने मनः स्वीक्रियते परञ्च तस्य नेन्द्रियत्वेन व्यवहारः। सकलान्यपि बाह्येन्द्रियाणि स्वविषयग्राहकत्वादिन्द्रियाणीति रूपेण व्यवह्रियते परञ्च मनः सर्वार्थग्राहकत्वेऽपि नेन्द्रियमिति जैनराद्धान्तः। एतन्मते द्विविधं मनः-द्रव्यमनः भावमनश्च। कर्मसंघातादुत्पद्यते यन्मनः तद्द्रव्यमनः यच्च चेतनापरपर्यायभूतं तद् भावमन इति।

वस्तुतः जैनदर्शनेन मनसः इन्द्रियत्वं विखण्ड्य द्वैविध्यं च प्रतिपाद्य तत्स्वरूपमस्पष्टं गौरवग्रस्तञ्च कृतम्।

बौद्धदर्शनेऽपि देहबुद्ध्यतिरिक्तत्त्वेन मनः कल्प्यते परिगणितेषु द्वादशविधायतनेषु इदं मनोऽन्यतमं स्थानं विभर्ति। तदुक्तं शान्तरक्षितेन-

**ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च।**
**मनो बुद्धिरिते प्रोक्तं द्वादशायतनं बुधैः॥**

अत्रेदं चिन्त्यं यदेतन्मते तत्त्वविज्ञानाद्यतिरिक्तं मनः किञ्चिदपि न।

उक्तञ्च तत्त्वसंग्रहे—"षण्णानन्तरोद्भूतप्रत्ययो यो हि तन्मनः।" मानसिकप्रक्रियाणां समूह एव मनः इति बौद्धचिन्तनम्। तत्र मनसि उद्देश्यपरं वस्तुपरञ्चेति भेदेन तत्त्वद्वयं विद्यते। उद्देश्यपरं तत्त्वं मनः चित्तं विज्ञानेति संज्ञया व्यवह्रियते, वस्तुपरं तु चेतना वेदना संज्ञा सत्कार मानसिक प्रक्रियायुक्तं भवति।

एवं बौद्धदृष्ट्या मानसिकप्रक्रियाणां मिश्रणमेव मनः इति सुस्थिरः राद्धान्तः।

**मनसःपरिमाणम्**

नैयायिकमते मनोऽणुरेव यतः यदि मनसः विभुत्वं स्यात्तर्हि आत्मनः व्यापकत्वेन विभुद्वयस्य संयोग एव न स्यात् तर्हि किञ्चिदपि ज्ञानं नोत्पद्येत, यदि च संयोगः स्यात्तर्हि एककालावच्छेदेन सर्वं ज्ञानमुत्पद्येत न भवत्येवमपितु ज्ञानं क्रमशः उत्पद्यतेऽतः मनो न विभुरिति नैयायिकसिद्धान्तः। तदुक्तं भाषापरिच्छेदे— "अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते। एवमेतन्मते प्रतिशरीरं मनः एक एव। न च एककालावच्छेदेन बहूनि कार्याणि कथमिति चेत् तर्हि नहि तत्र मनसः बहुत्व- मपितु एक एव मनः द्रुतगतित्त्वात्सर्वं सम्पाद्यते परञ्च तत्रापि पौर्वापर्यभावः विद्यते।

द्रुतत्त्वान्न प्रतीतिः। यथा शतपद्मपत्रभेदने पौर्वापर्यभावः आद्ये च कालभेदः न प्रतीयते परञ्च अन्तिमे प्रपत्रपत्रयोः मध्ये भेदनकाले पञ्चाशतक्षणानां व्यवधानः तथैवात्रापि बोध्यम्। अतः मनः एक एव। तदुक्तम् अन्नंभट्टेन "सुखाद्युपलब्धि साधनमिन्द्रियं मनः, तच्च प्रत्यात्मनियतत्त्वादनन्तं परमाणुरूपं नित्यञ्च।" एतेन मनसः नित्यत्वमपि प्रतिपाद्यते। सांख्यदृष्ट्या ज्ञानेन्द्रियकर्मेन्द्रियमनसांचोत्पत्तिः सात्विकाहंकाराद् भवति। अतः कार्यत्वात् मनः अनित्यम् (प्रकृतिपुरुषस्यसर्वमनित्य- मिति निर्देशात् सां. सू. 5/72) यथा अनित्यमृत्पिण्डान्निर्मितः घटोऽप्यनित्यः तथैव महदनित्यमिति मनोऽप्यनित्यमेव। परिमाणदृष्ट्या तु सांख्यैः मनसः संकोचविकास- शालित्वान्मध्यमपरिमाणं निरूपितम्।

योगदर्शने तु सांख्यदर्शनवन्नमध्यमपरिमाणकमपितु विभुपरिमाणवन्मनः इति निर्णयः। विभुपरिमाणं स्वीकृते सति प्रति जीवः सर्वज्ञः स्यादिति न शंकनीयम् यतः प्रतिशरीरवृत्तिमनसः प्रवृत्तिरदृष्टवशात् विशिष्टविषय एव भवति अतो न सर्वज्ञत्वापत्तिः। उक्तञ्च व्यासभाष्ये—"वृत्तिरेवास्य विभुःसंकोचविकासिनीत्या चायं तच्च धर्मादिनिमित्तापेक्षमिति। आचार्यविज्ञानभिक्षुनापि योगवार्तिके विभुत्वं

प्रतिपादितम्—धर्माधर्मवासनाश्रयतया प्रतिपुरुषमन्तःकरणं नित्यम्। तच्च नाणु सम्भवति योगिनां सर्वावच्छेदेन एकदा अखिलसाक्षात्कारसम्भवात्, नान्तःकरणं मध्यमपरिमाणवत् प्रलये विनाशेन धारणानुपपत्तेः। अतः परिशेषतोऽन्तःकरणं विभु एव सिद्ध्यति।

वाचस्पतिमिश्रेणापि तत्त्ववैशारद्यां निगदितम्—

एतन्मते मनः नित्यं किन्त्वत्र जिज्ञासोदेति यत् नित्यं त्वजन्यं भवति इदं खलु सात्विकाहंकारजन्य अतो न नित्यमिति न वाच्यं यतः एतत्समाधानं विज्ञानभिक्षुना एवं कृतम्—

कार्यकारणरूपभेदेन मनसः द्वैविध्यमिति कार्यरूपेण मनः अनित्यं कारणरूपेण च नित्यमिति योगसिद्धान्तः।

मीमांसकप्रवरप्रभाकरमतानुसारेण मनः अणुपरिमाणवद् भवति। यदि मनः विभुः स्यात्तर्हि उभयोः संयोग एव न स्यात् किमपि ज्ञानं नोत्पद्येत अतः मनोऽणुरेव। अणुत्वान्नित्यमपि।

मनश्चान्तःशरीरं परमाणुपरिमाणम्। तत् खलु द्रव्यभूतं संयोगगुण-भावितमिष्यते।

भाट्टानुसारेण नेदमणुरपितु विभुः, उक्तं मानमेयोदये-

मनस्तु विभु तद्देहे च कार्यावहमिति" इदं तादृशं द्रव्यं यदात्मवत्स्पर्शशून्यं विभु विद्यते। परञ्च मनसः विभुत्वे तस्य यदा इन्द्रियेण सह सन्निकर्षः तदा ज्ञानमिति वक्तुं न शक्यते यतः विभुत्वात् तस्य सर्वत्र संयोगस्स्वत एव सिद्धः। तथा च एककालावच्छेदेन सकलविषयाणां ज्ञानं स्यादिति चेन्न यतः यथा विभुरपि आत्मा शरीरोपाधिमाध्यमेन इन्द्रियेण सह सम्बद्धः दृश्यते तथैव मनोऽपि शरीररूपोपाधिना इन्द्रियेण सह सम्बद्धत्वान्न काचिदापत्तिः।

अद्वैतवेदान्तमते तु "तन्मनो कुरुत" एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च" इति श्रुत्या मनसः अनित्यत्वं परिच्छिन्नत्वं प्रतिष्ठापितम् सहैव मनसः भौतिकत्वमपि साधितम्।

रामानुजदर्शनेऽपि अन्तरिन्द्रियं परिच्छिन्नं मनः एक एव। तदुक्तं ब्र.सू. श्रीभा. 4/23

रामानुजीयानां वेदान्तिनां मते एकमेवान्तःकरणं मनः।

तच्चान्तरिन्द्रियं सांख्यमतवदेव सात्विकाहंकारोवादनकं परिच्छेदञ्च।

**7. प्रवृत्तेः स्वरूपम्–**

न्यायसूत्रकारेण प्रमेयेषु मध्ये प्रवृत्तेरपि गणना कृता विद्यते। प्रवृत्तिः प्रायः त्रिधा भवति–वाचा, मनसा, शरीरेण च। सा च प्रवृत्तिः धर्माधर्मजनिका। सूत्रकारः वाक्शरीराभ्यां सह बुद्धिशब्दस्य प्रयोगं कृतवान्[1]। किन्तु वात्स्यायनः वदति–मनोऽत्र बुद्धिरित्यभिप्रेतम्।

किमपि कार्यात् प्राक् तत्फलस्य ज्ञानं भवति तदनन्तरं फलेच्छा भवति तदनन्तरमभीष्टसाधनताज्ञानं तदैव उक्तकार्ये प्रवृत्तिः भवति।

सा च प्रवृत्तिः पुण्यात्मिका पापात्मिका च। पुण्यात्मिका प्रवृत्तिस्तावत्–शरीरेण दानं परित्राणं परिचरणं चेति, वाचा सत्यं हितं प्रियं स्वाध्यायञ्चेति, मनसा दयामस्पृहां श्रद्धां चेति, सेयं धर्माय[2]। पापात्मिका प्रवृतिश्च शरीरेण प्रवर्तमानो हिंसा–स्तेय–प्रतिषिद्धमैथुनान्याचरति, वाचाऽनृतपरुषसूचनाऽसंबद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यञ्चेति सेयं पापात्मिकाप्रवृत्तिरधर्माय[3]।

**8. दोषस्वरूपम्–**

सूत्रकारः गौतमः दोषस्य लक्षणमुक्तवान् "प्रवर्तनालक्षणा दोषाः[4]" इति। दोषस्य त्रयो भेदाः–रागः द्वेषः मोहश्च। येन विषयेष्वासक्तिः सः रागः। कामः, स्पृहा, तृष्णा, लोभः, माया, दम्भश्च रागस्य भेदाः।

येन विषयाद्विरक्तिः भवति सः द्वेषपदवाच्यः। द्वेषस्य भेदाः–क्रोधः, ईर्ष्या, असूया, द्रोहः, अमर्षादयः। येन च कस्यचिद् विषयस्य सम्बन्धे भ्रान्तिर्जायते सः मोहः। यथा–संशयः, विपर्ययः, तर्कः, प्रमादादयः।

**9. प्रेत्यभावस्वरूपम्–**

नैयायिकानामयं सिद्धान्तः यत् मृत्युना आत्मनः नाशो न भवति। उद्योतकराणां मते[5] आत्मनः अन्यशरीरे संक्रान्तिरेव प्रेत्यभावः। गौतमेन उक्तं यत्–"पुनरुत्पत्तिः

---

1. प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः। न्या.सू.– 1.1.7
2. न्यायभाष्यम्–1/1/2
3. तदेव
4. न्या.सू. 1/1/18
5. पूर्वोत्पन्नशरीरादिपरित्यागादन्यशरीरसंक्रान्तिःप्रेत्यभावः। न्या. वा. 1/1/19।

प्रेत्यभाव:"[1]। वात्स्यायन: सूत्रकाराणामाशयं स्पष्टयति–उत्पन्नस्य क्वचित् "सत्वनिकाये मृत्वा या पुनरुत्पत्ति: स प्रेत्यभाव:। मृत्वा पुनर्जन्म प्रेत्यभाव:। सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्त:प्रेत्यभावो वेदितव्य[2] इति जन्म-मरण-परम्परा च अनादि:। अत्रेयमाशंका यत् जीवात्मा यदि नित्य: तदा पुनर्जन्मना सह तस्य सम्बन्ध: कथं भवति? एतस्य समाधानं ददाति वात्स्यायन:–उत्पन्नस्य सम्बद्धस्य सम्बन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभि:पुनरुत्पत्ति: पुनर्देहादिभि: सम्बन्ध:[3]।

## 10. फलस्वरूपम्–

इदानीं फलस्य लक्षणं वदति सूत्रकार:। यथा–"प्रवृत्तिदोषजनितोऽर्थ: फलम्"[4] फलस्य अर्थ: भवति सुखदु:खादि साक्षात्कार:। तदेतत्फलमुपात्तमुपात्तं हेयं, त्यक्तं त्युक्तमुपादेयमिति नास्य हानोपादयोर्निष्ठापर्यवसानं वास्ति स खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक:[5]।

फलं कर्मजन्यं भवति। केषाञ्चित् कर्मणां फलं सद्य एव मिलति। केषाञ्चित् कर्मणां कालान्तरे, केषाञ्चिच्च जन्मान्तरे फलं मिलति। "स्वर्गकामो यजेत" इत्यस्य कर्मण: फलं जन्मान्तरे उपलभ्यते। अत्रेयं शंका जायते यत् यथा मूलसिंचनात् शाखादिषु फलमुपलभ्यते किन्तु एकेन शरीरेण कृतस्य यज्ञस्य फलमपरस्मिन् शरीरे कथं सम्भवति? अत्र समाधानम्–सुखमात्मनि एव तिष्ठति[6]। आत्मा च नित्य:। यज्ञादिकर्म तत्फलञ्च एकस्मिन्नेवाश्रये तिष्ठति। अत: जन्मान्तरेऽपि तत्फलं प्राप्तुं शक्यते। यागादिकर्मण: धर्माधर्मात्मकमदृष्टं संस्कारश्च उत्पद्यते, येन जन्मान्तरे स्वर्गादिफलं सम्भवति[7]।

भाष्यकार: वात्स्यायन: कथयति यत्–पुत्रादि सम्बन्धात् फलं प्रीतिलक्षणमुत्पद्यते इति पुत्रादिषु फलवदुपचार: यथान्ने प्राणशब्दोऽन्नं वै प्राणा[8] इति।

---

1. न्या. सू. 1/1/19।
2. न्या. भा. 1/1/19।
3. तदेव।
4. न्या.सू. 1/1/20।
5. न्या.सू.भा. 1/1/20
6. प्रीतेरात्माश्रयत्वादप्रतिषेध:। न्या. सू. 4/1/52।
7. ससाधनसुखदु:खोपभोग: फलम्–न्या. भा. 1/1/9।
8. न्या. भा. 1.1.20

**11. दुःखस्वरूपम्–**

येन पीडानुभूतिर्जायते तद्दुःखम्। अन्नंभट्टमतेन–"सर्वेषां प्रतिकूलवेदनीयं दुःखम्"[1]। दुःखस्योत्पत्तिरधर्माज्जायते इति विश्वनाथः। सांख्यशास्त्रे दुःखस्य त्रयो भेदाः वर्णिताः। आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च। केशवमिश्रः दुःखस्य एकविंशति भेदाः कथितवान्। शरीरम्, 6 इन्द्रियाणि (घ्राणरसनाचक्षुस्त्वक्श्रोत्रमनांसि) 6विषयाः (गन्धरसरूपस्पर्शशब्दयोग्यात्मगुणाः) 6 विषयस्य इन्द्रियजन्यानुभवः, सुखम्, दुखञ्च। सूत्रकारःदुःखस्य लक्षणं कृतवान्–"बाधनालक्षणं दुःखम्[2]" इति।

**12. अपवर्गस्वरूपम्–**

न्यायदर्शने तत्त्वज्ञानान्निःश्रेयसाधिगमः इति प्रतिपादितम्। एवञ्च द्वादशविधप्रमेयेषु अपवर्गस्यापि गणना विद्यते। अपवर्गस्यार्थः भवति–मोक्षः। मोक्षस्य च अर्थः–एकविंशति दुःखेभ्यो आत्यन्तिकी निवृत्तिः[3]। सूत्रकारानुसारेण दुःखजन्मप्रवृत्तिदोषादीनामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः भवति। वात्स्यायनः सूत्रकारस्याभिमतं स्पष्टयति–तत्त्वज्ञानात् मिथ्याज्ञानस्य नाशः, मिथ्याज्ञाननाशाद् दोषनाशः, दोषापाये प्रवृत्यपायः, प्रवृत्यपाये जन्मापायः, जन्मापाये दुःखनाशः इयमेवात्यन्तिकी दुःखनिवृत्तिः[4]। "तदत्यन्तविमोक्षोऽपवर्गः[5]" इति न्यायसूत्रकारः।

केशवमिश्रानुसारेण शास्त्राणां यथोचिताध्ययनेन मनुष्यः तत्त्वज्ञानवान् भवति। तत्त्वज्ञानेन विषयेषु दुःखानुविद्धता प्रतीयते। ततः तस्माद्विरक्तिः मुक्तेः इच्छा च प्रादुर्भवति। ततः आत्मचिन्तने प्रवृत्तो भवति, चिन्तनपरिपाकात् आत्मसाक्षात्कारानन्तरं रागद्वेषमोहाविद्यास्मितात्मकानां पञ्च क्लेशानां नाशः एवमेवोत्तरोत्तर क्रमेण शरीरादि एकविंशतिदुःखनिवृत्यनन्तरं मोक्षो[6] जायते।

वैशेषिकदर्शने आत्मगुणानामुच्छेद एव मुक्तिः। सांख्याः वदन्ति यत् स्ववास्तविककूटस्थ चैतन्ये पुरुषस्यावस्थितिरेव मोक्षः। योगदर्शनेऽपि एवमेव

---

1. तर्कसंग्रहे।
2. न्या. सू. 1/1/21।
3. दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः। न्या. सू. 1/1/2।
4. यदा निवर्त्य सजातीयस्य दुःखस्य पुनस्तत्रानुत्पादः। सर्वदर्शनसंग्रहः।
5. न्या. सू. 1/1/22।
6. तर्कभाषा।

मोक्षः प्रतिपादितः। मीमांसकानां मते नित्यसुखाभिव्यक्तिरेव मोक्षः। अद्वैतवेदान्तिनां मते अविद्यायाः निवृत्युपलक्षितं "सच्चिदानन्दब्रह्म" एव मोक्षः। चार्वाकमते मृत्युरेव मोक्षः। बौद्धानां मते ज्ञाने आर्यचतुष्टयस्य प्राप्तिपूर्वकं विषयकालुष्यनिराकरणमेव निर्वाणम्। जैनानां मते सम्यक् ज्ञानदर्शनचारित्र्येण आत्मनः वास्तविकं स्वरूपं ज्ञात्वा सर्वकर्मक्षयानन्तरमात्मनः यदूर्ध्वगमनं भवति स एव मोक्षः।

## न्यायाभिमता कथा

प्रमाणैः प्रमेयतत्त्वानां परीक्षणं क्रियते। तत्र परीक्षणे विचाराः प्रस्तूयन्ते। तत्र कमपि विषयमवलम्ब्य तत्र केनापि पूर्वपक्षतया विषयोद्भावनं क्रियते, तदनन्तरञ्च तत्पक्षे दूषणं दत्वा तद्विरोधिपक्षस्य स्थापना क्रियते स पक्षः उत्तरपक्षः प्रतिवादिपक्ष इति शब्देन वर्ण्यते। प्रथमपक्षश्च वादिपक्षः पूर्वपक्षतया प्रतिपादितो भवति। तत्र वादिप्रतिवादिनोः यो हि पक्षः विचाररूपेण प्रदर्शितो भवति तस्यैव कथेति संज्ञा। सा च कथा तत्त्वावधारणकामनया पूर्वपक्षोद्भावनपुरःसरं उत्तरपक्षस्थापनस्वरूप वाक्यसन्दर्भरूपा। एष कथाशब्दः कथ् धातुना भावार्थकेन अङि टापि च कृते निष्पन्नः भवति। इयमेव कथा गौतमीये आन्वीक्षिकी शास्त्रे वादजल्पवितण्डाभेदेन त्रिविधतां भजते।

यद्यपि कथाशब्देन महर्षिणा गौतमेन उल्लेखः न कृतः परन्तु तद्व्याख्याकर्तृणा आचार्यप्रवरेण वात्स्यायनेन स्वीये भाष्ये कथाशब्देन उल्लेखः कृतमस्ति। "तिस्रः कथाः भवन्ति–वादो जल्पो वितण्डा[1] चेति।"

### वाद–जल्प–वितण्डानां स्वरूपप्रतिपादनम्–

कथायाः त्रयो भेदाः। वादः जल्पः वितण्डा च। तत्र कां नाम कथा इति विचारणीयमस्ति। कथा शब्दः "कथ्" धातुना "चिन्तिपूजिकथिकुम्बिचर्चश्चेति[2]" सूत्रेण अङ् प्रत्यये स्त्रीत्व विवक्षायाम्–अजाद्यतष्टाप्[3]" इति सूत्रेण टाप् प्रत्यये कृते निष्पद्यते। कथ् धातोरर्थः भवति–वाक्यप्रबन्धः। अमरकोशे[4] कथा शब्दस्य अर्थः प्रबन्धकल्पना इत्यस्ति। अयमभिप्रायः वर्तते प्रबन्धस्य अभिधेयः अथ च कल्पनाया अभिप्रायः–स्वयं रचना इति। कथा शब्दस्य सम्पूर्णः अर्थः भवति

1. गौतमकृतं न्यायदर्शनम् 1/2 प्रथमसूत्रभूमिका,
2. अष्टाध्यायी 3/3/105।
3. अष्टाध्यायी 4/1/4।
4. प्रबन्धकल्पना कथा–अमरकोशः, प्रथमकाण्डः शब्दादिवर्गः।

प्रबन्धस्य अभिधेयस्य वा रचना इति।

शब्दकल्पद्रुमे[1] कथापदार्थः–वार्ता, वाक्यं, विवरणञ्च निर्दिष्टो वर्तते। प्राचीनकाले कथापदार्थबोधनार्थम् "आख्यानं" शब्दः व्यवहृतः। आख्यानशब्दः ख्या धातुना" कृत्यल्युटो बहुलम् [2]" इत्यनेन ल्युटि निष्पद्यते। यस्यार्थः–कथनं निवेदनं वा। महर्षिणा पतञ्जलिना [3] कथा अर्थे आख्यानशब्दः व्यवहृतः। एवञ्च यावक्रीतिकः, प्रसङ्गविकः, यायातिकश्च त्रीण्युदाहरणानि उपस्थापितानि सन्ति। कथायामस्यां पशुद्वारा पक्षिद्वारा वा नीतेराचारस्य वा शिक्षाकर्त्तव्ययोरुपदेशः कृतः।

वैदिकसाहित्ये कथा शब्दस्य प्रयोगः न दृष्टिगोचरः किन्तु तत्स्थानापन्नः गाथा सूक्तादयः शब्दाः व्यवहृताः विद्यन्ते। यस्यां गाथायां भारतीयकथायाः मूलरूपं अन्तर्हितं विद्यते। उत्तरवैदिककाले आख्यानमाख्यायिकान्वाख्यानादि शब्दः तदर्थं प्रयुक्तोऽस्ति।

भगवता पतञ्जलिना आख्यानं काल्पनिककथा आख्यायिकाश्च ऐतिहासिककथा व्यवहृतः। कात्यायनानुसारं यावक्रीतिकः काल्पनिका कथा, प्रसङ्विकः–नीतिकथा, यायातिकश्च वैयक्तिकी कथा विद्यते। ऐतरेयब्राह्मणे "शुनः शेपाख्यानं [4]" कथा गाथाया एव उदाहरणम्।

वैदिकसंहितायां यद्यपि कथा[5] शब्दस्य व्यवहारः विद्यते तथापि तत्र "कथमर्थे"कथायाः व्यवहारः न तु कथा अर्थे। वैदिकसाहित्ये कथा[6] अर्थे आख्यानमाख्यायिकान्वाख्यानशब्दानां प्रयोगः सञ्जातः। प्राचीनकाले कथाशब्दस्य प्रयोगः "चर्चा" रूपेऽभवत्[7]। बौद्धसाहित्ये कथाशब्दस्य प्रयोगः "अन्तर्कथा" अर्थे सञ्जातः। बौद्धविज्ञाने तिस्म मोग्गलिपुत्तरचिते "कथावत्थु" "धातुकथा" ग्रन्थयोः

1. शब्दकल्पद्रुमः, द्वितीयभागः –पृ. 17।
2. अष्टा. 3/3/113।
3. आख्यानाख्यायिकेति पुराणेभ्यश्च–वार्तिकम्–अष्टाध्यायी 4/2/60।
4. ऐत. ब्रा. 33/3–6।
5. कथा राधामसखायः स्तोमं मित्रस्यार्यम्णः। स. 1/8/41/7।
अक्रन्द्रयोनघोरो अवब्दना कथा न क्षोणीर्भिय सा स भारत–स. 1/54/1।
त्विदासीदधीष्ठानमारम्भणं कतमत् स्वित्कथासीत्–माघ. सं. 17/17।
6. ऐत. आर. 5/3/2 कथां वदेत् नास्य रात्रौ 30 कथां न वदेत् लौकिकवार्तां न कुर्यात्–सायण।
7. मोनियर विलिम्यस्म संस्कृत इंगलिश डिक्शनरी, आक्सफोर्ड पृ. 99।

कथाशब्दः प्रयुक्तः किन्तु अनयोः ग्रन्थयोः कथाशब्दः चर्चाऽपरपर्य्याय[1] एव।

प्राचीनभारते लोककथायाः अत्यधिकः प्रचारः आसीत्[2]। श्रीअलेक्जेण्डर-क्रापमहोदयैः लोककथायामन्यकथाया अपि समावेशः कृतः[3]।

यथा–

1. परीकथा, अद्‌भुतकथा वा
2. नर्म कथा
3. प्राणिकथा
4. स्थानीयकथा
5. परिभ्रमणकथा
6. लोककथा
7. वीरकथा, वीरगाथा
8. वनस्पतिकथा इत्यादि अनेकाः कथाः संकलिताः।

उपर्युक्तासु कथासु प्राणिकथा अपि संकलिता विद्यते। लोकसाहित्ये कथासाहित्यस्य अपूर्वस्थानमस्ति। तेनैव सह अद्‌भुतकथायाः, कल्पितकथायाः, प्राणिकथायाः, नीतिकथायाश्च सम्बन्धः विद्यते। प्राचीनकालादेव "गाथा, कथम्" अर्थे प्रयुज्यमानः कथाशब्दः आयुर्वेदस्य प्रसिद्धे चरकग्रन्थे "चर्चाविचारयोः" अर्थयोः प्रयुक्तः। चरकग्रन्थेऽपि न्यायशास्त्रस्य विविधकथायाः उल्लेखः दृश्यते। किन्तु तत्र वर्णनप्रणाल्यां कश्चन भेदः। महर्षिचरकः कथायाः अर्थे "सम्भाषा" शब्दस्य प्रयोगं चकार। तस्याः सम्भाषायाः भेदद्वयम्–(क) सन्धायसम्भाषा (ख) विगृह्यसम्भाषा च। सन्धायसम्भाषा न्यायशास्त्रस्य वादकथास्थानापन्नः। विगृह्यसम्भाषायाः भेदद्वयम्–जल्पः, वितण्डा च। इत्थं प्रकारेण चरकस्य विगृह्यसम्भाषा अथ च न्यायस्य विजिगीषु कथा समानार्थक एव प्रतिभाति।

जैनास्तावत् वादरूपैव कथा मन्यन्ते। न तु जल्पवितण्डे कथे अपितु ते कथाभासरूपे। अस्य विस्तृतं वर्णनं "कथात्रयभंग" नामके ग्रन्थे अस्ति।

न्यायशास्त्रे कथायाः स्थानं महत्वपूर्णमस्ति। यद्यपि न्यायसूत्रप्रणेता महर्षिगौतमः स्वीयसूत्रे कथाशब्दस्य नाम्ना उद्देशमुखेन वा न प्रदर्शितवान् तथापि

1. विण्टरनिट्ज इण्डियन लिट्रेचर, पृ. 968, 169, 170।
2. एस. थामसनः "द फोक टेल" 1946।
3. अलेक्जेण्डर क्राप "द साइंस आफ् फाक्लोर" 1930।

तस्याः कथायाः भेदत्रयं वादजल्पवितण्डात्मकं वर्णितवान्। इयं कथा प्राच्यन्यायस्य एकं पारिभाषिकपदमस्ति। कथा च चर्चा, वार्तालापशब्दे प्रयुक्ता विद्यते। पूर्वोत्तरपक्षयोः या वार्ता, चर्चा वा भवति सा कथा। तस्याः तिस्रः भेदाः (क) वादः (ख) जल्पः (ग) वितण्डा च।

तत्र तत्त्वज्ञानजिज्ञासया गुरुभ्यः सब्रह्मचारिभ्यश्च या कथा भवति सा वादकथा। स्वकीयं पाण्डित्यं द्योतनार्थं वादिप्रतिवादीभ्यां या कथा सा जल्पकथा। स्वमतस्थापनपुरःसरं परपक्षखण्डनं जल्पः। एवञ्च यत्र एकेन वादिना स्वमतं स्थापयति अपरञ्च तत्खण्डनमेव करोति स्वमतं च न स्थापयति एतादृशी कथा वितण्डा कथ्यते।

येषां पदार्थानां तत्त्वज्ञानेन मोक्षप्राप्तिः भवति तस्य गणना कृद्भिः महर्षिणा गौतमेन वादजल्पवितण्डानामपि गणना कृता।

एतासां तिसृणां कथानां प्रमेयतत्त्वोपयोगितया महर्षिणा षोडशपदार्थान्तर्गतत्त्वेन गणना कृता।

तथा चोक्तं महर्षिणा–

"प्रमाणप्रमेयसंशयप्रयोजनदृष्यान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम[1]" इति किन्तु कथा सामान्यस्य निर्देशः न कृतः। भाष्यकारः वात्स्यायनः वादादिलक्षकसूत्रोपरि भाष्यप्रयोजनं प्रकटयन् वादजल्पवितण्डाशब्दस्य कथाशब्देन व्यपदेशञ्चकार। तिस्रः कथाः[2] भवन्ति, वादो जल्पो वितण्डा चेति। न च कथा शब्देन वादजल्पवितण्डाया एव कथं ग्रहणमिति वाच्यम्। सूत्रकारः गौतमः अपि निग्रहस्थानप्रकरणे वारद्वयं कथा शब्दस्योल्लेखं कृतवान् "कार्यव्यासंगात् कथा विच्छेदो विक्षेपः" [3] तथा "सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः [4]। निग्रहस्थानं च वादजल्पवितण्डादिभिः सम्बद्धमेव। यथा–वादलक्षणे–सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः आदिशब्दैः जल्पलक्षणे–छलजातिनिग्रहस्थानसाधनोपालम्भ इत्यादि कथनेन स्पष्टमेव प्रतिभाति यत्

---

1. गौतमकृतं न्यायदर्शनम् प्रथमाध्यायात्मकः प्रथमोभागः श्रीमता अनन्तलालठक्कुरेणा सम्पादितं मिथिला विद्यापीठप्रधानेन प्रकाशितम्–ए. डी. 1967, पृ. 2।
2. तदेव 1/2, आ. प्रथमसूत्रभूमिका
3. न्यायदर्शनम् 5/2/19।
4. न्यायदर्शनम् 5/2/23।

निग्रहस्थानसम्बद्धा एव वादजल्पवितण्डात्मिका कथा।

पक्षप्रतिपक्षयोः परिग्रहः समानरूपेण वादजल्पवितण्डासु मान्यः। निग्रहस्थानप्रकरणे मतानुज्ञालक्षिकसूत्रे पक्षप्रतिपक्षयोः स्वपक्षपरपक्षशब्दाभ्यां स्पष्टमेव निर्देशः। यथा– "स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसंगोमतानुज्ञा[1]"।

इदं तु तथ्यम्–परिषद् प्रतिवाद्युभावपि वादजल्पवितण्डासु एव भवतः। कथा अपि परिषद् प्रतिवादीभ्यामेव प्रचलति। पञ्चमाध्यायस्य प्रथमाह्निकस्य पञ्चसूत्राणि श्रीवाचस्पतिमिश्रः "न्यायसूची निबन्धे" इति पञ्चभिः सूत्रैः षट्पक्षीरूप कथाभासप्रकरणम्[2]" इत्युल्लेखं कृतवान्। एतावता इदं ज्ञायते यत् वादजल्पवितण्डा एव कथा शब्दस्य अभिप्रेतार्थः।

अत्रेयं शंका जायते यत् सूत्रकाराभिमतायाः वादजल्पवितण्डायाः कथाशब्दद्वारा कथं न विभागः कृतः। न्यायशास्त्रस्य उद्देशलक्षणपरीक्षामुखेन प्रवृत्तिः भवति। उद्देशं तावत् नाममात्रेण वस्तुसंकीर्तनम्[3] अतः उद्देशात्मिकायाः प्रवृत्तेः ग्रन्थकारेण कथमुपेक्षितमिति। स्वयं भाष्यकारेण न्यायदर्शनस्य प्रथमाह्निके प्रथमपादे तृतीयसूत्रस्य अवतारणायां स्पष्टमेव अभिहितम्–"त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः उद्देशः लक्षणं परीक्षा चेति। तत्र नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः। तत्र उद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मो लक्षणम्। लक्षितस्य यथा लक्षणमुपपद्यते न वा इति प्रमाणैरवधारणं परीक्षा। तत्र उद्दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते, यथा–प्रमाणानां प्रमेयस्य च। उद्दिष्टस्य लक्षितस्य च विभागवचनम्, यथा छलस्य वचनविघातोऽर्थविकल्पोपपत्याच्छलम्, तत्त्रिविधम् इति[4]।

तत्र समाधानमिदं यत् वादलक्षकसूत्रस्य सन्दर्भे भाष्यकारः वदति "तिस्रः कथाः भवन्ति–वादो जल्पो वितण्डाचेति[5]" अयमाशयः यत् यथा वादजल्पवितण्डानां सामान्यरूपेण एकमुद्देश्यमस्ति किन्तु कथा सामान्यस्य न किमपि सामान्यमुद्देश्यम्। यस्य पदार्थस्य किञ्चित् सामान्यमुद्देश्यं भवति तस्यैव पदार्थस्य सामान्यमुद्देश्यमुचितम् यथा–प्रमाणसामान्यस्य फलमस्ति सामान्यरूपेणप्रमायाः

1. न्यायदर्शनम् 5/2/20।
2. न्यायदर्शनम् 5/39-43
3. न्यायसूचीनिबन्धः–5/1/17 पृ. 13।
4. तर्कसंग्रहः।
5. न्यायदर्शनम्–मिथिला विद्यापीठद्वारा प्रकाशितम्–1967, पृ. 181-82।

जननं प्रमेयस्य च स्वज्ञानेन निःश्रेयससम्पादनं फलमिति। एतावता कथासामान्यस्य न किमपि मुख्यं प्रयोजनम् अपितु वादस्य प्रयोजनमस्ति—तत्त्वनिर्णयः। जल्पवितण्डयोः प्रयोजनम्—तत्त्वनिर्णयस्य रक्षा विजयश्च। उपर्युक्तेषु तत्त्वनिर्णये, तद्रक्षा विजयेषु प्रयोजनेषु यथा सामान्यस्य नैकमपि प्रयोजनमतः कथा सामान्यस्य लक्षणं सूत्रकारेण नाभिहितम्।

उदयनाचार्येण न्यायपरिशुद्धौ निगदितम्—"अथ सूत्रकृतैव कथा कथं साक्षात् नोद्दिष्टा, विवक्षितफले एकानेकत्वानुरोधेन सामान्यविशेषयोर्यथायथमुद्देशात्? तद्यथा चतुर्षु प्रमैव विवक्षितं फलमिति प्रमाणत्वेन, सैव द्वादशविषयिणी विवक्षितेति प्रमेयत्वेन हानमेव विवक्षितमिति सुखं दुःखत्वेन। इह तु तत्त्वनिर्णयः जल्पे स्वशक्तिपराशक्तिख्यापनम्, वितण्डायां परकीया शक्तिमात्रप्रख्यापनं च फलानि विवक्षितानि, तानि च न कथामात्रसाध्यानीति विशेषत एवोद्देशः[1]।

वादजल्पवितण्डादयः कथायाःप्रभेदाः तर्हि कथायाः लक्षणं किमिति जिज्ञासायामुच्यते—वादजल्पवितण्डान्यतमत्वं कथात्वम्। अन्यतमत्वशब्दस्यार्थः तद्भिन्नभिन्नत्वम् इति।

इदं त्ववधेयम्—सामान्यतः कथालक्षणं कुर्वन् कथा शब्दस्य सामान्य अर्थस्यापि निर्धारणं कर्त्तव्यम्। यतोऽहि कथाशब्दस्य सामान्यमर्थमेव कथासामान्यलक्षणस्य लक्ष्यं भवति। संस्कृतवाङ्मये कथाशब्दस्य प्रयोगः न वादादावेव, अपितु अनेकेष्वर्थेषु उपलभ्यते। यथा—वेदे, उपनिषदि च प्रयुक्तः संवादः, उपदेशः आदि। रामायणे, महाभारते, पुराणेषु च उपलब्धा कथा, वृहत्कथा, काव्ये च हितोपदेशः, कथासरित्सागरः, पञ्चतंत्राणां कथा उपलभ्यते।

अस्यां स्थितौ वादादित्रिकं न कथाशब्दस्य सामान्यः अर्थः। अतः वादजल्पवितण्डान्यतमत्वं कथात्वमिति कथं स्वीकार्यमिति।

अस्य प्रश्नस्य समाधानं विदधता श्रीउदयनाचार्येण परिशुद्धौ लिखितम्—"नायं कथाशब्दो योगमात्रानुरोधी, अपितु सत्येव तस्मिन् रूढिनियत[2] इति। अयमभिप्रायः यत्—योगशक्त्या कथाशब्दस्य अर्थः यद्यपि वाक्यसन्दर्भः भवति, "कथ्—वाक्यप्रबन्धे" इति निर्देशात् किन्तु यस्य कथाशब्दस्य उल्लेखं सूत्रकारः कृतवान्, भाष्यकृता च

1. न्यायदर्शनम्—वास्त्यायनभाष्यम्।
2. न्यायपरिशुद्धिः—मिथिला विद्यापीठप्रकाशिता—सन् 1987, पृ. 620।

"तिस्रः कथाः भवन्ति, वादो, जल्पो, वितण्डा चेति नाम्ना व्याख्यातः सः कथाशब्दः न यौगिकः अपितु योगरूढः। योगरूढशब्दस्य एकः स्वभावो भवति यत् सः अवयवशक्तिसमुदायशक्तिभ्यां एतादृशस्य शब्दस्य बोधकः भवति यः अवयवार्थस्य समुदायार्थस्य च बोधकः भवति। ताभ्यां न केवलमवयवार्थस्य बोधः नापि समुदायार्थस्य बोधः अपितु अवयवार्थसमुदायार्थयोः बोधो जायते। यथा–पंकजशब्देन पंकादुद्भूतस्य पद्मस्य बोधः भवति न तु शुष्कभूमेः उद्भूतस्य शुष्कपद्मस्य बोधः। तादृश कथाशब्देन "कथ् वाक्यप्रबन्धे" इति धातुना "वाक्यप्रबन्धः" कथाशब्दस्य अवयवार्थ एव।

वाक्यस्य परिभाषा विदधता तर्कभाषाकारेण उक्तम्–"श्रोतुः पदान्तरविषयाम् अर्थान्तरविषयां वाकांक्षां जनयतां प्रतीयमानपरस्परान्वययोग्यार्थप्रतिपादकानां सन्निहितानां पदानां समूहो वाक्यम्[1]" इत्थं प्रकारेण समुदायशक्त्या कथाशब्दस्य अर्थः–"एकाधिकरणस्य परस्परं विरुद्धधर्मरूपपक्षप्रतिपक्षयोः बोधकं वाक्यम्" इति। वार्तिककारः भाष्यकारस्य तिस्रः कथाः भवन्ति–वादो जल्पो वितण्डाचेति इयमुक्तिं विचारवस्तुनः नियमः स्वीकरोति। भाष्यकारस्य उक्तकथनसम्बन्धे तेषां मतमित्थम्–नायं कथा नियमः किन्तु विचारवस्तुनियमः। यद् वस्तु विचार्यते तत् त्रेधा विचार्यते। तत्र विचारः–वादो जल्पो वितण्डा चेति[2]।

टीकाकारः वाचस्पतिमिश्रः अस्मिन् प्रसङ्गे विचारं प्रकटयन् वदति–"नायं कथामात्रनियमः येन वृहत्कथादीनाम् अकथात्वं स्यात् अपितु यन्नानाप्रवक्तृके विचारे वसति तद् विचारवस्तु। विचारविषया वाक्यसन्दृब्धिः कथेति यावत्तस्याः कथायाः एष नियमः तिस्र एवेति[3]। टीकाकारदिशा कथायाः सामान्यलक्षणमित्थम्–नानाप्रवक्तृकविचारविषयावाक्यसन्दृब्धिः कथा। कथालक्षणे नानाप्रवक्तृत्वनिवेशस्य पुष्टिः भाष्यकारस्य "प्रमाणप्रमेय––" सूत्रस्य अवतारकभाष्येण भवति। यथा– "वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोन्यतराधिकरणनिर्णयावसानो वाक्यसमूहः[4]। "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्[5]" इत्यस्मिन् सूत्रे वादस्यैव अङ्गभूते जल्पवितण्डे। कथालक्षणे

1. केशवमिश्रः–तर्कभाषा।
2. न्यायवार्तिकम्–मिथिलाशोधसंस्थानम्–1967, पृ. 598।
3. न्यायदर्शनं तात्पर्यटीका–अनन्तलालठक्कुरसम्पादितम्–पृ 609।
4. न्यायदर्शनं तात्पर्यटीका–अनन्तलालठक्कुरसम्पादितम् पृ. 601।
5. तदेव।

नानाप्रवक्तृकत्वनिवेशेन इदं ज्ञायते यत् एकेन वक्त्रा पक्षप्रतिपक्षयोः सम्बन्धे स्वकीयान् विचारान् प्रस्तोतुं नाधिकृतः अपितु तदर्थमनेकवक्तृणामावश्यकता भवति।

केशवमिश्रः तर्कभाषायां वादजल्पवितण्डायाः कथाघटितं लक्षणमवादीत् यथा–"तत्त्वबुभुत्सोः कथा वादः[1]। उभयसाधनवती विजिगीषु कथा जल्पः[2]। स एव स्वपक्षस्थापनाहीनो वितण्ड[3]। अत्र लक्षणे कथा शब्दस्य सन्निवेशः। अतः तेन कथा सामान्यलक्षणमपि प्रदर्शितम्–"कथा तु नानाप्रवृक्तृकपूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः[4]।

मणिकण्ठमिश्रस्तावत् न्यायरत्ने कथालक्षणस्य विस्तृतं विवेचनं कृतवान्। यथा–किं कथात्वम्? साधनदूषणप्रतिपादकवाक्यत्वं वा? निग्रहस्थानवद्वाक्यत्वं वा? अनुवादेतरस्थापनावत् कर्तृकत्वे सति दूषणवक्तृवाक्यत्वं वा[5]? किन्तु उपर्युक्तानि लक्षणानि दूषणग्रस्तानि। प्रथमलक्षणे एकेन वादिना यदा स्वपक्षं स्थापयति अपरेण च प्रतिवादिना दोषोद्भावनं न करोति तत्र न तत्त्वबुभुत्सोः कथा, अतः अव्याप्तिदोषः। द्वितीयलक्षणं निग्रहस्थानबाधितघटितत्त्वात् आत्माश्रयदोषग्रस्तम्। एवञ्च तृतीयमपि लक्षणम्–आत्माश्रयदोषघटितमेव। "कथकाशक्तिलिङ्गवद् वाक्यं कथा[6]" इति कथालक्षणमपि आत्माश्रयदोषग्रस्तत्त्वात्त्याज्यमेव। अतः मणिकण्ठमिश्रः कथायाः निष्कृष्टलक्षणं प्रतिपादयति–"पराभिधास्यमानहेत्वाभासादिनिराकर्त्तव्यताज्ञानजन्यं वाक्यं कथा[7]। अथ च "पदत्ववाक्यत्वसूत्रत्वप्रकरणत्वाह्निकत्वाध्यायत्ववत्[8] कथात्वमपि जातिः।

डॉ. गङ्गानाथझा महोदयोऽपि न्यायभाष्यस्य खद्योतव्याख्याया-मुपर्युक्तलक्षणस्य समर्थनं कृतवान्। डॉ. झामहोदयस्य विचारः इत्थम्–नानाप्रवक्तृकत्वे सति तद्विचारवस्तुविषया वाक्यसन्दृब्धिः कथा। तस्यां कथायामेषनियमस्तिस्र इति। इदं च पक्षप्रतिपक्षपरिग्रह इति सूत्रावयवेन सूचितम्[9]।

1. तर्कभाषा–केशवमिश्रः।
2. तर्कभाषा–आचार्य विश्वेश्वरसम्पादिता–चौखम्बा–1953, पृ. 244।
3. तदेव पृ. 244।
4. तदेव पृ. 244।
5. न्यायरत्नम्–मणिकण्ठमिश्रः।
6. न्यायरत्नम्–मणिकण्ठमिश्रकृतम्, एडीटर–टी. चन्द्रशेखरन्, 1953, पृ. 145।
7. न्यायरत्नम् पृ. 146।
8. तदेव।
9. तदेव।

न च "नायं कथा नियम" इति वार्तिककारस्य मतं दोषग्रस्तमिति वाच्यम्, तत्र टीकाकृद्भिः "नायं कथानियम" इत्यस्य "नायं कथामात्रनियम इति कथा शब्दस्य योगरूढार्थपरत्वे उक्तनियमस्य उपपत्तिः सम्भाविता।

श्री रघूत्तमः भाष्यकारेण कथासामान्यस्य लक्षणनिर्वचने हेतुरुद्भावयति। तन्मतम्—भाष्यकारः कथापदनिगदेनैव कथालक्षणमुक्तमिति मन्वानः कथां विभजते तिस्रः कथाः भवन्तीति[1]।

श्रीविश्वनाथपञ्चाननः स्वीयन्यायसूत्रवृत्तौ कथालक्षणं निर्वक्ति—"तत्त्व-निर्णयविजयान्यतरस्वरूपयोग्यन्यायानुगतवचनसन्दर्भः कथा[2]। अर्थात् यैः तत्त्वनिर्णयविजययोः उभयोः एकस्यापि प्रयोजनस्य सम्पादनं भवेत् एवञ्च यस्मिन् न्यायवाक्यस्य अनुबन्धो भवेत् सा कथा। अनया रीत्या कथायां प्रतिज्ञादिपञ्चा-वयववाक्यानां सन्निवेशः आवश्यकः।

जयरामपञ्चाननेन[3] वादलक्षकसूत्रस्य व्याख्यां ब्रुवता उक्तं यत् कथायाः सामान्यलक्षणं तस्याः विभागश्च आक्षेपलभ्यः। अर्थात् लक्षणं विना विभागस्य प्रतिपादनं श्रमसाध्यम्।

जयरामपञ्चाननः कथायाः अपरं लक्षणं प्रतिपादयति। तद्यथा—"वादिप्रतिवाद्यन्याभिधानवृत्तिवादिस्थापनासाधनाभिधानप्रतिवादिदूषणाभिधान-निष्पादनोद्देश्यवृत्तिवादिप्रतिवाद्यन्यतरसाधनदूषणान्यतराभिधानस्य तत्त्वात्[4]।

प्रसङ्गप्राप्तेन कथाभेदानां तद्भेदकतत्त्वानामुपरि विचारः प्रस्तूयते। भाष्यकारः वात्स्यायनः "तिस्रः कथाः भवन्ति, वादो जल्पो वितण्डाचेति[5] त्रिधा विभागं चकार, किन्तु अस्य भेदस्य आधारः क इति न प्रदर्शितवान्। सूत्रकारः एतासां पृथक्-पृथक् त्रीणि लक्षणानि अवोचत्। भाष्यकृता च तासां व्याख्यामात्रं प्रस्तुतम्। तेन यद्यपि स्वीयभाष्ये इदं नोद्दिष्टं यत् वादादि उक्तलक्षणेषु एव कथाभेदस्य आधारः। प्रसङ्गेऽस्मिन् इदं विचारणीयं यत् लक्षणमितरभेदकज्ञानस्य निमित्तं भवति

---

1. न्यायसूत्रम्—म.म. डॉ. गङ्गानाथ झा—खद्योत, पुण्यपत्तनम्, 1939, पृ. 57
2. न्यायसूत्रवृत्तिः—विश्वनाथन्यायपञ्चाननविरचिता—सन् 1920, पृ. 71।
3. सरस्वती भवन, टैक्स्ट नं. 21।
4. दि प्रिन्सेस आफ वेल्स, सरस्वतीभवन टैक्ट्स नं. 21 पार्ट-1 दि न्यायसिद्धान्तामाला—1927, पृ. 54।
5. न्यायभाष्यम्—प्रथमसूत्रभूमिका।

न तु इतरभेदस्य निमित्तम्।

अस्मिन् सन्दर्भे उद्योतकरस्य वार्तिकं वादजल्पवितण्डासु भेदं स्थापयति। तत्र वार्तिककारः वदति- "गुर्वादिभिः सह वादः विजिगीषुणा सह जल्पवितण्डे[1]" इति। अनेन कथनेन कथाकर्तुः भेदात् कथाभेदस्य आधारः प्रतीयते किन्तु तदा जल्पवितण्डयोः भेदः न प्रतीयते। अतः जल्पवितण्डयोः परस्परं भेदकतत्त्व-मन्वेषणीयमेव।

भासर्वज्ञः[2] कथायाः भेदद्वयं स्वीकरोति। वीतरागकथा विजिगीषु कथा च। वीतरागाधिकारिका कथा वादकथा तत्त्वनिर्णयश्च तत्फलम् अथ च विजयेच्छुनाधिकारिका कथा विजिगीषु कथा। किन्तु विजिगीषु कथायाः जल्पवितण्डयोः भेदकतत्त्वं तथाप्यनिर्णीतमेव[3]। न्यायवार्तिकतात्पर्यटीकयापि अस्मिन् प्रसङ्गे न कोऽपि लाभः। उदयनाचार्यस्य परिशुद्धिरपि अस्मिन् विषये मौनमाकलयति। आचार्यसानातनिप्रस्तुत "वादवितण्डा" नामकस्य चतुर्थकथाभेदस्य निराकरणं कुर्वता उदयनाचार्येण कथितं यत्–न च विजयतत्त्वनिर्णयाभ्यां फलान्तरमवशिष्यते कथायाः यदर्थं वादवितण्डा[4] इति। तत्त्वनिर्णयविजयातिरिक्तं कथायाः अन्यत् न किमपि प्रयोजनम्। अतः इदं ज्ञायते यत् कथाभेदस्य आधारः प्रयोजनभेद एव।

न्यायमञ्जरीकारः[5] जयन्तभट्टः अस्मिन् सन्दर्भे पूर्णतया मौनमाकलयति।

खण्डनखण्डखाद्यग्रन्थे[6] श्रीहर्षेण प्रोक्तं यत् तत्त्वनिर्णयविजयप्रयोजकत्वात् वादवितण्डे आवश्यके किन्तु अतिरिक्तस्य जल्पस्य आवश्यकता नास्ति। जल्पस्य वितण्डायामेव अन्तर्भावात् किन्तु श्रीहर्षस्य इदं मतं न युक्तिसहम्। यतोऽहि कथायां परपक्षनिरसनपुरःसरं स्वमतस्थापनं जल्पस्य प्रयोजनम् वितण्डायाश्च परपक्षखण्डनमेव प्रयोजनम् उभयोः जल्पकथा श्रेष्ठा।

---

1. न्यायदर्शनम् (प्रथमाध्यायात्मकः प्रथमो भागः) मिथिलाशोधसंस्थान, 1967, पृ. 597।
2. न्यायसारः–भासर्वज्ञविरचितः।
3. न्यायसारः–भासर्वज्ञः।
4. न्यायदर्शनम्–परिशुद्धिः–पृ. 620
5. दि विजयानगरम् सं. सी. न्यायमञ्जरी ऑफजयन्तभट्ट एडीटैड बाई म. म. गंगाधरशास्त्री तैलङ्ग भाग–3, पार्ट–1, सन् 1985।
6. खण्डनखण्डखाद्यम्–श्रीहर्षः–द्राविडश्रीलक्ष्मणशास्त्री–1914 पृ. 639।

इदानीं कथाप्रयोजनं विचार्यते। भाष्यवार्तिकतात्पर्यटीकादेः अवलोकनेन कथायाः प्रयोजनद्वयमुपलभ्यते तत्त्वनिर्णयः विजयश्च। उदयनाचार्येण परिशुद्धौ कथायाः प्रयोजनं ब्रुवता उक्तम्–"न च विजयतत्त्वनिर्णयाभ्यां फलान्तरमवशिष्यते कथायाः[1]। एतद्विषये स्वाशयं स्पष्टीकरोति परिशुद्धिकारः–"अनुत्पन्नस्य हि तत्त्वनिर्णयस्य उत्पादनम्, उत्पन्नस्य पालनम्, पालितस्य च विनियोगः। स च स्वयमभ्यासः कारुणिकतया परव्युत्पादनम्। एतच्च सर्वं कथात्रयपर्यवसितं नापि एक कथा निर्वाह्यमिति[2]।

श्रीशंकरमिश्रः "कथातः पराहंकारशातनम्"[3] इति प्रयोजनं निगदितवान्। न च जल्पवितण्डाभ्यां पराहंकार निरसनेऽपि वादेन कथं पराहंकारशातनमिति वाच्यम् वादस्य तत्त्वनिर्णयोद्देश्यत्वात्। अत्र अहंकारपदवाच्यः न गर्वदर्पाभिमानात्मकः किन्त्वतत्त्वज्ञानात्मकः, अतत्त्वज्ञानस्य अर्थद्वयं भवति–एकं तत्त्वस्य अज्ञानमपरञ्च तत्त्वस्य विपरीतं ज्ञानम्। तस्यैव निरसनमहंकारनिरसनं शंकरमताभिप्रायम्। अनया दृष्ट्या अहंकारनिरसनं कथासामान्यप्रयोजनं वक्तुमुचितमेव। उदयानाचार्यः परिशुद्धौ अवादीत्–"इह वादे तु तत्त्वनिर्णयः जल्पेष्वशक्तिपराशक्तिख्यापनम्, वितण्डायां पराशक्तिमात्रप्रख्यापनं फलानि विवक्षितानि। तानि च न कथामात्रसाध्यानीति विशेषत एवोद्देशः[4]।

कथा प्रयोजनानन्तरं तस्याः नियमाः प्रकाश्यते। कथा वादिप्रतिवादिनोः मध्ये भवति। ताभ्यां तत्त्वनिर्णयः वादिमतस्य निराकरणञ्च भवति। जल्पवितण्डाकथयोः जयपराजययोः घोषणा भवति। एतदर्थं कथायाः नियमाः भवन्ति। अन्यथा कथायामव्यवस्थया तस्याः प्रयोजनस्य निर्वाहः असम्भवः। यद्यपि सूत्रे, भाष्ये, वार्तिके, तात्पर्यटीकायां परिशुद्धौ च कथायाः नियमाः न दृष्टिपथे आयान्ति। तथापि कथालक्षणे समागतविशेषणैरेव नियमः ज्ञायते। यथा–वादलक्षणे[5] प्रमाणतर्कसाधनोपालम्भः" अनेन विशेषणेन ज्ञायते यत् वादात्मककथायां साधनोपालम्भौ प्रमाणतर्काभ्यामेव कर्त्तव्यौ। "सिद्धान्ताविरुद्धः" इत्यनेन विशेषणेन वादे अपसिद्धान्तस्य

1. न्यायदर्शनम्, अ. 10, भा. 1, मिथिलाशोधसंस्थानम्, पृ. 620।
2. न्यायपरिशुद्धिः–अनन्तलालठाकुरसंशोधिता।
3. श्रीश्यामाचरणसंस्कृतग्रन्थावलिः ग्रन्थांकः–2, वादिविनोदः सन्मिश्रशंकरकृतः महामहोपाध्यायेन गंगानाथशर्मणा सम्पादितः, 1915, पृ.।
4. न्यायदर्शनम्–श्रीमता अनन्तलालठक्कुरेण संस्कृतम्, 1967, ए. डी., पृ. 620।
5. न्या. सू. 1/2/1।

वर्जना विधीयते। "पञ्चावयवोपपन्नः" विशेषणेन ज्ञायते यत् पञ्चावयवात्मकन्यायानुगत एव वादकथा भवेत्। "पक्षप्रतिपक्षपरिग्रहः" इत्यनेन सूच्यते यत् वादे पक्षप्रतिपक्षयोः स्थापना स्यात्। जल्पलक्षणे [1] "छलजातिनिग्रहस्थानसाधनोपालम्भः" विशेषणेन ज्ञायते यत् जल्पकथायां छलजातिनिग्रहस्थानादिप्रयोगे स्वातंत्र्यमस्ति। वितण्डालक्षणे[2] च "प्रतिपक्षस्थापनाहीनः" इत्यनेन विशेषणेन प्रतिपक्षस्थापनायाः अकरणीयत्वं स्वीकृतम्।

विश्वनाथन्यायपञ्चाननः वादकथाधिकारिनिरूपणानन्तरं स्वीयवृत्तौ सभायाः स्वरूपं प्रतिपादयति–"अनुविधेयस्थेयः सभ्यपुरुषवतीजनता सभा, अनुविधेयो राजादिः स्थेयान् मध्यस्थः, सा च वादे नावश्यकी वीतरागकथात्वात्[3]। तन्मते जल्पवितण्डयोः सभा आवश्यकी। यत्र राजा, मध्यस्थः, जनोपस्थितिश्च नियमेन भाव्यम्।

"प्रमेयकमलमार्त्तण्डे"[4] आचार्यप्रभाचन्द्रः समस्तानां कथानां चत्वारि अङ्गानि प्रस्तुतं कृतवान्। यथा–सभ्यः, सभापतिः, वादी, प्रतिवादी च।

"खण्डनखण्डखाद्ये" श्रीहर्षः अकथायां वादिनोर्नियममेतादृशं मन्यते, प्रमाणादयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम्[5]।

कथानियमानुल्लिख्य "यान् नियमान् विना तत्त्वावधारणपरपराजय-रूपकथोद्देशस्य पूर्तिर्न भवति तानेव नियमान् स्वीकर्तव्यम्। तदर्थं कथायै प्रमाणादेरपेक्षा नास्ति।

अधुना कथाधिकारिणः चर्चा विधीयते। एतत्सम्बन्धेऽपि सूत्रभाष्यादौ स्पष्टोल्लेखः नास्ति। न्यायदर्शनस्येकं सूत्रमस्ति–"तं शिष्यगुरुसब्रह्मचारिविशिष्ट-श्रेयोऽर्थिभिरनुसूयिभिरभ्युपेयात्[6]" अस्मिन् सूत्रे एतादृशः निर्देशः वर्तते यत् तत्त्वज्ञानाय वादकथायां प्रविष्टेन विदुषा अनुसूयत्वेन भाव्यम्। अर्थात् तद्व्यक्तौ यासां योग्यतानामावश्यकता विद्यते तासामसूयाराहित्यं प्रमुखमेव।

1. न्या. सू. 1/2/2।
2. न्या. सू. 1/2/3।
3. न्यायसूत्रवृत्तिः–विश्वनाथः। विद्याविलासप्रेस बनारस, 1920, पृ. 73।
4. प्रमेयकमलमार्तण्डः–निर्णयसागरप्रेस मुम्बई–1941, जय–पराजयव्यवस्था, पृ. 645।
5. दि चौखम्बा सं. सी, श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम्।
6. न्यायदर्शनम्–स्वामी द्वारकादासशास्त्री, न्या. सू. 4/2/48।

उदयनाचार्यः कथाधिकारिसम्बन्धं वदति–"वक्त्रोश्च प्रशब्देन प्रकर्षो दर्शितः। स च कथारूपमहावाक्यनिर्वाहकत्वम्। तथा च स्वस्थः सर्वजनप्रत्ययानपलापी मतमात्रावलम्बी अवहितः अकलहकारश्चेति कथाधिकारिणो दर्शिताः। विपर्ययेण हेया[1] इति। वादकथाधिकारिसम्बन्धे परिशुद्धौ निगदितं यत् "तेऽपि प्रकृतोऽक्तिकः अविप्रलम्भकः, यथा कालस्फूर्तिकः, अनाक्षेपकः युक्तिसिद्धसम्प्रत्ययो चेति पञ्चवादे उपादेयाः, विपर्ययेण हेया[2] इति। अयमाशयः यत् कथाधिकारी स एव भवितुं शक्नोति यः चर्चाकाले विषयान्तरं न गच्छति, यः वञ्चकः नास्ति, यस्य मेधा तीव्रः, यः आक्षेपकः नास्ति एवञ्च युक्तिसिद्धविषये निष्ठावान् स एव वाद कथाधिकारी। तस्य निष्कर्षोऽयम्–

**यो यथाभूतः स तथाभूतेन वक्तुमर्हति।**
**तथा सति कथा महावाक्यसिद्धौ फलसिद्धेः[3]॥**

आयुर्वेदस्य प्रसिद्धे चरकनामके[4] ग्रन्थे वादस्य "सन्धाय सम्भाषा" नामान्तरमेव। सम्भाषायाः अधिकारी अनुसूयकः भवति।

वादाधिकारिणे च अस्याः योग्यतायाः आवश्यकतास्ति किन्तु जल्पवितण्डाधिकारीभ्यामियं योग्यता न आवश्यकी। यतोऽहि इमे कथे विजयोद्देश्येन भवतः, एवञ्च विजयप्राप्त्यर्थमसूयायाः आवश्यकता भवति।

विश्वनाथवृत्तौ कथाधिकारिणः उल्लेखः इत्थं विद्यते– "कथाधिकारिणस्तु तत्त्वनिर्णयविजयान्यतराभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवः अकलहकारिणः कथोपयिकव्यापारसमर्था[5] इति। अयमभिप्रायः कथाधिकारी स एव भवितुं शक्नोति यस्य तत्त्वनिर्णयविजययोः आकांक्षा विद्यते, सर्वमान्य अनुभवानपलापकः, श्रवणे वदने च समर्थः, स्वाभिप्रायाभिव्यक्तौ पराभिप्रायग्रहणे समर्थः, अकलहकारी एवञ्च अपेक्षितयोग्यतासम्पन्नः स्यात्।

वादकथाधिकारिसम्बन्धे विश्वनाथः स्वाभिप्रायं दर्शयति–वादाधिकारिणस्तु

---

1. न्यायपरिशुद्धिः–मिथिलाशोधसंस्थानम् पृ. 621।
2. तदेव।
3. तदेव।
4. श्रीकाशीसंस्कृतग्रन्थमाला–194, चरकसंहिता–पं. काशीनाथशास्त्री, सम्पादकः–डॉ. गंगासहायपाण्डेयः।
5. न्या.वृ.–विश्वनाथन्यायपञ्चाननः

तत्त्वबुभुत्सवः प्रकृतोक्तिका यथाकालस्फूर्तिका अनाक्षेपका युक्तिसिद्धिप्रत्येतारः[1]।

श्रीजयरामः "न्यायसिद्धान्तमालायां" कथाधिकारिसम्बन्धे प्रोवाच "तत्त्वनिर्णयविजयान्यतराभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवः अकलहकारिणः कथोपयिकव्यापारसमर्था अवहिताश्च[2]"। वृत्तिकारः कथा सामान्याधिकारिणे यज्ज्ञानस्यावश्यकता प्रदर्शितवान् तदतिरिक्तः "अवहितः" अपि जयरामसम्मतं ज्ञानमावश्यकम्। अवहितः अर्थात् सावधानमनस्कः। वाक्यवाक्यार्थयोः अवहितस्य सावधानमनसः महत्वपूर्णं स्थानमस्ति।

अथ कथाभेदानां वादजल्पवितण्डानां विस्तृतं विवेचनमस्माभिः क्रियते।

1. वादः–

तत्त्वजिज्ञासया यो विषयो विविच्यते स वाद उच्यते। वादस्योद्देश्यं तत्त्वनिर्णयो भवति। वादे पक्षस्य बौद्धिकश्रेष्ठतायाः प्रतिपादनं विपक्षस्य दौर्बल्यप्रतिपादनस्य वा भावना तथा न प्रबला भवति यथा सम्बद्धविषयस्य तत्त्वजिज्ञासा समुदेति। अतएव न्यायसूत्रमिदम्–प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ता-वयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निः-श्रेयसाधिगमः" इति। तत्त्वज्ञाने वादजल्पौ सप्रयोजनौ। पक्षप्रतिपक्षयोः प्रामाणिका एव विषया विविच्यन्ते। वादे वादी प्रतिपादी च ज्ञानलाभाय प्रयत्नेन परस्परं जयेषिणौ भवतः। गौतममतेन–

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्ष-परिग्रहो वादः[3]" अत्रत्यं भाष्यम्–एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावात्। अस्त्यात्मा नास्त्यात्मेति। नानाधिकरणस्थौ विरुद्धौ न पक्षप्रतिपक्षौ। यथा नित्य आत्मा अनित्या बुद्धिरिति। परिग्रहोऽभ्युपगमव्यवस्था। सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः[4]। अर्थात् वादे पक्षविपक्षयोः खण्डनमण्डनाय प्रमाणान्येवाश्रियन्ते। न तु छलप्रभृतीनि। न हि सिद्धान्तप्रतिकूलं व्याख्यानं युज्यते,

---

1. न्यायदर्शनम्–विश्वनाथः–न्यायसूत्रानुगतम्, 1920, कथाप्रकरणम्, पृ. 72-73।
2. दि प्रिन्सेस आफ वेल्स सरस्वतीभवन टैक्ट्स, नं. 21 पार्ट-1 दि न्याय सिद्धान्तमाला, गवर्नमेण्ट संस्कृत लाइब्रेरी, बनारस-1927, एडीटेड बाई गोपीनाथ कविराज, पृ. 55।
3. न्या. सू. 1/2/1।
4. तत्रैव भाष्यम्।

अत्र पञ्चावयवोपेतस्यानुमानस्य प्रयोगोऽपेक्ष्यते। यतोऽहि वादस्योद्देश्यं विचारविनिमयेन तत्त्वज्ञानमभीष्टं भवति, अतः वादिप्रतिवादिनावेकान्तेऽपि कर्त्तुमर्हतः। अत्र न सर्वेऽनिवार्याः।

वादलक्षणे "प्रमाणतर्कसाधनोपालम्भो विचार्यते। अत्रत्यं भाष्यमित्थम्–

तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः। प्रमाणतर्कसाधनं प्रमाणतर्को-पालम्भः। प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति। साधनं स्थापना। उपालम्भः प्रतिषेधः। तौ साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ च। यावदेको निवृत्त एकतरो व्यवस्थित इति। निवृत्तस्योपालम्भो व्यवस्थितस्य साधनमिति[1]।

यद्यपि वितण्डायामपि पक्षप्रतिपक्षपरिग्रहोऽस्ति तथापि प्रतिपक्षसाधनं नास्ति, तस्याः साधनहीनत्वात्। यद्यपि जल्पेऽपि पक्षप्रतिपक्षसाधनमस्ति तथाऽपि न प्रमाणमूलैरवयवैस्तर्केण च साधनोपालम्भाविति जल्पवितण्डाभ्यां "प्रमाणतर्क-साधनोपालम्भ" ग्रहणेन व्यवच्छेदः। प्रमाणैरेव यत्र साधनं तर्कैरेव च यत्रोपालम्भ इत्यर्थस्तु नोचितः।

निष्कर्षस्त्वयम्–पक्षप्रतिपक्षयोः ज्ञानं यत्र भवति स वादः। पक्षे प्रतिपक्षे च प्रमाणानां तर्कस्य च स्थापनां कृत्वा पक्षस्य साधनं प्रतिपक्षस्य च प्रतिषेधः क्रियते। वादवितण्डयोरिदमन्तरं विद्यते यद् वितण्डायां प्रतिपक्षसाधनं न क्रियते। जल्पे हि प्रमाणतर्कोभयस्याभावो भवति। नैवं वादे, अतो वादः पृथक्।

जल्पे निग्रहस्थानविनियोगाद्वादे प्रतिषेधः। कस्यचिदभ्यनुज्ञानार्थं "सिद्धान्ताविरुद्ध" इति लक्षणे विशेषणम्। सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः[2]" इति हेत्वाभासस्य निग्रहस्थानस्यानुज्ञा वादे। पञ्चावयवोपपन्न इति हीनमन्यतमेनाप्यवयवेन न्यूनम् "हेतूदाहरणाधिकमधिकम्" इति चैतयोरभ्यनुज्ञानार्थम्[3]।

अत्रेदमवधेयं विद्यते–

जल्पे यतोऽहि निग्रहस्थानानां विनियोगो भवत्यतो वादिना प्रतिवादिना वा नोपन्यस्यते। न हिंस्यात् सर्वाभूतानीतिवद् वादे सर्वनिग्रहस्थानप्रतिषेधे, अग्नीषोमीयं पशुमालभेदितिवत् सिद्धान्ताविरुद्ध इति विशेषविधिः। भाष्यकारस्यायमेवाशयः।

---

1. न्या. सू. भा. 1/2/1 पृ. 57।
2. न्यायसूत्रम्–1/2/47।
3. न्यायभाष्यम्–5/2/12-13।

वार्तिककारस्तु रागतः सर्वपञ्चनखभक्षणप्राप्तिवत् उपालम्भग्रहणात् सर्वनिग्रहस्थानप्राप्तौ, पञ्चपञ्चनखा भक्ष्या[1] इतिवत् परिसंख्यानार्थमुत्तरपदारम्भ इति।

इह वादे चतुर्धा निग्रहस्थानगतिः। किञ्चिदसम्भावनीयमेव। यथा प्रतिज्ञाहानिःप्रतिज्ञासंन्यासो निरर्थकमर्थान्तरमविज्ञातार्थकमसार्थकमिति षट्कम्। किञ्चित्सम्भवदप्यनुद्भाव्यम्। यथा प्रतिज्ञान्तरं हेत्वन्तरमज्ञानमप्रतिभाविक्षेपो मतानुज्ञापर्यनुज्योपेक्षणमिति सप्तकम्। किञ्चित्कथावसानिकम्। यथा हेत्वाभासो निरनुयोज्यानुयोगश्चेति द्वयम्।

अग्रे भाष्यकृता–अवयवेषु प्रमाणतर्कान्तर्भावे पृथक्प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम्। अन्यथोभावपि पक्षौ स्थापनाप्रवृत्तौ वाद इति स्यात्। अन्तरेणापि चावयवसंबद्धं प्रमाणान्यर्थं साधयन्तीति दृष्टम्। तेनापि कल्पेन साधनोपालम्भौ वादे भवत इति ज्ञापयति। छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति वचनाद् विनिग्रहो जल्प इति भाविज्ञायि-छल-निग्रहस्थानोपालम्भ एव स जल्पः प्रमाणतर्कसाधनोपालम्भो वाद एवेति भाविज्ञायि इत्येवमर्थं पृथक्प्रमाण-तर्कग्रहणम्[2]।

**अत्रायं भावः–**

पूर्वस्मिन् प्रयोजने स्थिते भाष्यकारः प्रयोजनान्तरमन्वाचिनोति। यद्यपि प्रमाणं तदनुग्राहकं च तर्कमन्तरेण पञ्चावयवोपपन्नं न भवति तथापि पञ्चावयवोपपन्नमित्यनेनैव प्रमाणतर्कयोराक्षेपः तथापि अनयोः प्रतिपदोक्त्यैतत्सूच्यते यत् वादिप्रतिवाद्युपन्यस्तानि साधनोपालम्भवाक्यानि परस्परं संबद्धानि भवेयुरिति अन्यथा यत्र वादी स्वस्थानस्थित एव प्रतिवाद्युक्तिनिरपेक्षः शब्दानित्यत्वं साधयति–प्रतिवादी च तदुक्तनिरपेक्ष एव शब्दनित्यत्वसाधकानि वाक्यानि प्रयुङ्क्ते सोऽपि वादः स्यात्। वादगतो निग्रहो न जल्पे जल्पगतश्च निग्रहो न वादे इति भा-विज्ञायि। इष्यते हि वादगतो निग्रहो जल्पे। सोऽयमिष्टोऽर्थो प्रमाणतर्कग्रहणाल्लभ्यते।

**जल्प :–**

कथात्रये जल्पोऽपि भवति, तल्लक्षणं यथा– "यथोक्तोपपन्नश्छलजाति-

---

1. महाभाष्यम्–पतञ्जलिः।
2. न्या. सू. भा. 1/2/1 पृ. 58।

निग्रहस्थानसाधनोपालम्भो जल्पः[1]" वादस्य लक्षणे यानि विशेषणानि तान्यत्रापि, अत एव "यथोक्तोपपन्न" इत्युक्तः। प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः। छलजातिनिग्रहस्थानसाधनोपालम्भ इति। छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन् क्रियत इति एवं विशेषणविशिष्टो जल्पः[2]।

भाष्यकारमते वादलक्षणप्रोक्तं समस्तं विशेषणमत्र। प्रमाणतर्कसाधनोपालम्भ इत्येतावन्मात्रमतिदिश्यत इति वार्तिकमतम्। सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति पदद्वयं वादे नियमार्थे एव न च जल्पे नियमतथाकिञ्चिदस्तीत्येतदेव भाष्यमते वार्तिककारस्यारुचिबीजम्।

यत्र छलजातिनिग्रहस्थानैः साधनं प्रतिषेधश्च क्रियते स जल्प उच्यते। एतेभ्यः कस्यचिदप्यर्थस्य साधनं न सम्भवति। एतेषां यल्लक्षणं प्रस्तुतं तत्र प्रतिषेधार्थ एव। न चैतद् विजानीयात्प्रतिषेधार्थतयैवार्थं साधयन्तीति, छलजातिनिग्रहस्थानोपालम्भो जल्प इत्येवमप्यूच्यमाने विज्ञायते एतदिति।

जल्पस्य क उपयोगः? प्रमाणैः साधनोपालम्भयोश्छलजातिनिग्रहस्थानानामङ्गभावः स्वपक्षरक्षणार्थत्वात् न स्वतन्त्राणां साधनभावः। यत्तत्प्रमाणैरर्थस्य साधनं तत्र छलजातिनिग्रहस्थानानामङ्गभावः स्वपक्षरक्षणार्थत्वात् तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षन्ति। तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोह-संरक्षणार्थं कण्टकशाखावरणवत्[3]" अर्थाज्जल्पवितण्डे प्रतिवादिनो यः प्रतिषेधः, तस्य कृते सहायभूते भवतः, तेन स्वपक्षस्य संरक्षणं भवति। प्रतिपक्षमतखण्डनाय तत्र दोषोद्भावनाय च जल्पवितण्डयोः साहाय्यं नीयते, आभ्यां स्वपक्षस्य संरक्षणं भवति। अत एवाङ्गत्वं मन्यते। तदेवमङ्गीभूतानां छलादीनामुपादानं जल्पे, न स्वतन्त्राणां साधनभावः।

---

1. न्या. सू. 1/2/2।
2. न्या. सू. भाष्ये।
3. न्यायभाष्यम् 4/2/50।

**वितण्डा–**

वितण्डायाः लक्षणम्–स प्रतिपक्षस्थापनाहीनो वितण्डा[1]" सजल्पो वितण्डा भवति। प्रतिपक्षस्थापना हीनः यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्तते।

एवं हि कथासु–तत्त्वबुभुत्सोः कथावादो भण्यते। स्वपक्षस्थापनाहीना वितण्डा। खण्डनखण्डखाद्यनामको हर्षविरचितोऽद्वैतग्रन्थो वितण्डाप्रधानः। यत्र पक्षान्तरस्य खण्डनं क्रियते परन्तु स्वपक्षस्य स्थापना न विधीयते सैव वितण्डा। अत एव न्यायवार्तिके अभ्युपेत्य पक्षं यो न स्थापयति स वैतण्डिकः इत्युच्यते।

| वादः | जल्पः | वितण्डा |
|---|---|---|
| (क) तत्त्वबुभुत्सापूर्वकविचारः | | (क) परमतखण्डनम् |
| (क) परपक्षखण्डनम् | | |
| (ख) खण्डनं प्रत्यरुचिः | (ख) स्वमतस्थापनम् | (ख) स्वपक्षस्थापनेऽसामर्थ्यम्। |
| | (ग) छलजातिनिग्रहस्थानानामुपयोगः। | |
| | (घ) स्वपक्षरक्षणम्। | |

जल्पवितण्डयोः प्रयोजनप्रतिरूपकं सूत्रमवतारयति सूत्रकारः–तत्र तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्[2] अनुसूचिभ्यो गुरुशिष्यादिभ्योऽन्ये बहवो वादिनो भवन्ति ये तत्त्वबुभुत्सामात्रेण कथायां न प्रवर्तन्तेऽपि तु विजिगीषादिप्रयुक्ता एव सन्तः सद्विचारनियम प्रतिपालयन्तो दुस्तर्कादिकमपि प्रयुञ्जते। एवंविधे चावसरे जल्पवितण्डे अपि प्रयोक्तव्ये भवतः।

यथोपवनादिषु क्षेत्रेषु वा अनुपादेयान्यपि कण्टकशाखावरणादीनि तद्रक्षणार्थमपेक्ष्यन्ते एव तथैवानुचिते अपि जल्पवितण्डे तत्त्वज्ञानसंरक्षणायापेक्ष्यत एव। अपि च–

विद्यानिवेदादिभिश्च परेणविज्ञायमानस्य "ताभ्यां विगृह्य कथनम्[3]।" विगृह्येति विजिगीषया, न तत्त्वबुभुत्सयेति। तदैतद्विद्यापालनार्थं न लाभतूजाख्यात्य-

1. न्या. सू. 1/2/3।
2. न्या. सू. 4/2/50।
3. न्या. सू. 4/2/51।

र्थमिति। निष्कर्षस्तु न केवलं तत्त्वज्ञानार्थं यतमानानामेव जल्पवितण्डाश्रयणमपित्वन्यस्यापि।

## न्यायाभिमताभावस्वरूपावधारणम्

प्राचीननैयायिकाः वैशेषिकाश्च केवलं भावपदार्थानामुल्लेखं कृतवन्तः किन्तु प्रकरणग्रन्थकाराः अभावपदार्थस्य विश्लेषणं विहितवन्तः। अभावस्य पदार्थरूपत्वेन मुख्यतया व्याख्यानं शिवादित्यः कृतवान्।

कतिपयविदुषामिदं मतं यत् कणादोऽपि "कारणाभावात् कार्याभावः[1]" "असतः क्रियागुणव्यपदेशाभावादर्थान्तरम्[2]" "क्रियागुणव्यपदेशाभावात् प्रागसत्[3]" "सदसत्[4]" "सच्चासत्[5]" "यच्चान्यदसदतस्तदसत्[6]" इति सूत्रेषु अभावस्य पदार्थत्वेन व्याख्यां चकार। अभावस्य सामान्यं लक्षणमस्ति—"निषेधमुख- प्रमुखगम्यत्वम्[7]" माधवाचार्याणां मते अभावस्य लक्षणम्—"समवायरहितत्त्वे सति समवायभिन्नत्वम्।"

विश्वनाथ पञ्चाननभट्टाचार्यः अभावस्य प्रथमतया भेदद्वयं निर्दिष्टवान्। (क) संसर्गाभावः, (ख) अन्योन्याभावश्च। तथा च कारिका—

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।**
**प्रागभावस्तथाध्वंसोऽप्यत्यन्ताभाव एव च॥**
**एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते[8]।** इति।

अन्नंभट्टेन अभावस्य चतुर्धाविभागः कृतः (क) प्रागभावः (ख) प्रध्वंसाभावः (ग) अत्यन्ताभावः (घ) अन्योन्याभावश्च।

---

1. वैशेषिकसूत्रम्—1.2.1।
2. वैशेषिकसूत्रम्—9.1.3।
3. वै.सू. 9/1/1
4. वै.सू. 9/1/2
5. वै.सू. 9/1/4
6. वै.सू. 9/1/5
7. नञ्पदप्रतीतिविषयत्वमभावत्वम्, भावभिन्नत्वमभावत्वं, द्रव्यादिषट्काभाववत्त्वम्—तर्कभाषा—शुक्ल।
8. कारिकावली—का. सं. 12-13

**प्रागभावः –**

अन्नंभट्टानुसारेण यस्यादिर्न भवति किन्तु अन्तः भवति सः प्रागभावः "अनादिः सान्तः प्रागभाव[1]" इति। यथा–घटोत्पत्तेः पूर्वं घटस्याभावः। अयमभावोऽनित्यः। घटोत्पत्यनन्तरं तस्य नाश्यत्वात्। आकाशस्य अनादित्वात् तत्र प्रागभावलक्षणस्याव्याप्ति वारणाय सान्तपदं घटादावतिव्याप्तिवारणाय अनादिपदम्।

प्रागभावस्य परिष्कृतं लक्षणमित्थम्–"प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनकः भविष्यतीति व्यवहारहेतुः प्रागभावः[2]"। अर्थात् घटप्रागभावप्रतियोगी घटो भवति तत्समवायिकारणं कपालः तत्र घटस्य प्रागभावः। प्रागभावः स्वप्रतियोगिसमवायिकारणे तिष्ठति एवञ्च स्वप्रतियोगिजनकश्च भवति। "इह घटो भविष्यति" इत्यादि व्यवहारस्य हेतुः घटप्रागभाव एव।

केचन जनाः अभावात् भावोत्पत्तिः स्वीकुर्वन्ति तेषां मते प्रागभावः स्वप्रतियोगिनः उपादानकारणं भवति। किन्तु अनेन असहमतं भवन्ति पदार्थशास्त्रिणः। यतोऽहि उपादानोपादेययोः साजात्यमकाट्यम्। मृदारभ्यमाणं वस्तु मृन्मय एव भवति। तथैव प्रागभावो यदि भावस्योपादानं तदा भावस्योत्पत्तिः कथमपि न सम्भवति, अनुभवविरुद्धत्वात् तत्र अभावस्यैवोत्पत्तिः भविष्यति। यतः अभावस्य स्वरूपं शून्यत्वं भावस्य च पूर्णत्वमशून्यत्वम्।

**प्रध्वंसाभावः–**

तर्कसंग्रहकारः प्रध्वंसाभावस्य लक्षणं व्याचष्टे–"सादिरनन्तः प्रध्वंसः[3]। घटादावतिव्याप्तिवारणाय अनन्तपदम्, आकाशादावतिव्याप्तिवारणाय सादिपदम्। प्रध्वंसाभावस्य निष्कृष्टलक्षणम्–"प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः ध्वस्तव्यवहारहेतुः ध्वंसः[4]।"

जन्याभावत्वं ध्वंसत्वमिति मुक्तावलीकाराः[5]। जन्यत्वे सति अभावत्वमित्यर्थः। अत्यन्ताभावादावतिव्याप्तिवारणार्थं जन्यत्वविशेषणम्। अभावपदञ्च

---

1. तर्कसंग्रहे।।
2. तत्रैव दीपिकायाम्।
3. तर्कसंग्रहे।
4. तर्कसंग्रहदीपिका।
5. न्यायसिद्धान्तमुक्तावलीटीका–किरणावली पृ. 61।

घटादावतिव्याप्तिवारणाय। जन्यत्वमत्र न प्रागभावप्रतियोगित्वरूपं ग्राह्यम्, विनाश्यभावत्वात्मकप्रागभावत्वशरीरे ध्वंसत्वस्य घटकतया अन्योन्याश्रयात् किन्तु प्रागभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वरूपम्। तथा च जन्याभावत्वं नाम–प्रागभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वे सति अभावत्वम्। विनाश्यभावत्वञ्च–ध्वंसत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपित प्रतियोगित्वे सति अभावत्वमिति निर्वचनात् तयोर्न परस्परघटकता[1]।

यस्याभावस्य आदिर्भवति अन्तश्च अर्थात् नाशः न भवति सः प्रध्वंसाभावः। यदि ध्वंसस्य ध्वंसः स्यात्तदा नष्टघटः पुनः नश्येत्। अतः ध्वंसः अनन्तः।

केचन ध्वंसस्यापि ध्वंसं मन्यन्ते यतोऽहि प्रागभावप्रध्वंसौ स्वप्रतियोगिनः आधारे तिष्ठतः। यथा घटस्य प्रागभावः ध्वंसश्च मृत्कपाले तिष्ठतः तत्र दण्डप्रहारद्वारा कपालपर्यन्तस्यापि नाशः तत्र घटध्वंस कुत्र स्थास्यति? अतः ध्वंसस्यापि ध्वंस इति युक्तिसिद्धः किन्तु इयं युक्तिः न समीचीना। सैव युक्ति सद्युक्तिः भवति यत्र अभ्रान्तलोकानुभवः लोकव्यवहारश्च भवेत्। ध्वंसस्य ध्वंसो न भवति। ध्वंसः निराश्रयः न भवति।

केचन अभावकारणवादिनः ध्वंसात् भावस्योत्पत्तिः मन्यन्ते। तेषां मतं यत् यथा बीजनाशानन्तरमेवाङ्कुरस्योत्पत्तिः, अथ च पिण्डाकारमृदः नाशानन्तरमेव घटोत्पत्तिर्जायते तथैव प्रध्वंसात्मकाभावत एव वस्तुनः उत्पत्तिः किन्तु तन्न सम्यक् उक्तरीत्याङ्कुरस्य, घटस्य च उत्पत्तेरभावात्। अतः ध्वंसः न कस्याप्युपादानकारणम्।

**अत्यन्ताभावः–**

"त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽभावः अत्यन्ताभावः[2]" इति अन्नंभट्टपादाः। यथा–भूतले घटो नास्ति, वायौ रूपाभावः। उक्त व्यवहारस्य विषयीभूतः अभावः–त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकत्वात् अत्यन्ताभावः। अत्र संसर्गपदं तादाम्यातिरिक्तसंसर्गपरमतः न अन्योन्याभावस्य ग्रहणम्। प्रागभावध्वंसयोरपि तादात्म्यातिरिक्तसंसर्गावच्छिन्नप्रतियोगिताकत्वात् तत्रातिप्रसक्तिस्तद् वारणाय त्रैकालिकपदम्।

नित्यत्वे सति संसर्गाभावत्वमत्यन्ताभावत्वमिति[3]" मुक्तावलीकाराः। अत्र

1. किरणावली–कृष्णवल्लभाचार्यः–अभावप्रकरणम्।
2. तर्कसंग्रहे।
3. न्या. सि. मु.।

नित्यत्वं प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्। संसर्गाभावत्वं च अन्योन्याभावभिन्नाभावत्वम्। तथा च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे च सति अन्योन्याभावभिन्नत्वे सति अभावत्वमत्यन्ताभावस्य लक्षणमिति लक्षणार्थः। ध्वंसेऽतिव्याप्तिवारणाय प्रथमं, प्रागभावेऽतिव्याप्तिवारणाय द्वितीयं, अन्योन्याभावेऽतिव्याप्तिवारणाय तृतीयं, परमाण्वादावतिव्याप्तिवारणाय चतुर्थं दलं बोध्यम्।

अत्यन्ताभावत्वं द्विविधम्—भावाभावसाधारणं तद्व्यावृत्तं च। प्रथमं "नास्ति" इत्यादि प्रतीतिसाध्यमनुयोगिताविशेषरूपम् अखण्डोपाधिरूपं तच्च न निरुक्तिकमपेक्षते किन्तु द्वितीयं निरुक्तिमपेक्षते इति तदेव निरुक्तं नित्यसंसर्गाभावत्वम्।.

एकमन्यदपिलक्षणमत्यन्ताभावस्य—प्रतियोगितावच्छेदकावच्छिन्न तादात्म्यानवच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धेन प्रतियोगिताविशिष्टत्वमऽत्यन्ता-भावलक्षणमिति।

अत्र केचन वदन्ति यत् यत्र भूतलादौ घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाघटकत्वात् अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः। अतः तत्र उत्पादविनाशशाली चतुर्थः अभावः इति। प्राचीन नैयायिकमते ध्वंसाभावाधिकरणे प्रागभावाधिकरणे च न अत्यन्ताभावः। श्यामघटे रक्तो नास्ति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावं तयोर्विरोधात्[1]।

केषाञ्चित् मतमस्ति यत् यस्याभावस्य प्रतियोगी केनापि सम्बन्धेन सम्बद्धो भवति सः अत्यन्ताभावः। यथा—गृहे संयोगसम्बन्धेन यः घटाभावः सः अत्यन्ताभावः। अभिप्रायमिदं यत् एकं वस्तु एकत्र एकेन सम्बन्धेन तिष्ठति न त्वन्यसम्बन्धेन। यथा—यदा गृहे संयोगसम्बन्धेन घटस्तिष्ठति तत्रैव समवायसम्बन्धेन तस्याभावः, तथा घटः स्वोपादानकारणे कपाले समवायेन तिष्ठति तत्र संयोगसम्बन्धेन घटाभावः। अतः एतादृशोऽभावः अत्यन्ताभावः। एक एव घटः संयोगसम्बन्धेन भूतले, समवायसम्बन्धेन कपाले, कालिकसम्बन्धेन काले, दैशिकविशेषणतासम्बन्धेन दिशि तिष्ठति। अतः कस्यापि वस्तुनः अभावज्ञानार्थं तत्प्रतियोगिनः सम्बन्धेन सम्बद्धत्वमावश्यकम्।

---

1. न्या. सि. मु. पृ. 63।

**अन्योन्याभावः–**

अन्योन्याभावस्य लक्षणमन्नंभट्टेन कृतं यत् "तादात्म्यसम्बन्धावच्छिन्न प्रतियोगिताकोऽन्योन्याभावः[1]"। यथा–घटः पटो न इति। तादात्म्यशब्दस्य विग्रहो भवति–तस्य पदार्थस्य आत्मा स्वरूपं तदात्मा, तदात्मनोभावस्तादात्म्यम् अभेद इत्यर्थः। तादृश तादात्म्यसम्बन्धावच्छिन्ना प्रतियोगिता यस्य सः एतादृशोऽभाव इत्यर्थः। तादात्म्यं सम्बन्धविशेषः स्वस्मिन् यः स्वसम्बन्धः सः तादात्म्यसम्बन्धः। यथा–घटे घटः तादात्म्यसम्बन्धेन तिष्ठति। तथैव पटे पटः तादात्म्यसम्बन्धेन तिष्ठति। भेद रूपाभावस्य नाम अन्योन्याभावः। यस्याभावस्य प्रतियोगिता तादात्म्य सम्बन्धावच्छिन्न प्रतियोगितावच्छेदकं घटकं यत्र विद्यते न तत्र तादात्म्यसम्बन्धावच्छिन्न प्रतियोगिताको भेदः। भेदस्य स्वीय प्रतियोगितावच्छेदकेन साकं विरोधात्।

यतोऽहि घटे घटः तादात्म्यसम्बन्धेन तिष्ठति। अतः तादात्म्यसम्बन्धेन घटे न घटाभावः, भावाभावयोः एकाधिकरणावृत्तित्वात्। घटभिन्नपटादौ घटभेदः विद्यते। येन सम्बन्धेन यद् वस्तु यत्र न भवति तत्र तेनैव सम्बन्धेन तद्वस्तुनः अभावः भवति। तदीय प्रतियोगितायां तत्सम्बन्धावच्छिन्न प्रतियोगिता निविष्टमस्ति। संयोगेन घटो नास्ति अत्र घटे या प्रतियोगिता सा संयोगसम्बन्धावच्छिन्ना, समवायेन घटो नास्ति अन्यत्र सैव प्रतियोगिता समवायसम्बन्धावच्छिन्ना विद्यते। किन्तु तद्रूपघटो न घटः इत्यत्र उक्त नियमः न प्रवर्तते यतोऽहि भेदस्य प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्ना विद्यते। सा प्रतियोगिता कदापि न अन्यसम्बन्धावच्छिन्ना भवितुं शक्नोति। अन्यथा कस्याप्यभावस्य प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्ना न भवति अन्यथा घटेऽपि घटभेदः स्यात्।

प्राचीनमते पूर्वकालवृत्तित्वात्मकसम्बन्धावच्छिन्न प्रतियोगिताकाभावत्वस्य प्रागभावध्वंसयोः सत्वात् तत्रातिव्याप्तिवारणाय तादात्म्येति। अत्यन्ताभाववारणाय तादात्म्यत्वं सम्बन्धांशे निवेशितम्। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताश्रयत्वात्मकस्य तादृशप्रतियोगिताकत्वस्य घटादावपि सत्त्वात् तत्रातिव्याप्तिवारणाय अभावपदम्।

वस्तुतस्तु तादात्म्यं न अभेदः अभेदस्य भेदप्रतियोगिताकाभावरूपस्य भेदत्वावच्छिन्नप्रतियोगिताकाभावरूपस्य वा अतिव्याप्त्यसंभवात् अन्यतरदोषग्रस्तत्वात् किन्तु तादात्म्यमेकमात्रवृत्तिधर्म एव, धर्मे एकमात्रवृत्तित्वञ्च स्वप्रतियोगिवृत्तित्व–स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत्तत् स्वं तत्तद्व्यक्तित्त्वावच्छिन्न–प्रतियोगिताकभेदकूटवत्वम्, तादृशो धर्मस्तद् तद्व्यक्तित्त्वादिकमेवेति तदेव तादात्म्यम्।

1. तर्कसंग्रहे।

तादृश तादात्म्यसम्बन्धावच्छिन्नप्रतियोगितानिरूपितानुयोगितावत्वमेवान्योन्याभावत्वमिति।

**सामयिकाभावः–**

गृहे घटाभावः, मञ्जूषायां पटाभावः एतादृशः घटाभावः पटाभावश्च सामयिकाभावः कथ्यते। यथा वायौ रूपाभावस्य प्रतीतिः सर्वदा भवति यथा गृहे घटाभावस्य प्रतीतिः न भवति घटसत्वदशायामेतादृशी प्रतीतिर्न जायते। अतः इदं स्वीकरणीयं यत् वायौ यथा रूपाभावः अत्यन्ताभावशब्देन ज्ञायते तथा अत्र न सम्भवति अतः उक्ताभावः सामयिकाभाव एव इति चेन्न।

"गृहे घटाभावः" इत्यत्र अभावः न सामयिकाभावः अपितु अत्यन्ताभाव एव। गृहे घटसत्वेऽपि घटात्यन्ताभावस्य व्यवहारो जायते किन्तु एतादृशी प्रतीतिः न भवति यतोऽहि घटसत्वदशायां–घटसंयोगध्वंसः, घटसंयोगप्रागभावश्च तत्र नास्ति। यत्र घटसंयोगध्वंसः घटसंयोगप्रागभावश्च तिष्ठति तत्रैव गृहे घटाभावादिप्रतीतिर्जायते अन्यथा तत्प्रतीतिः न भवति। अतः सामयिकाभावः न अतिरिक्तः अपितु अत्यन्ताभाव एव।

अत्र एका शंका जायते यत् यत्र पूर्वं घटाभावः पश्चात् घटमानीतः तत्र न घटाभावस्य ध्वंसः, अत्यन्ताभावस्य नित्यत्वात् नैव सोऽभावः कुत्रापि गच्छति तत्र क्रियाभावाच्च। अतः घटसत्वदशायां घटात्यन्ताभावस्य प्रतीतिः कथं न भवति? अत्र समाधानमस्ति यत् उपर्युक्ताभावे तत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः। कालघटितत्त्वं भूतलादिस्थानघटितत्त्वञ्च लक्षणे निवेशनीयत्वात् उक्तदोषाभावः।

**विशिष्टाभावः–**

अभावस्य विषये केषाञ्चन मतमिदं यत् अभावो द्विविधः विशिष्टाभावः अविशिष्टाभावश्च। विशिष्टाभावो यथा–अत्र दण्डी पुरुषो नास्ति। अविशिष्टाभावश्च द्विविधः–एकाभावः अनेकाभावश्च। अनेकाभावः द्वितयाभावः त्रितयाभावादिभेदेनानन्त्यं लभते। किन्तु विशिष्टाभावोः न अतिरिक्ताभावः। यतोऽहि विशिष्टाभावस्थले एक एव प्रतियोगी भवति। ये किल विशिष्टाभावं पृथक् मन्यन्ते तन्मते विशिष्टाभावस्य त्रयो भेदाः। (क) विशेषणाभावप्रयुक्तविशिष्टाभावः (ख) विशेष्याभावप्रयुक्तविशिष्टाभावः (ग) उभयाभावप्रयुक्तविशिष्टाभावश्च।

"दण्डीपुरुषो नास्ति" इत्यत्र दण्ड: विशेषणं पुरुषो विशेष्य: तयो: सम्बन्धश्च संयोग:। यत्र पुरुषो विद्यते दण्डश्च नास्ति तत्र दण्डस्य विशेषणत्वात्तदभावेन विशेषणाभावप्रयुक्तो विशिष्टाभाव:। यत्र पुरुषो नास्ति दण्डश्चास्ति तत्र पुरुषस्य विशेष्यत्वात्तदभावात् विशेष्याभावप्रयुक्तो विशिष्टाभाव:। यत्र च पुरुषोऽपि नास्ति दण्डोऽपि नास्ति तत्र तयोरभावात् उभयाभावप्रयुक्तो विशिष्टाभाव:।

**उभयाभावादिरनेकाभाव:–**

अभावस्य एकाभावानेकाभावयोर्भेदेनापि वर्गीकरणं कृतं नैयायिकेन। यत्र घटो विद्यते पटश्च नास्ति तत्र घटपटौ न स्त: इत्यादि वाक्यव्यवहारो जायते। एवञ्च यत्र घटपटौ स्त: मठश्च नास्ति तत्र घटपटमठा: न सन्ति इत्यपि लोकव्यवहारसिद्ध:।

केचन विद्वांस: उभयाभावानेकाभावौ विशिष्टाभाव एव कथयन्ति। तेषां मतं यत् घटसत्वेऽपि घटपटौ न स्त: इत्यादि या प्रतीति: तत्र घटसहित: पटाभाव: एव। किन्तु यत्र उभयाभाव: परस्पर विरुद्धयो: वस्तुनो: भवति तत्र विशिष्टाभाव: कथमपि न सम्भवति। यथा–अत्र जलाग्नी न स्त:। जलं वह्निश्च एकत्र सहैव न तिष्ठति अत: अत्र जलसहितवह्न्यभाव: वह्निसहितजलाभावो वा न व्यवह्रियते केनापि। अत एव सर्वत्र उभयाभाव: न विशिष्टाभाव:।

**व्यधिकरणधर्मपुरस्कृतोऽभाव: अमान्य:–**

पट: सर्वत्र स्वगतपटत्वधर्मेण तिष्ठति घटश्च सर्वत्र स्वगतघटत्वेन रूपेण तिष्ठति व्यधिकरणधर्मस्य प्रकृते अर्थो भवति प्रतियोगिनि अवर्तमान: धर्म:। यथा–घटत्वेन पटो नास्ति, पटत्वेन घटो नास्तीत्याकारक:। किन्तु एतादृश: अभावप्रभेद: अमान्य:। यतोऽहि अभाव: सदैव निषेधात्मको भवति। निषेधश्च प्रसिद्धवस्तुन: एव भवति। पट: कदापि घटत्वेन पुरस्कृतो न भवति तर्हि तस्य निषेधस्य अभावस्य वा किमपि नास्ति औचित्यम्।

**अभावस्य न जगदुपादानकारणत्वम्**

विदुषामिदं मतं यत् अभाव: भाववस्तुन: उपादानं कारणं भवति। पिण्डाकारस्य मृद: नाशानन्तरं घट उत्पद्यते। बीजनाशानन्तरमेवाङ्कुर: उत्पद्यते। तन्तुनाशात् पटोत्पत्तिर्दृश्यते। नाश: अभाव एव। अत: अभाव: जगत: उपादानं कारणम्।

किन्तु यदि अभावः जगदुपादानकारणं स्यात्तदा सर्वाणि भावकार्याणि सर्वदा सर्वत्र च उत्पद्येरन् किन्तु नैतादृशो भवति। संसारस्य प्रत्येकवस्तुभिन्नम्, तत्र विचित्रता, विभिन्नता सिद्ध्यर्थं न अभावस्य जगदुपादानकारणत्वम्। एवञ्च कार्यस्य अन्वयीकारणमुपादानं भवति तत्कारणे कार्यस्य समाप्तिपर्यन्तं तस्मिन्ननुस्यूतं भवति। यथा पटकार्यस्योपादनं कारणं पटकार्यपर्यन्तं कार्पासं तत्र अनुस्यूतं भवति। घटकार्यात् प्राक् घटाभावः तत्र न अनुस्यूतं तिष्ठति। अतः अभावः न भावस्य निमित्तकारणम्।

उपादानमुपादेये परस्परं समानजातीये भवतः। पृथिवीजलयोरपि परस्परमुपादानमुपादेयभावो न भवति, तर्हि अत्यन्तविजातीयः सन् अभावः कथं भावस्य उपादानकारणं सम्भवति? यवादिविनाशानन्तरमङ्कुरस्योत्पत्तिरिति न शंकनीयम्, बीजनाशानन्तरमपि तदवयवेनाङ्कुरस्योत्पत्तिः भवति अन्यथा चूर्णादिभिरपि अंकुरोत्पत्तिप्रसङ्गः स्यात्।

**अभावस्य निमित्तकारणता–**

कार्यं प्रति अभावः न समवायिकारणमसमवायिकारणं वा किन्तु निमित्तकारणं भवति। यथा–अग्नेर्दाहं प्रति मण्यभावः कारणं भवति। कार्यं प्रति प्रतिबन्धकाभावस्य कारणत्वं प्रसिद्धम्। कारणसत्वे कार्यसत्वम्, कारणाभावे च कार्याभावः, दण्डसत्वे घटसत्वं दण्डाभावे च घटाभावः इति विज्ञेयः।

कार्यं प्रति तत्कार्यस्य प्रागभावः कारणं भवति प्रागभावं विना कार्योत्पत्तेः व्यवस्था समीचीना न स्यात्। सहस्रतन्तुभिः जायमानस्य पटस्य उत्पत्तिः तदन्तर्वर्तिभिः शततन्तुभिः न भवति यतोऽहि सहस्रतन्तुकपटस्य प्रागभावः तेषु सहस्रतन्तुषु विद्यते न तु शततन्तुषु। यदि प्रागभावः निमित्तकारणं न स्यात्तदा शततन्तुष्वेव पटोत्पत्तिः स्यात्।

**अभावस्य न अधिकरणस्वरूपता–**

प्रभाकरमीमांसकानामिदं मतं यत् अभावः न अधिकरणाद्व्यतिरिक्तः। यत्र भूप्रदेशे घटो नास्ति" एतादृशी या प्रतीतिः सा भूप्रदेशस्वरूपा एव। अतः अभावः भावापेक्षयाऽभिन्नएव।

नैयायिकः उपरोक्तविचारान् खण्डयति। घटाभावस्य अधिकरणात्मकत्वे गौरवम् अनन्ताधिकरणात्मकत्वकल्पनापेक्षया अतिरिक्तकल्पनाया एव लघीयस्त्वात्[1]।

1. न्यायसिद्धान्तमुक्तावली–अभावप्रकरणम्।

घटाभाववान् पटः इत्यत्र घटाभावो पटस्वरूपः, घटाभाववान् मठः इत्यत्र घटाभावो मठस्वरुपः एवमेव अनन्तान्यधिकरणानि सन्ति तत्स्वरूपस्याभावस्यापि आनन्त्यं स्यात्, तथा च गौरवम्।

सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्यैकत्वात् नित्यत्वाच्च अधिकरणस्य च अनित्यत्वात् नानात्वाच्च घटात्यन्ताभावस्यापि आनन्त्यप्रसक्तिः अनित्यत्वप्रसक्तिश्च स्यात्।

अभावस्य अनधिकरणस्वरूपत्वे घटाभाववद्भूतलमित्यत्र आधाराधेय-भावोप्युपपद्यते। घटाभावः आधेयः भूतलं च आधारः। अत्र आधारः आधेयश्च एक एव अर्थात् अभावस्य अधिकरणात्मकत्वे तत्तच्छब्दाभावाधिकरणानां तत्तद्गन्धाभावाधिकरणानां तत्तद्रसाभावाधिकरणानां तत्तद्रूपाधिकरणानां वाय्वादीनां तत्तच्छब्दगन्धरसरूपधर्मप्रतियोगिशब्दगन्धरसरूपादिग्राहक तत्तदिन्द्रियाग्राह्यत्वात् प्रत्यक्षत्वं न स्यात्। यथा–वायौ रूपाभावो यदि वाय्वात्मकस्तदा वायोश्चक्षुषाऽग्रहणात् वाय्वात्मकरूपाभावोऽपि प्रत्यक्षो न स्यात् वायुवृत्तिरूपाभावस्य वाय्वतिरिक्तत्त्वे तु " वायौरूपं नास्तीति प्रतीत्या चक्षुषा रूपाभावप्रत्यक्षं स्यात्।

अभावस्य ज्ञानस्वरूपत्वमिति बौद्धानां मतं, मीमांसकैकदेशिनः कालात्मकत्वमिति मतं तदपि खण्डितम्। अतएवोक्तं मुक्तावल्याम्–एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः।

**मुक्तिरपि अभाव एव–**

सूत्रकारः गौतमः वदति "तदत्यन्तविमोक्षोऽपवर्गः[1]" अत्र अत्यन्तपदस्यार्थः– वर्तमानजन्मनो नाशः अग्रिम जन्मनोऽपि नाशः। अनेनैव दुःखादात्मनः आत्यन्तिकी निवृत्तिः भवति। यावत्कालपर्य्यन्तं वासनादि आत्मगुणानां नाशः न भवति तावत्कालपर्य्यन्तं दुःखस्य आत्यन्तिकी निवृत्तिः न भवति। अतः मुक्तावस्थायामात्मनः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्म-विशेषगुणानां नाशो जायते।

न्यायमञ्जर्यां मुक्तात्मनः परिचयो विद्यते। यथा–

**स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः।**
**ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः।।**
**संसारबन्धनाधीनदुःखक्लेशाधदूषितम्[2]**।। इति।

1. न्यायसूत्रम्–1/1/22।
2. न्यायमञ्जरी।

## न्यायाभिमतापवर्गावलोकनम्

भारतीयदर्शनस्यावान्तरप्रस्थानानां कतिपयसमानतन्त्रेषु अन्तर्भावेन किं विनिगमकं स्यादिति सम्यग्विमर्शे दर्शनेषु मिथः सारूप्यवैरूप्यबहुत्वात्, दुःशक इव प्रतिभाति। प्राचीनाभियुक्तैः आस्तिकनास्तिकाभ्यां वैदिकावैदिकाभ्यां च द्विधा क्रियमाणो भेदः प्रायो लभ्यते। प्राचीनतमग्रन्थेषु तु काचित् एवंविधा सुस्पष्टं व्यक्तिभेदिनी पद्धति नाङ्गीकृता दृश्यते। परवर्तिभिस्तु आस्तिकनास्तिकविभजनस्यापि निमित्तं कदाचित् परलोकाङ्गीकारानङ्गीकारौ, कदाचिच्चेश्वराङ्गीकारानङ्गीकारौ स्वीक्रियेते। किन्त्वेवंविधः सर्वाप्यभ्युपगमो शास्त्रस्वभावं नानुवर्तते। तथा हि–प्रथमपक्षाभ्युपगमे चार्वाकान् व्यतिरिच्यान्ये सर्वेऽपि आस्तिकनास्तिकाभिधाना आस्तिकत्वेनैवाभिपूता भवेयुः, द्वितीये च ईश्वरानङ्गीकारात् बौद्धजैनवत्प्राचीनाः सांख्यवैशेषिकमीमांसकाश्चापि साहमत्येन नास्तिका एव स्युः, जगत्कर्तृत्वेनेश्वरानङ्गीकाराच्च योगिनः नास्तिकप्राया भवेयुः। इत्थं वेदप्रामाण्याप्रामाण्यानुरोधेन सर्वे आगमप्रामाण्यवादिनः सांख्यबौद्धजैनसमवर्तिनः सन्तः शैवशाक्तकापालिकप्रभृतयः साक्षात्, पाञ्चरात्रागमादि प्रतिपन्नाः सर्वेऽपि प्राचीनाः वैष्णवाः उपनिषन्मात्रपरमप्रमाणवादिनः परम्परया अवैदिकत्वेनैव परिगणनीयाः स्युः। अत इत्थं विधीयमानो भेदः कथञ्चिदपि न तात्पर्यज्ञामनुधावति न च सम्प्रदायक्रमं पुष्णाति।

सर्वेषामेव भारतीयदर्शनानां सर्वतन्त्रसिद्धान्तभूतं लक्ष्यं निर्वाणमेवेति विदितप्रायम्। निर्वाणं मोक्षोऽपवर्गः निःश्रेयसमित्यादयो नानादर्शनसम्प्रदायेषु स्वेन–स्वेन विशेषेण प्रयुज्यमाना अपि स्वारस्येन पर्यायभूता एव। एतत्समानलक्ष्यानुरोधेनैव सर्वाण्येवात्रत्यदर्शनानि भारतीयदर्शनत्वेन परिचीयन्ते। यद्यपि निर्वाणस्यावान्तरस्वरूपेऽस्ति दार्शनिकेषु तत्तन्मतविशेषस्तथापि अस्ति तत्राविशेषः आत्यन्तिको दुःखोच्छेदः दुःखोच्छेदाय साक्षात् परम्परया वा योगस्याङ्गीकारोऽपि सर्ववादिषु समान एव। मोक्षेण योजनात् योग इति नाप्रसिद्धम्। दुःखस्वरूपविषये तदुच्छेदस्वरूपे चास्ति विमतिस्तथापि दुःखहानाय तदुपायोपादानं सर्वेषामविरुद्धम्। एवं सत्येव योगनिर्वाणयोरविलोमेन ग्रहणात् भारतीयदर्शनानामध्यात्मपरत्वं स्पष्टीभवति। आत्मनि अधीत्यत्र नित्येऽनित्ये वाऽत्मनीति युज्यतो भेद आत्मानात्मवादिभ्यां स्वीकुरुतः। अतएव निर्वाणे आत्मनो लाभो विगमो चेति द्वयमेवाध्यात्मसहं भवति।

एतेन इदं निर्गलति यद् भारतीयदर्शनानामध्यात्मपरत्वस्वीकृते वेदप्रामाण्याप्रामाण्ययोः ईश्वरसत्वासत्वयोः आत्मानात्मवादित्वयोरन्यतर एव विनिगमको नावधारणीयः।

यद्यपि परवर्तिकाले दुःखोच्छेदिनिर्वाणमित्यस्य सकलदर्शनेष्वविरोधेनाङ्गीकारः, तथापि तत्र प्रथमत्वेन सांख्यवैशेषिकबौद्धैरेव इत्थं कृत्वा तल्लक्ष्यीकृतमिति स्पष्टम्। तत्रापि भगवताबुद्धेन तदनुयायिभिश्च यथा सकारणं सामत्येन च दुःखसत्यम्, सकारणं निरोधसत्यं च सम्यक् विस्तृतं तथान्यत्र नैव लभ्यते। एतद्द्वयप्रख्यापनभङ्गैव प्रतीत्यसमुत्पादक्षणभङ्गकर्मफलनिरात्मतनरीश्वरनिःस्वभावादयोऽनेकशो वादा बौद्धेषु पर्य्यवसिताः। न तिरोहितं यदुपनिषत्सु कर्मचितोऽस्य लोकस्य परस्य न अनित्यत्वात् हेयत्वं बुद्धात् पूर्वतनैश्च जनकयाज्ञवल्क्यादिभिः प्रकटितम्, तथापि निःशेषं निरपवादं सर्वस्यैव दुःखत्वेन स्वीकारः, अन्यहेतुवर्जनपुरःसरं च केवलं जीवगतायाः अविद्याया एव दुःखनिदानत्वेन अङ्गीकारो बौद्धानां विशेषः। प्रायः अविलोमेनायं दुःखवादः समुपलब्धप्रायेषु सांख्यवैशेषिकग्रन्थेषु सम्मतः। इत्थमुपनिषत्सु कथञ्चिदंशतोऽभिमतो दुःखोच्छेदवादः सांख्यवैशेषिकबौद्धैः प्रमाणप्रमेयतत्त्वनिर्धारणालोचनपुरः सरं सकलभारतीयदर्शनानां लक्ष्यत्वेन शिरोभूतः प्रशस्यते।

सांख्यवैशेषिकबौद्धाः मोक्षस्य स्वरूपलक्षणं दुःखोच्छेदत्वेन अन्ये तु उपलक्षणोपाधिविशेषणादिद्वारा तत्त्वेन तटस्थलक्षणं सुखस्वरूपात्माद्यधिगततत्त्वेन वा स्वरूपलक्षणं स्वीकुर्वन्ति। अतएव सन्निर्वाणासन्निर्वाणवादाभ्यां मोक्षवादिनां द्विधा विभागः। तत्र असन्निर्वाणवादः सत्ताशेषपूर्वकसत्तानिःशेषपूर्वकदुखध्वंसवादाभ्यां द्विविधः। तत्र मोक्षस्याभावरूपत्वेन द्वयोः साम्यम्, आत्मसत्ताशेषनिःशेषाभ्यां च भेदः। यद्यपि दुःखध्वंसोऽभावत्वेनैव परिचीयते तथापि तस्यालीकत्वं शून्यत्वं वा नार्थः अपितु सर्वदुःखोपरमः, तृष्णाक्षयः, अविद्यानाशः, शान्तः, अपवर्गः, अमृतम्, धर्मप्रविवेकः, धर्मप्रविचयः, विवेकख्यातिः इत्यादिशब्दाभिधेयः प्रज्ञाप्रकर्ष एव। स्वसत्ताशेषपूर्वकदुःखध्वंसवादे सांख्यवैशेषिकाः गौतमीयाश्च प्रतिपन्नाः। सर्वदुःखेषु आत्मतृष्णाया अपि संग्रहात् आत्मसत्तानिःशेषवादे सर्वे च बौद्धाः पर्य्यवसन्नाः।

यद्यपि सकलबौद्धनिकायेषु नैरात्म्यवादोऽविरुद्धस्तथापि निर्वाणस्वरूपविषये परस्परं तेषां विचित्रस्थितयः। तथाहि–स्थविरवादिनो वैभाषिकाः, सर्वाऽस्तित्ववादिनो विज्ञानवादिनश्च भावनिर्वाणवादिनः। एतेषां मते निर्वाणो वस्तुसद्धर्मः, यत्र समस्तदुःखानां विलयश्चेतो विमुक्तिः आश्रयपरावृत्तिर्वा भवति। सौत्रान्तिकास्तु अभावनिर्वाणवादिनः, ते हि हेतुफलाभ्यामुभयथापि निर्वाणस्य वस्तुतत्त्वं नाधिगच्छन्ति। माध्यमिकास्तु भावाभावादिविकल्पकोटिमुक्तं निर्विकल्पकमनिर्वचनीयं निर्वाणमभ्युपगच्छन्ति। वज्र–कालचक्र–सहजावादिनस्तु निःस्वभावजृम्भितं महासुखरूपं निर्वाणमामनन्ति।

उपनिषत्सु असद्वादस्य भूरिशो निराकरणात् सन्निर्वाणवादो विशेषणे औपनिष्ठानामन्युपगमः। सन्निर्वाणवादे दुःखाभावमुपाधित्वेनाङ्गीकृत्य सुखावाप्तिः स्वरूपावाप्तिः परमात्मस्वरूपावाप्तिर्वा मोक्षलक्षणं सम्मतम्। सन्निर्वाणवादिषु यद्यपि स्वरूपाधिगमः समानः तथापि आत्मनः अणुत्व-विभुत्व-मध्यमत्वादिभिः परिमाणभेदः, एकत्व-बहुत्व-शेषत्व-शेषित्व-सविशेषत्व-निर्विशेषत्वादिभिः संख्यास्वरूपादिभेदः, एवंविध-भेदानुरोधेन स्वरूपावाप्तावपि भेदः सिद्ध्यति। अस्मिन् पक्षे सर्वेऽपि द्वैत-द्वैताद्वैत-निर्विशेष-सविशेष-शुद्ध-अचिन्त्याद्वैतवादिनोवेदान्तिनः, भेदाभेदादि-वादिनः शैवशाक्ताद्यागमिकाः जैनाश्चान्तर्भवन्ति। स्वर्गादिसुखैकयोगवादिनामर्वाचीन मीमांसकानां पक्षेऽपि दुःखध्वंसोपलक्षितात्मगतनिरतिशयसुखभोगस्वीकारात् कथञ्चित् मोक्षः सिद्धयति। वस्तुतस्तु तेषां मते मोक्षो योगश्च नैवं संगतः। सुखाङ्गीकारानङ्गीकाराभ्यां तु विशेषः।

**भारतीयदर्शनेषु मोक्षस्वरूपम्–**

तत्र खलु मोक्षविवेचनप्रसङ्गे के तावन्मोक्षाभिलाषिणो नाम मुमुक्षवो जीवाः? इति जिज्ञासायां पूर्वं जीवभेदनिरूपणमेवावश्यकम्। तथाहि जीवो नाम बद्ध-मुक्त-नित्यभेदात् त्रिविधः। तत्र बद्धाः जीवाः अनिवृत्तसंसाराश्चतुर्दशभुव-नात्मकाण्ड-कटाहवर्तिनो ब्रह्मादिकोटिपर्य्यन्ताश्चेतनविशेषा एव। ते पुनर्द्विविधाः शास्त्रावश्याः शास्त्रवश्याश्चेति। तेषु शास्त्रवश्याः करणायत्तज्ञानाबद्धादेवमनुष्यादयः। शास्त्रावश्याश्च तिर्यक्स्थावरादयो जीवविशेषा इति। शास्त्रवश्येष्वपि बुभुत्सुमुमुक्षुभेदात् द्वैविध्यम्। तत्र बुभुत्सवस्त्रैवर्गिकपुरुषार्थपरायणा जीवाः। तेऽपि पुनर्द्विविधाः– अर्थकामपराः धर्मपराश्चेति। तत्र अर्थकाममात्रपरादेहात्माभिमानिनः, धर्मपराश्च चोदनालक्षणोऽर्थो धर्मः[1]" "वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः[2]" "अलौकिकश्रेयः साधनं धर्मः[3]" इत्यादि लक्षणलक्षितयज्ञदानतपस्तीर्थयात्रादिनिष्ठा जीवाः। ते च धर्मपराजीवाः देहातिरिक्तस्यात्मनः परलोकोऽस्तीति ज्ञानवन्तः पुरुषविशेषा एव। मुमुक्षवश्चापि द्विविधा एव–कैवल्यपराः मोक्षपराश्चेति।

इत्थं खलु भारतीयदर्शनरीत्या कैवल्यादिमोक्षस्वरूपविवेचनं तावदारभते। तत्र हि भारतीयदर्शनानि खलु आस्तिकनास्तिकभेदभिन्नानि द्विविधान्येव। तेषु च ये

1. मीमांसासूत्रम्–1.1.2।
2. मीमांसापरिभाषा–प्रथमप्रकरणम्।
3. तत्रैव।

हि मानवाः वेदान् प्रमाणत्वेनाङ्गीकुर्वन्ति, तेऽत्रास्तिकपदवाच्याः। तेषामेव दर्शनानि आस्तिकदर्शनपदाभिधेयानि। ये तु तान् वेदान् प्रमाणत्वेन नाङ्गीकुर्वन्ति त एव नास्तिकपदप्रतिपाद्याः। तेषामेव दर्शनान्यपि नास्तिकदर्शनपदव्यपदेश्यानि सन्तीति तात्पर्यमत्र वृद्धानाम्।

## (i) चार्वाकदर्शने मोक्षः

नास्तिकशिरोमणिना चार्वाकेन प्रतिपादितं दर्शनमेव चार्वाकदर्शनम्। तत्र च चार्वाकदर्शने येन केन प्रकारेण प्राप्तं शारीरिकं सुखमेव पुरुषार्थः। स एव मोक्षपदवाच्यश्च, न तु तदतिरिक्तं किमप्यन्यद्वस्तुमोक्षपदप्रतिपाद्यमस्ति। अथवा कण्टकादिजन्यं दुःखमेव नरकपदवाच्यम्। कान्तालिङ्गनादिजन्यं सुखमेव स्वर्गपदाभिधेयं पुरुषार्थपदार्थः। लोकसिद्धो राजा एव परमेश्वरः, देहोच्छेद एव मोक्षः, मरणमेव वा मोक्षः। तन्मते हि देहातिरिक्तस्यात्मनोऽसत्वात्,

**यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः**[1]**॥**

इति चार्वाकमतमनुसृत्य चार्वाकमतं लोकायतमतपदेनाप्युच्यत इति।

तथैव सुरगुरुणा सुरुगुरुभिन्नेन केनचिद् बृहस्पतिनामकेन वा पुरुषेणाप्युक्तम्।

**अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।**
**बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता**[2]**॥** इत्यादि।

## (ii) बौद्धदर्शने मोक्षः

बुद्धमनुसरन्तो बौद्धास्तेषां दर्शनं बौद्धदर्शनम्। ते च बौद्धाः-माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकनामभिः चतुर्विधाः प्रसिद्धाः।

### (क) माध्यमिकबौद्धदर्शने मोक्षः

तेषु च भगवता बुद्धेन प्रथमतः स्वशिष्येभ्यः "सर्वं शून्यम्" इत्युपदेशे कृते यैः शिष्यैस्तदेव तत्त्वं यथार्थत्वेन परिगृहीतम्, न तु तस्योपरि कोऽप्याक्षेपः कृतः, ते मध्यमबुद्धित्वान्माध्यमिका इति शब्देन व्यवहृताः। तेषां मते "सर्वं क्षणिकं क्षणिकम्, सर्वं दुःखं दुःखम्, सर्व स्वलक्षणं स्वलक्षणम्, सर्वं शून्यं शून्यम्" इति भावनाचतुष्टयवशात् निखिलवासनानिवृत्तौ परं निर्वाणं शून्यरूपम्। तदेव मोक्षपदार्थः।

---

1. चार्वाकदर्शनम्।
2. चार्वाकमतम्।

**(ख) योगाचारबौद्धदर्शने मोक्षः**

क्षणिकविज्ञानवादियोगाचाराणां मते हि अनादिवासनावशात् बद्धैरेवानेकाकारेण भासते इति प्रागुक्तगुरूपदिष्टभावनाचतुष्टयपरिचयवशात् सर्वविधवासनोच्छेदे सति विविधविषयाकारोपद्रवानुदयात् विशुद्धज्ञानोदय एव मोक्षः।

**(ग) सौत्रान्तिकबौद्धदर्शने मोक्षः**

सूत्रान्तं पृच्छन्ति ये ते सौत्रान्तिकाः ते एव हि बाह्यार्थानुमेयत्ववादिनोप्युच्यन्ते। तेषां नये हि तदुभयं बाह्यमान्तरञ्च यत्तस्य निरोध एव मोक्षः। तन्निरोधानन्तरं विमलज्ञानोदय एव वा मोक्षपदार्थः। तन्निरोधोपायो मार्गः स च तत्त्वज्ञानात्मकः। तच्च तत्त्वज्ञानं प्राचीनभावनाबलाद् भवतीति।

**(घ) वैभाषिकबौद्धदर्शने मोक्षः**

एतेषां सिद्धान्ते च दुःखतत्कारणं तदुभयनिवृत्युपायः "सर्वं क्षणिकम्" इति भावनाख्यो मार्गः सर्वनैरात्म्यवासनारूपो निरोधो हि मोक्षपदाभिधेयश्चेति। तथैव भणितमाचार्यपादैः–

क्षणिका सर्वसंस्कारा इति या वासना स्थिरा।
स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते[1]॥
रागादिज्ञानसंतानवासनोच्छेद संभवा।
चतुर्ण्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता[2]॥ इति।

**(iii) जैनदर्शने मोक्षः**

आर्हतदर्शने च सम्यग्दर्शन, सम्यग्ज्ञान, सम्यक्चारित्र्यैश्च मोक्षः सिद्ध्यति। अन्ये केचन सौगताः–गतसमस्तक्लेशतद्वासनावरणज्ञानस्य सुखैकतानस्यात्मन उपरि देशावस्थानमेव मुक्तिः इति स्वीकुर्वन्ति। तथैवाभियुक्तैरप्युक्तम्–

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयोग्रहाः।
अद्यापि न निवर्तन्ते त्वालोकाकाशमागताः[3]॥

**(iv) सांख्यदर्शने मोक्षः–**

अनारब्धविपाकानां कर्मणां तत्त्वज्ञानाग्निना बीजभावे दग्धे सति प्रारब्धविपाकानां कर्मणां तूपभोगेन क्षये सति शरीरविनाशे प्राप्ते प्रधानस्य

1. बौद्धदर्शनम्।
2. तत्रैव।
3. तत्रैव।

कृतप्रयोजनवशात् तं विम्बपुरुषं, प्रतिनिवृत्तौ "ऐकान्तिकमवश्यम्भावि, आत्यन्तिकमविनाशि" इत्युभयं कैवल्यं दुःखत्रयविनाशरूपं मोक्षं प्राप्नोति पुरुष इति। तत्र हि–

धर्मेण गमनमूर्ध्वंगमनमधस्तात् भवत्यधर्मेण।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः[1]॥
प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति[2]॥

"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः[3]" "यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः[4]" "आध्यात्मिकमाधिभौतिकाधिदैविकानामेषां त्रिविधदुःखानां याऽत्यन्तनिवृत्तिः स्थूलसूक्ष्मसाधारण्येन निःशेषतो निवृत्तः सोऽत्यन्तपरमः पुरुषार्थो मोक्षः।

जीवन्मुक्तिदशायाञ्च प्रारब्ध कर्मफलातिरिक्तानां दुःखानामनागतावस्थानां बीजाख्यानां दाहः विदेहकैवल्ये तु चित्तेन सह विनाश इत्यवान्तरविशेष इति। कर्मनिमित्तौ वा अविवेकादिनिमित्तो वा भवतु प्रकृतिपुरुषयोर्भोग्यभोक्तृभावः। सर्वथाप्यनादितया दुरुच्छेदस्य तस्योच्छेदः परमपुरुषार्थः[5]।

### (v) पातञ्जलयोगदर्शने मोक्षः

तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम्[6]" पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्ते[7]" इति तस्यादर्शनस्याभावात् बुद्धिपुरुषसंयोगाभावः, आत्यन्तिको बन्धनोपरमः, एतद्धानम्, तद्दृशेः कैवल्यम्–पुरुषस्यामिश्रीभावः पुनस्संयोगो गुणैरित्यर्थः। दुःखकारणनिवृत्तौ दुःखोपरमो हानम्, तदा स्वरूपप्रतिष्ठः पुरुषः[8]।

---

1. सांख्यकारिका–का.सं.–44
2. सांख्यकारिका–का.सं.–68
3. सांख्यसूत्रम्–अ.1.,सू.1।
4. तदेव अ.6 सू. 70।
5. सांख्यप्रवचनभाष्यम्।
6. योगसूत्रम्–सा. पाद सू. 25।
7. यो. सू. कै. पा. सू. 34।
8. व्यासभाष्यम्–25 साधनपादे।

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारणात्मनां गुणानां तत्कैवल्यम्। स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्वानभिसंबन्धात् पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यमिति।[1]

### (vi) मीमांसादर्शने मोक्षः

मीमांसादर्शनसूत्रे यद्यपि सिद्धान्ततया मोक्षो नाङ्गीक्रियते सूत्रकृता महर्षिणा जैमिनिना किन्तु धर्मानुष्ठानवशात् अभिमतधर्मसिद्धिः "तेन धर्मेण च स्वर्गादिसिद्धिरिति तैर्जैंगीयते, तस्माद्धर्मे स्वतः सिद्धप्रमाणभावे वेदे वर्तमाने "ज्योतिष्टोमेन स्वर्गकामो यजेत" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "पुत्रेष्ट्या पुत्रकामो यजेत" "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यादि विधिभिः सुखात्मकस्य स्वर्गादेरेव प्राप्तिर्विहिता, सैव च मोक्ष इत्यङ्गीकृतत्त्वात्तैः "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात् स स्वर्ग इति सर्वे हि पुरुषाः स्वर्गकामाः। कुत एतत्प्रीतिर्हि स्वर्गः[2]। तथापि नवीनैः श्रीमत्पार्थसारथिमिश्रादिभिः मीमांसकैः मोक्षस्य सत्ता नाङ्गीक्रियत एव। तथाहि शास्त्रदीपिकायां मोक्षवादारम्भप्रसङ्गे "यत्र तु अस्य सर्वमात्मैवाभूत्" इति श्रुतिव्याख्यानप्रसङ्गे यदपि मुक्तौ आत्मनोऽद्वितीयवचनम् तदपि न प्रपञ्चस्वरूप-निषेधार्थम्, किन्तु सत एव प्रपञ्चस्यात्मसम्बन्धनिषेधार्थमेवास्येति वचनात्, न ह्येतावदुच्यते "यत्र सर्वमात्मैवाभूत्" इति।

सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः। सुखदुःखोच्छेदश्च-धर्माधर्मयोरुच्छेदात्, धर्माधर्मयोरुच्छेदश्च उत्पन्नानां धर्माधर्माणामुपभोगेन नित्यनैमित्तिककर्मानुष्ठानेन आत्मज्ञानेन च विरोधात् उत्पाद्यानाञ्च काम्यानुष्ठान-निमित्तानाञ्चाधर्माणां विहितानुष्ठानेन प्रतिविद्वाकरणेन च परिहारात्। असति शरीरारम्भे पूर्वशरीरनिपाते चाशरीरेऽवस्थितो मुक्तो भवति[3]।

### (vii) वेदान्तदर्शने मोक्षः

"आनन्दरूपब्रह्मत्वावाप्तिः समूलसर्वानर्थनिवृत्तिश्च मोक्षः[4]" इति। तथाहि—आनन्दात्मब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्तिश्च। "ब्रह्मवेद ब्रह्मैव भवति[5]"

---

1. व्यासभाष्ये 34 कैवल्यपादे।
2. मीमांसासूत्रम् 4/3/7।
3. शा. दीपिका 1.1.5
4. वेदान्तपरिभाषाप्रयोजनपरिच्छेदे।
5. मुण्डकोपनिषद् 3/2/9।

"तरति शोकमात्मवित्[1]" इत्यादिश्रुतेः।

न च संस्काराङ्गीकारे विदेहमुक्त्यभावः, प्रारब्धकर्मणःनाशे तत्त्वज्ञानानुसंधानादेव संस्कारनिवृत्तौ तत्सिद्धेः[2]।

अथमन्यते—अविद्यायाः निवृत्तत्वात् संस्कारस्य चानुपादानत्वात् निरूपमादानो देहेन्द्रियादिः कथं सिद्ध्येदिति? तर्हि तत्त्वसाक्षात्कारे जातेऽप्यप्रारब्धक्षयमविद्याक्लेशनिवृत्या जीवन्मुक्तिः[3]। तस्माद् ब्रह्मप्राप्तिश्रुतिः अविद्यानिवृत्तौ जीवस्य स्वरूपभूतब्रह्माभिव्यक्तिविषया[4]। तस्मान्न कर्मनिमित्तः शरीरादिसम्बन्धः किन्त्वविद्याकृतः। स च तत्त्वज्ञाननिवर्त्यः। अतएव श्रुतिस्तत्त्वदर्शिनो यथापूर्वं संसारित्वं व्यावर्तयन्ति—"स चक्षुरचक्षुरिव स कर्णोऽकर्ण इव" इत्यादिका।

न च तत्त्वज्ञाने सति सद्यः शरीरपात इति वाच्यम्, "तस्य तावदेवचिरं यावन्न विमोक्ष्येऽथ संपत्स्ये'' इति श्रुत्या प्रारब्धकर्मशेष समाप्तिपर्यन्तमवस्थानावगात्मवत्[5]।

"एवं मुक्तिफलानियमस्तदवस्थावधृतेः तदवस्थावधृतेः[6]" यथा मुमुक्षोर्द्विधासाधनावलम्बिनः साधवीर्यविशेषाद्विधालक्षणे फले ऐहिकामुष्मिकफलत्व कुतो विशेषप्रतिनियमो दृष्टः एवं मुक्तिलक्षणे-अप्युत्कर्षापकर्षकृतः कश्चिद्‌विशेषप्रतिनियमः स्यादित्याशङ्क्याह—एवं मुक्तिफलानियम इति।

न खलु मुक्तिफले कश्चिदेवं भूतो विशेषप्रतिनियम आशंकितव्यःतदवस्थावधृतेः। मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते। एकाकारात्मकं ब्रह्मैव मुक्त्यवस्था[7]। तस्मादनतिशयानन्दस्वभावस्यात्मनोऽविद्यातिरोधानमेव मोक्षः, विद्यानिमित्तशतदस्तमयो मोक्षः। एवमेव जीवन्मुक्तिरपि स्थापिता। तथाहि-

**अविद्यालेशशब्देन मोहाकारान्तरोक्तितः।**
**ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः[8]॥**

---

1. छान्दो. 7/1/3।
2. विदेहमुक्तिसिद्धिः।
3. विवरण प्र.सू. 1 वर्ण 1।
4. वि.प्र.सू. 4, वर्ण 2।
5. छा.6.14.2।
6. वेदान्तसूत्रम्—3/4/52।
7. शा. भा., अ. 3, पादः 4, अधिकरणम् 1, सू. 52।
8. अद्वैतवेदान्तदर्शनम्।

क्लेशानुवृत्तौ तज्जन्यकर्मादेरनुवृत्तितः।
उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिद्ध्यति[1]॥

तथापि– दुःखं सुखविरोधीति तन्नाशोऽपि हि न स्वतः।
परमार्थः सुखमात्रं तु तथा चित्सुखदर्शने[2]॥

तस्मादुदाहृतश्रुतिसूत्रानुसारिभिः मुक्तानां जीवानां यावत्सर्वमुक्तिवस्तु-सच्चैतन्यमात्रत्वाऽविरोधिबद्धपुरुषाविद्याकृतनिरवग्रहैश्वर्यतदनुगुणगणफला-विशिष्टनिरतिशयानन्दस्फुरणसमृद्धनिःसन्धिबन्धपरमेश्वरभावापत्तिः[3]।

मुक्तौ न दुःखोच्छेदमात्रम्, किन्तु निरतिशयानन्दस्फुरणमपि।

तदुक्तम्–

तस्मादविद्यास्तमयो नित्यानन्दप्रतीतितः।
निःशेषदुःखोच्छेदाच्च पुरुषार्थः परो मतः[4]॥

माधवाचार्याः अपि निगदितवन्तः "ततश्च तत्त्वमस्यादि विद्यया तदविद्यानिवृत्तौ निरतिशयानन्दात्मलाभरूपपरमपुरुषार्थः सेत्स्यतीति[5]।

## (viii) वैशेषिकदर्शने मोक्षः

एतद्दर्शनमतानुसारेण आत्यन्तिकीदुःखनिवृत्तिरेव मोक्षः। तद्धि "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः[6]" इति सूत्रम्" धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निः-श्रेयसाधिगमः[7]" इति च सूत्रम्। तत्र भाष्यं ज्ञानपूर्वकात्तु कृतात् असंकल्पितफलात् कर्मणो विशुद्धे कुले जातस्य जीवस्य दुःखावगमोपायजिज्ञासया आचार्यमुप-संगम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाद्यभावात्। तज्जातयोर्धर्माधर्मयोरनुत्पत्तौ पूर्वसंचितयोर्धर्माधर्मयोश्चोपभोगान्निरोधे संतोषसुखं शरीरपरिच्छेदञ्चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणो केवलो धर्मः परमार्थदर्शनसुखं

---

1. तदेव।
2. सिद्धान्तलेशसंग्रहे–चतुर्थपरिच्छेदः
3. तदेव।
4. अद्वैताचार्याणाम्।
5. सर्वदर्शनसंग्रहः–माधवाचार्यः।
6. वैशेषिकसूत्रम्–1.1.2।
7. वैशेषिकसूत्रम्–1/1/4।

कृत्वा निवर्तते। तदात्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपसमो मोक्ष इति।

अभ्युदयस्तत्त्वज्ञानं निःश्रेयसम्, आत्यन्तिकी दुःखनिवृत्तिः तदुभयं यतः स धर्मः। अभ्युदयद्वारकं निःश्रेयसमिति मध्यमपदलोपी समासः पञ्चमी तत्पुरुषो वा। स च धर्मो निवृत्तिलक्षणो हीति[1]।

**अभ्युदयः सुखम् निःश्रेयसमेककालीनसकलात्मविशेषगुणध्वंस[2] इति।**

पुनरत्र उपस्कारकृता उक्तम्–निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः। दुःखनिवृत्तेश्चात्यन्तिकत्वं समानाधिकरणदुःखप्रागभावासमानकालीनत्वं युगपदुत्पन्नसमानाधिकरणसर्वात्मविशेषगुणध्वंससमानकालीनत्वं वा। अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावो वा मुक्तिः[3]।

भगवता कणादेन सूत्रितम्–"आत्मकर्मसु मोक्षो व्याख्यातः[4]" इति। अयमेव शरीरमनो विभागः आत्मकर्मसु सत्सु मोक्षो भवतीत्यर्थः। तत्रात्मकर्माणि तावत्–श्रवणं मननं योगाभ्यासो निदिध्यासनं प्राणायामः शमदमसम्पत्तिः आत्मपरात्मसाक्षात्कारो देहदेशान्तरोपभोग्य पूर्वोत्पन्नधर्माधर्मपरिज्ञानं तद्भोगानुरूपनानादेहनिर्माणं तयोर्भोगेन प्रक्षयो रागद्वेषलक्षणदोषधर्माधर्मयोरनुत्पादात् प्रवृत्यपाये जन्मापायः जन्मापायाद् दुःखापायलक्षणोऽपवर्गः। एवमेव कैश्चिदन्यैरप्युक्तम्–"दुःखात्यन्तोच्छेदापरपर्यायनिःश्रेयसपदाभिधेयो मोक्ष इति।

**(ix) न्यायदर्शने मोक्षः–**

"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः[5]" "बाधनालक्षणं[6] दुःखम्" "तदत्यन्तविमोक्षोपवर्गः[7]" इति सूत्राणि।

---

1. उपस्कारः 1.1.2।
2. न्यायसूत्रवृत्तिः।
3. उपस्कारः–1.1.4।
4. कणादसूत्रम्–6–1–16।
5. न्या. सू. 1/1/2।
6. न्या. सू. 1/1/21।
7. न्या. सू. 1/1/22।

यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषाः अपन्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्यपाये जन्मापैति, जन्मापाये दुःखमपैति, दुःखापाये च आत्यन्तिकोऽपवर्गो निःश्रेयसमिति। तेन दुःखेन जन्मनाऽत्यन्तविमुक्तिरपवर्गः। कथम्? उपात्तस्य जन्मनो हानम्, अन्यस्य चानुपादानम्। एतामवस्थामपर्य्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः। "तदभयमजरम्" अमृत्युपदं ब्रह्मक्षेमप्राप्तिः[1]। तत्त्वज्ञानेन विरोधितयाऽपहृते मिथ्याज्ञाने कारणाभावाच्च निवृत्तये रागद्वेषात्मके दोषे, तदभावाच्च प्रवृत्तेर्धर्माधर्मात्मिकां अनुत्पत्तौ, तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धस्याभावात् दुःखाभावादपवर्ग इति।

तस्य दुःखस्यात्यन्तविमोक्षः स्वसमानाधिकरण दुःखप्रागभावासमानकालीनो ध्वंसः। तस्य च जन्मापायादेव सम्भव इत्याशयेनोक्तम्–"दुःखेन जन्मनाऽत्यन्त-विमुक्तिरपवर्गः[2]" इति। दुःखेन दुःखानुषक्तेनेत्यर्थः[3]।

द्विविध (मुख्यगौण) दुःखावमर्शिना सर्वनाम्ना सर्वेषामात्मगुणानां दुःखवदमर्शात् अत्यन्तग्रहणेन च सर्वात्मा तद्वियोगाभिधानात् नवानामात्मगुणानां बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां निर्मूलोच्छेदोपवर्ग इत्युक्तं भवति[4]।

सोऽयं मिथ्याज्ञानादिकलापेन सर्वतो वियुक्तो मुक्त इत्युच्यते[5]।

स्यादेतत् महाप्रलयेऽपि मिथ्याज्ञानादिना दुःखान्ते नास्ति वियोग इति तत्रापि मुक्तिप्रसङ्ग इत्यत आह– सोऽयं मिथ्याज्ञानादिनेति, सर्वत इति। तृतीयार्थे तसिः सर्वेणेति। न च प्रलयावस्थायां सर्वेण वियोगः, कर्माविद्यावासनयोरविनाशात्। मुक्तौ तु तयोरपि विनाशः। कर्मवासना सर्वकार्याणामुत्पादिकाऽवस्थापिका च तन्निवृत्तौ तत्त्वज्ञानसंस्कारस्यापि प्रलय इत्यशेषविशेषगुणविमुक्तो मुक्त[6] इत्युच्यते इति सिद्धम्।

---

1. न्यायभाष्यम्–सू.–1.1.22।
2. तदेव।
3. न्या. सू. वृत्तिः।
4. न्यायमञ्जरी।
5. न्यायवार्तिकम्।
6. न्यायवार्तिकतात्पर्यटीका।

तथा च "अशेषविशेषगुणनिवृत्तिमोक्षः[1]" इति सङ्गच्छते।

## नैयायिकानामात्मदृष्टिः–

आत्मा तावत् दार्शनिकविचारधारायाः मेरुमणिरस्ति। परिगणितेषु द्वादशप्रमेयेषु मध्ये आत्मनः स्थानं सर्वप्रमुखमस्ति। अतः न्यायशास्त्रस्य आचार्या अपि एतत्स्वरूपमवलम्ब्य अनेकविधान् विचारान् प्रकटितवन्तः। केशवमिश्रानुसारेण देहेन्द्रियादिव्यतिरिक्तः आत्मत्वजातिमान् यः भवति स आत्मा इति। अयमाशयः यत् यः अहं प्रतीतेराश्रयः सत् देहेन्द्रियादि व्यतिरिक्तः प्रतिशरीरं भिन्नः विभुर्नित्यश्च स आत्मा[2]। महर्षिः गौतमः वदति यत् इच्छा, द्वेषः, प्रयत्नः, सुखं, दुःखं, ज्ञानानि आत्मनः लिङ्गं भवति[3]। कणादः एवं वदति यत् इच्छाद्वेषाद्यतिरिक्तं प्राणापाननिमेषोन्मेषमपि आत्मनः लिङ्गम्[4]। विश्वनाथः इन्द्रियस्य शरीरस्य चाधिष्ठाता[5] अन्नंभट्टश्च ज्ञानाधिकरणमात्मावादीत्[6]।

यद्यपि दैशिकसम्बन्धेन कालिकसम्बन्धेन च कालावधिज्ञानस्य आश्रयौ किन्तु समवायसम्बन्धेन आत्मा एव ज्ञानस्य आश्रयः। आत्मा यद्यपि अहं सुखी, अहं दुःखीत्यादि प्रतीत्या मानसप्रत्यक्षविषयः तथापि विप्रतिपन्नं प्रति तथा प्रतिपादयितुमशक्यम्, अतः आत्मसिद्धौ अनुमानप्रमाणमपि तार्किकैः प्रदर्शितमस्ति। न्यायसिद्धान्तमुक्तावल्यां विश्वनाथः वदति यत् यद्यप्यात्मनि "अहं जाने" "अहं सुखी" इत्यादि प्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव "शरीरादिभिन्नस्तत्तत्प्रतीतिगोचर" इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति–"करणं हि सकर्तृकम्[7] इति। वास्यादीनां छिदाकरणानां कर्त्तारमन्तरेण फलानुपधानं दृष्टम् एवं चक्षुरादीनां ज्ञानकरणानामपि फलोपधानं कर्त्तारमन्तरेण नोपपद्येत इत्यतिरिक्तः कर्ता कल्प्यते।

---

1. वै.सू.उप.–1.1.4।
2. तर्कभाषा पृ. 180 शुक्ल संस्करण।
3. इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्–न्या. सू. 1/1/10।
4. वैशे. सू. 3/2/4।
5. आत्मेन्द्रियाद्यधिष्ठाताकरणं हि सकर्तृकम्–कारिकावली–सं. 47।
6. तर्कसंग्रहः।
7. न्यायसिद्धान्तमुक्तावली, कारिका–47।

**आत्मनः स्वरूपम्–**

आत्मा न हि बहिरिन्द्रियजन्यप्रत्यक्षविषयः स्पर्शादिगुणरहितत्त्वात्। देशकालाबाधितत्त्वात् आत्मा विभुर्नित्यश्च। आकाशः, कालः, दिग्, आत्मा च विभुपदार्थाः। आत्मा न अणुपरिमाणवान् यतोऽहि अणोः गुणः न प्रत्यक्षविषयः किन्तु आत्मनः गुणाः बुद्धीच्छादयः प्रत्यक्षगम्याः। आत्मानिरवयवः। उपचयापचयादयः क्रिया तत्र न भवति। नैव घटादिवत् मध्यमपरिमाणः अतः आत्मा निराकारः निरवयव एव।

**आत्मा शरीरञ्च ( शरीरात्मवादः )–**

चार्वाकदर्शनस्येयं मान्यता यत् पृथिवी, जलम्, तेजः वायुश्च चत्वारि तत्त्वानि। आत्मा च एतेषां चतुर्ण्णां तत्त्वानां परिणतरूपमस्ति। अयं च न स्वतंत्रः। आत्मनः शरीरस्य च पृथक् सत्वे प्रमाणाभावात्। शरीरभिन्नः यदि आत्मनः सत्ता स्यात्तदा आत्मनः प्रत्यक्षं भवेत् एवञ्च न भवति, अतः न शरीराद्यतिरिक्तः आत्मा। बुद्धिविशिष्टे शरीरे इच्छायाश्च सत्वे क्रिया जायते। शरीरे सक्रियतानिष्क्रियते च चेतनतत्त्वयुक्ते। चार्वाकाणां वेदादिषु आस्था नास्ति। ते स्वमतस्थापनार्थं तैत्तिरीयोपनिषदः एकां सूक्तिम्[1] उपस्थापयन्ति। तस्यां सूक्त्यां निर्वचनमस्ति यत् पुरुषः भोजनजलयोः संघातः विद्यते।

जयन्तभट्टः स्वीय ग्रन्थे धूर्तसुशिक्षितभेदेन चार्वाकस्य द्वैविध्यं प्रतिपादितवान्। धूर्तचार्वाकः शरीरात्मवादं स्थापयति किन्तु सुशिक्षितचार्वाकस्य मतं किञ्चित् परिष्कृतमस्ति। तस्य मतमस्ति यत् यावत्कालं शरीरं क्रियाशीलं तावत्कालपर्य्यंतमात्मा शरीरे तिष्ठति अनन्तरं सः अन्तर्हितो भवति।

सदानन्दः वेदान्तसारग्रन्थे भौतिकवादिनां चार्वाकाणां भिन्न–भिन्न सम्प्रदायानां चतुर्विध उल्लेखं कृतवान्। भिन्नतायाः आधारः जीवात्मसम्बन्धी विचारः अस्ति। प्रथमस्तावत् जीवात्मामृतशरीरयोः तादात्म्यं स्वीकरोति। द्वितीयः इन्द्रियात्मवादं स्वीकरोति। तृतीयः सम्प्रदायः प्राणशरीरयोः तादात्म्यस्योल्लेखं करोति। चतुर्थश्च मस्तिष्केन सह तस्य तादात्म्यं स्वीकरोति।

नैयायिकः एतान् चार्वाकमतान् खण्डयति। यदि शरीरमेवात्मा स्यात् तर्हि बाल्ये अनुभूतं यत् कन्दुकक्रीडादिकं तस्य यौवने, वार्द्धक्ये वा स्मरणं न स्यात्।

---

1. तैत्तिरीयोपनिषद्–2/1/1

कारिकावल्यां विश्वनाथोऽवादीत्–"**शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः**[1]"। यदि भौतिकशरीरे चैतन्यं स्यात् तदा भौतिकघटेऽपि चैतन्यमस्तु किन्तु एतादृशं चैतन्यं घटे न दृश्यते। न्यायसूत्रेणापि एतदभिप्रायं सिध्यति। चैतन्यं न अवयवगतधर्मः। यदि अवयवेषु चैतन्यं स्यात्तदा चैतन्यस्य अनेकत्वापत्तिः। अतः चैतन्यं शरीरावयवे न तिष्ठति। न्यायसूत्रकारः गौतमः वदति यत् केशे नखे च चैतन्याभावात्[2]। शरीरे यदि स्वाभाविकं चैतन्यं तदा नखादिष्वपि चैतन्यं स्यात्। एवञ्च चेतनायाः शरीराव्यापित्वं प्रत्यक्षमेव तथा च शरीरावयवभेदेन चेतनाभेदः स्यात्तेन च एकस्मिन्नपि शरीरे चेतनस्यानेकत्वं स्यात् न च एकस्मिन् शरीरे चेतनानेकत्वमुपपद्यते।

अथ प्रथमतया इदं विचारणीयं यत् मुक्तावस्थायां आत्मनः संयोगाभावे आत्मनि ज्ञानाभावात् तत्राव्याप्तिः। एतद्दोषपरिहारार्थं ज्ञानसमानाधिकरणद्रव्यत्वव्याप्य जातिमत्वमिति जातिघटित लक्षणे कृते न तत्राव्याप्तिः। कारिकाकारः आत्मनः सिद्ध्यर्थं करणमिति पदं प्रयुक्तम्। यथा–वृक्षद्वैधीभावस्य करणं कुठारः कर्त्रा चेतनेन अधिष्ठितो दृश्यते एवञ्च इन्द्रियाणि कर्त्रधिष्ठितानि अचेतनत्वे सति करणत्वात् कुठारवत् इत्यनुमानेन आत्मा सिध्यति।

**चार्वाकमतसंक्षेपः–**

**अत्र चत्वारिभूतानि भूमिवाय्वनलाऽनिलाः।**
**चतुर्भ्यः खलु भूतेभ्यःचैतन्यमुपजायते॥**
**किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।**
**अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः॥**
**देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः।**
**ममदेहोऽयमित्युक्तिः सम्भवेदौपचारिकी॥**
**अङ्गनालिङ्गनाजन्यं सुखमेव पुमर्थता।**
**कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते॥**
**लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः।**
**देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते॥**
**यावज्जीवं सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥**

---

1. कारिकावली का. सं. 48।
2. कुम्भादिष्वनुपलब्धेरहेतुः। न्या. सू. 3/2/38।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥
अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिः॥
न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥
पशुचेन्निहितः स्वर्गं ज्योतिष्टोमे गमिष्यति।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥
मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारणम्।
गच्छतामिह जन्तूनां वृथा पाथेयकल्पनम्॥
स्वर्गस्थिता यदि तृप्तिं गच्छेयुस्तत्र दानतः।
प्रासादस्योपरिस्थानामिह कस्मान्न दीयते॥
यदि गच्छेत् परं लोकं देहादेष विनिर्गतः।
कस्मात् भूयो न चायाति बन्धुस्नेह समाकुलः॥
त्रयो वेदस्य कर्तारो धूर्तभाण्डनिशाचराः।
जर्फरी तुर्फरीत्यादि पण्डितानां वचः स्मृतम्॥

इति चार्वाक मतसंक्षेपः।

**इन्द्रियात्मवादसमीक्षा–**

प्राणात्मवादी चार्वाकस्य इदं मतं यत् प्राणः जाग्रत्स्वप्नसुषुप्त्यवस्थायां विद्यमानो भवति। यस्य सत्वे शरीरं जीवति यस्याभावे च शरीरं मृतत्त्वेन व्यवह्रियते अतः प्राण एव आत्मा। इदं लक्षणं जीवात्मन्यपि संगच्छते। तथा च "जीवोपेतं वाच किलेदं म्रियते, न जीवो म्रियते[1]" इति श्रुत्यामपि प्राणरूप जीवात्मनः परित्यक्ते मरणव्यवहारः कृतः। "प्रियोऽन्यस्मात् सर्वस्मादन्तरन्तरं यदयमात्मा[2]" "श्रुत्यामस्यां पुत्रादिभिः श्रेष्ठः प्रियतमः सः आत्मा इति व्यवहृतः। एतादृशं प्रियतमत्वं प्राणे एव दृश्यते। अथवा "अन्योऽन्तरात्मा प्राणमयः[3]" अत्र प्राण शब्दः आत्मबोधकः। "मातेव पुत्रं रक्षस्व[4]" अनया श्रुत्या यथा माता पुत्रं रक्षति तथा इन्द्रियाणां रक्षकः

1. माधवीयधातुवृत्तिः–602
2. तैत्तिरीयोपनिषद्।
3. तै.–2.2।
4. तत्रैव।

प्राणः इति संकेतितः। अतः प्राण एवात्मा इति चार्वाकमतम्।

नैयायिकः उक्तमतमनुमानेन खण्डयति। तथाहि—प्राणः अनात्मा वायुत्वात् बाह्यवायुवत्। व्याकरणशास्त्रदृष्ट्या "जीवप्राणधारणे" धातोरच्[1] प्रत्यये जीव शब्दस्य निष्पत्तिः। एतावता जीवशब्दस्य अर्थः भवति प्राणधारकः। अतः आत्मप्राणयोः आधाराधेयभावः सम्भवति। चार्वाकसिद्धान्तात् तु आधाराधेयभाव एव अनयोरनुपपन्नं स्यात्। अतः प्राणः आधेयत्वात् भिन्नः आत्मा च आधारत्वात् भिन्नः। "अस्माकं श्वासः प्रचलति" इति अनुभवसिद्धः। अत्र श्वासात्मकप्राणात् भिन्नः आत्मा। चार्वाकरीत्या तु प्राणवायोः प्रत्यक्षत्वात् घटवत् स्पर्शवान्, सावयवः, उत्पत्तिविनाशशील प्राणरूपात्मनः अनित्यत्वापत्तिः। अपि च अस्य शरीरस्य जीवनं न केवलं प्राणाधीनमपितु प्राणधारकस्य जीवात्मनोरधीनमस्ति। एतद् वाक्यं समर्थयति श्रुतिः—

न प्राणेन नापाऽनेन मर्त्यो कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुभाश्रितौ[2]॥

चार्वाकः ज्ञानं प्रति इन्द्रियाणां करणत्वं कर्तृत्वञ्च साधयति। इन्द्रियातिरिक्तस्य आत्मनः सत्ता न स्वीकरोति। न्यायमतमेतद्विपरीतम्। कारिकावल्यां विश्वनाथः वदति—

"तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः[3]॥

अयम्भावः—यदि चक्षुरादीन्द्रियाणां चेतनत्वं मन्तव्यं तदा इन्द्रियाणामनित्यत्वात् यौवने कथञ्चित् चक्षुरादेः नाशे सति बाल्यचक्षुषाऽनुभूतस्य विषयस्य अनुभवितुर्नाशात् वार्द्धक्ये स्मरणं न स्यात् किन्तु एतद्विपरीतं स्मरणं जायते। तस्मात् इन्द्रियाणामात्मत्वकल्पनाऽयुक्ता। एवञ्च कर्तरि कर्मणि च भेदेन व्यवहारः भवति स च अनुपपन्नः भविष्यति। यतोऽहि करणत्वं कर्तृत्वञ्च परस्परं विरुद्धं भवति, अतः एकत्र कर्तृत्वञ्च न सम्भवति। एतावता इन्द्रियात्मवादिनां चार्वाकाणां मतं नितान्तमनुचितमस्ति।

न्यायदर्शनमपि इन्द्रियाणामनात्मत्वं साधयति। तथा च सूत्रम्—नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानाऽवस्थानात्[4]। अर्थात् नेन्द्रियार्थानां वा गुणो ज्ञानम्।

1. पा.सू.–3.1.134।
2. वेदान्तपरिभाषायाम्।
3. कारिकावली–का.सं.48।
4. न्यायसूत्रम् 3/2/18

तेषां विनाशेऽपि ज्ञानस्य भावात्, भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानम् "अद्राक्षम्" इति। न च ज्ञातरि विनष्टे ज्ञानं भवितुमर्हति अन्यत् खलु चैतद् इन्द्रियार्थसन्निकर्षजं ज्ञानं यत् इन्द्रियार्थविनाशे न भवति।

**आत्मा बुद्धिश्च ( बुध्यात्मवादः )–**

कतिपयजनानामिदं मतं यत् बुद्धिः विषयस्य प्रकाशं कृत्वा तदनुभवं करोति। अतः बुध्यात्मनोरभेदः। इममेव मतं बुध्यात्मवादं कथ्यते।

नैयायिकाः मतमिदं खण्डयन्ति। ते कथयन्ति यत् बुद्धिः न ज्ञानस्य आश्रयः अपितु ज्ञानस्य पर्यायः। बुद्धिः गुणः द्रव्याश्रितः। तदेव द्रव्यमात्मा। सः स्वभावत एव गुणेभ्यः पृथग्भूतः।

**आत्मा पुंरुषश्च–**

सांख्यमतानुसारेण प्रकृतिपुरुषयोः संसर्गात् सृष्टिः भवति। सांख्याचार्य-मतानुसारेण प्रकृतिः अचेतनः, सूक्ष्मः, नित्यः, सत्वरजस्तमोगुणानां साम्यावस्था विद्यते। पुरुषश्च चेतनः, निष्क्रियः[1]। अयं व्यापकः मन इन्द्रियाभ्यां भिन्नः। सः कर्ता न भवति किन्तु प्रकृतिपुरुषयोः संसर्गेण तत्र कर्तृत्वमारोपितं भवति[2]। सः न परमानन्दस्वरुपः।

सांख्याः पुरुषबहुत्वमपि अनया रीत्या प्रतिपादितवन्तः। सर्वेषामपि मनुष्याणां शारीरिकदृष्ट्या, नैतिकदृष्ट्या, बौद्धिकदृष्ट्या च भिन्ना-भिन्ना शक्तिः विद्यते। एकस्य पुरुषस्य मुक्तिलाभे सर्वे पुरुषाः मुक्ताः भवेयुः अथ च पुरुषः प्रकृतितो भिन्नः। प्रकृतिश्चैका अतः पुरुषस्य अनेकत्वं सिद्धमेव। ईश्वरकृष्णः गुणभेदेन पुरुषानेकत्वं प्रतिपादयति[2]। योगिषु सत्वगुणस्य भिन्नता, मनुष्येषु रजोगुणस्य भिन्नता, पशु-पक्षिषु च तमोगुणस्य भिन्नता पुरुषानेकत्वे हेतुः।

**आत्मा संवित्तिश्च–**

मीमांसाशास्त्रस्येदं मतं यत् वैदिकानुष्ठानेन मानवः स्वर्गं प्रयाति। यः स्वर्गं व्रजति सः अशरीरी आत्मा एव[3]। यद्यपि भगवान् जैमिनिः आत्मनः स्पष्टं विवेचनं न चकार तथापि वेदान्ते या युक्तिः प्रदर्शिता तां युक्तिं जैमिनिरपि स्वीकरोति[4]। मीमांसकाः आत्मनः कर्तृत्वं भोक्तृत्वं च स्वीकुर्वन्ति। सः अनेकः

1. सांख्यशास्त्रे।
2. जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
   पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव।। सां.का. 18
3. शास्त्रदीपिका पृ. 348-49।
4. स्वयंप्रकाशत्वेन, विषयप्रतीति गौरवत्वेन (प्रकरणपञ्चिका प्र. 151)

प्रतिशरीरं भिन्नश्च[1]।

आत्मनः स्वरूपस्य विषये च कुमारिलप्रभाकरयोः मध्ये परस्परं भेदः दृष्टिगोचरो भवति। भाट्टमतानुसारमात्मसंवित्तावेव आत्मनः ज्ञानं भवति किन्तु प्रभाकरमतानुसारेण आत्मसंवित्तेः धारणा एव निर्मूला विद्यते। तन्मतानुसारेण आत्मा बुद्धिभिन्नः, ज्ञानक्रियानुभवसुखदुःखाद्यधिष्ठितः। अयं सत्व्यापकः अपरिवर्तनशीलश्च किन्तु न स्वप्रकाशरूपः। अहं प्रतीति विषयः आत्मा। आत्मा चैतन्यस्य विषयः विषयी च न भवति[2]। प्रभाकरमतानुसारेण "अहम्" "मम" इमे उक्ती आत्मनः सम्बन्धे एकस्य मिथ्या विचारस्य सङ्केतं कुरुतः[3]।

कुमारिलभट्टः कथयति आत्मा शरीरभिन्नः, नित्यः, व्यापकः चैतन्यः, अनेकश्च[4]। "अहं" भावद्वारात्मानुमीयते। आत्मा ज्ञानस्य विषयः विषयी च[5]। प्रभाकरमतं खण्डयता कुमारिलभट्टेन उक्तं यत् आत्मा ज्ञानस्य कर्ता, ज्ञानस्य विषयश्च भवति। अतएव आत्मसंवित्या एव आत्मनः ज्ञानं भवति।

**आत्मा ब्रह्म च–**

एवं प्रकारेण शंकराचार्यपादाः वदन्ति यत् आत्मा प्रमाणव्यवहारात् प्रागेव सिद्धो भवति[6]। "अहमस्मि[7]" इत्यादि व्यवहारेण प्रत्येकस्मिन् मनुष्ये आत्मनः ज्ञानं प्रतीयते। आत्मनः सिद्धिः अस्माभिः न प्रमाणद्वारा क्रियते यतोऽहि तर्कः अनात्मक्षेत्रस्य एकः प्रवाहभागः[8]। आत्मा प्रमाणव्यवहारस्याश्रयः। अतः आत्मनः अस्तित्त्वं प्रमाणास्तित्त्वतः प्रागेव सिद्धम्[9]। तार्किकदृष्ट्या अयं स्वतः सिद्धाधारतत्त्वमेवास्ति[10]।

---

1. श्लोकवार्तिकम्–आत्मवादः–74-75, 107, 142-43
2. पूर्वमीमांसा–पी. शास्त्री, पृ. 95, विवरणप्रमेयसंग्रहः भाग 1, पृ. 357।
3. आत्मा तु प्रमाणादि व्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिद्धयति। शा. भा. 2/3/7।
4. सर्वा ह्यात्मास्तित्वं प्रत्येति नाहमस्मीति। शा. भा. 1/1/1
5. अपरोक्षत्वाच्च प्रत्यगात्मा प्रसिद्धेः।। शा. भा. 1/1/11
6. अद्वैतदर्शनम्।
7. तदेव।
8. तदेव।
9. तदेव।
10. षड्दर्शनसमुच्चयः।

जैनमतानुसारेण समस्तमिदं विश्वं जीवाजीव भेदेन द्विधा विभक्तं विद्यते[1]। जीवश्च भोक्ता अजीवश्च भोग्यः। अजीवे जगति पञ्च वस्तूनि सन्ति। यस्मिन् चत्वारि अमूर्तानि देशः, कालः, धर्मः, अधर्मश्च। एकं वस्तु पुद्गलं मूर्तमस्ति। जगतः समस्तपदार्थाः परिणामशीलाः विद्यन्ते।

जैनमतेन अहं प्रत्ययविषयकज्ञानेन आत्मानुभूयते[2]। जैनग्रन्थेषु जीव शब्दस्य व्यवहारः जीवनं, प्राणशक्तिः आत्मा, चेतनता बहुष्वर्थेषु विद्यते। चैतन्यं जीवस्य सामान्यं लक्षणम्[3]। स च जीवः अनन्तः, नित्यसिद्धः, मुक्तः, बद्धश्च। आत्मा शरीरेन्द्रियाभ्यां भिन्नः, चेतनस्वरूपः। तन्मते भिन्न-भिन्न तत्त्वेषु तात्त्विकः जीवात्मा तिष्ठति। यथा-पार्थिव जीवात्मा, आग्नेय जीवात्मा। अयमात्मा उत्पद्यते म्रियते च। जैनाचार्याः धातुषु, पाषाणेषु च आत्मनः अस्तित्वं मन्यन्ते[4]।

वैशेषिकाः आत्मनः सिद्धयर्थं तत्र प्रमाणं दर्शयन्ति तथा च सूत्रम्- "प्राणापाननिमेषोन्मेषजीवनमनोगतिइन्द्रियान्तरविकारसुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि[5]" इति। तेषां मते स्वप्राकृत अवस्थायामात्मा ज्ञानरहितो भवति यथा प्रलये। तत्र बोधः तदैव भवति यदायं शरीरेण सम्बद्धः भवति[6]। यद्यपि आत्मा सर्वव्यापकः तथापि शरीरमाध्यमेनैव तदस्तित्त्वमनुभवितुं शक्यते।

आत्मा अनेकः, नित्यः, अमूर्तः, विभुद्रव्यं चास्ति[7]। प्रत्येकमात्मा स्व-स्व कर्मफलमुपभोगं करोति। अनेकशास्त्रानुसारेणापि आत्मनः अनेकत्वं सिद्धयति[8]। पुनर्जन्मन्यपि मनः आत्मना सह गच्छति। चार्वाकदर्शनस्यायं मान्यता विद्यते यत् "अहं गच्छामि" इत्यत्र अहं शब्दः शरीरबोधकः किन्तु वैशेषिकाः तन्मतं खण्डयति यत् शरीरमचेतनं तत्र चैतन्यं कुतः समायातः? वेदान्तदर्शने आत्मा एकैव किन्तु लोकव्यवहारानुरोधेन आत्मनः अनेकत्वं स्वीकृतम्। इत्थं वैशेषिकदर्शने वर्णितमात्मनः स्वरूपं न्यायदर्शनप्रतिपादित आत्मनः स्वरूपं समानमेव। इति नैयायिकानामात्मदृष्टिः।

1. जैनदर्शनम्, द्रव्यसंग्रहः-गाथा-1
2. षड्दर्शनसमुच्चये।
3. चैतन्यलक्षणो जीवः। षड्दर्शनसमुच्चयः।
4. आत्माजीवोऽनेको नित्यो मूर्तो विभुद्रव्यं च। षड्द. समु., पृ. 409।
5. वै. सू. 3/2/20।
6. तर्कसंग्रहे।
7. सर्वदर्शनसंग्रहः-माधवाचार्यः।
8. तदेव

# द्वितीयोऽध्यायः

## न्यायाभिमतप्रमाणतत्त्वपरीक्षणम्

न्यायदर्शने प्रमाणानामतीवमहत्त्वं विद्यते। भगवता गौतमेन प्रमेयपदार्थानां गणनाक्रमे प्रमाणस्य सर्वप्रथममुल्लेखः कृतः। तथाहि–"प्रमाणप्रमेयसंशय-प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डा हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम[1]" इति। न्यायशब्दस्य विश्लेषणं कुर्वता वात्स्यायनेनाप्युक्तम् "प्रमाणैरर्थपरीक्षणं न्यायः[2]"। प्रमाणशब्दः प्र उपसर्गपूर्वक मा धातोः "कृत्यल्युटो बहुलम्[3]" इत्यनेन करणेऽर्थे ल्युटि "कृत्यचः[4]" इत्यनेन णत्वे सिद्धयति। यदि भावेऽर्थे ल्युट् स्यात्तदा प्र उपसर्गकमाधातोरर्थः भवति–"प्रमा"। किन्तु करणेऽर्थे यदि ल्युट् तदा प्रमाकरणमर्थः। प्रथमं तावत् का नाम प्रमा? इति विचार्यते।

**प्रमा**–यद् वस्तु यादृशं विद्यते तद्वस्तुनः तादृशमेव ज्ञानं प्रमाकथ्यते[5]। वाचस्पतिमिश्रमते स्मृतिभिन्नपदार्थस्याव्यभिचरितत्त्वबोध एव प्रमा[6]। किन्तु एतादृशबोधे धारावाहिकज्ञानं प्रमाकोटौ नहि सम्भवति[7]। धारावाहिकज्ञाने घटत्वेन सह वर्तमानकालस्यापि (इदन्त्वविशिष्टघटोऽयम्) ज्ञानं भवति अतः ज्ञानं कालांशे नवीनम्। किन्तु क्रिया, विभागः, पूर्वसंयोगनाशः, उत्तरसंयोगादेः यौगपद्यस्वीकारे काठिन्यं स्वीकुर्वन्ति। प्रमायाः कारणं तु प्रमाता, प्रमेय प्रभृतयः अपि सन्ति किन्तु

---

1. न्या. सू. 1/1/1।
2. वात्स्यायनभाष्यम्।
3. अष्टाध्यायी 3/3/113।
4. अष्टाध्यायी 8/4/29
5. तद्वति तत्प्रकारानुभवः–तर्कसंग्रहः।
6. अनधिगतार्थगन्तृ प्रमाणम्।
7. अनधिगतार्थगन्तृत्वञ्च धारावाहिकविज्ञानानामधिगतार्थगोचरणां लोकप्रसिद्ध प्रमाणभावानां प्रामाण्यं विहन्तीति नादयामहे।। न्या. वा. ता. टी.।

तत्र क्रियासिद्धौ असाधारणकारणमेव करणं भवति[1]। एकान्यया परिभाषया– "व्यापारवदसाधारणं कारणं करणमिति[2] करणलक्षणम्। प्रमायाः अस्तित्त्वं प्रमाताप्रमेयप्रमाणादिभिः भवति। अतः वात्स्यायनेन प्रमाणस्य निरुक्तिरित्थं प्रदत्ता–येन साधनेन प्रमाता प्रमेयज्ञानं करोति तत्प्रमाणम्[3]।

**प्रमाणलक्षणम्–**

न्यायसूत्रे यद्यपि महर्षिणा प्रमाणस्य लक्षणं न कृतम्, तथापि अन्यैः दार्शनिकैः यद् प्रमाणलक्षणमुक्तं तदत्र क्रमेणोपस्थाप्यते।

**बौद्धमतम्–**

सौत्रान्तिकवैभाषिकबौद्धयोर्मते–येन वस्तुनः सम्यग् ज्ञानं भवति तत्प्रमाणम्। प्रमाणसत्ताविषये नागार्जुनस्य विश्वासः नासीत् शून्यवादित्वात्। विज्ञानवादी आचार्य-दिङ्नागः वदति–अर्थनिश्चायकस्वसंवित्तिः प्रमाणम्, सा च विषयाकारिका[4] अपि भवति। न्यायबिन्दुग्रन्थे धर्मकीर्तिना प्रोक्तम्–"सम्यग् ज्ञानमेव प्रमाणम्"[5]।

नैयायिकाः बौद्धमतं खण्डयन्ति। कथयन्ति यत् प्रमाभिन्ना प्रमाणञ्च भिन्नं बोधः प्रमाणस्य फलमस्ति न तु प्रमाणम्।

जैनपरम्परायां प्रमाणस्य लक्षणं भिन्नं-भिन्नमस्ति। तत्र समंतभद्रानुसारेण "स्व" "पर" एतयोरवभासकारकं ज्ञानं प्रमाणम्[6]। सिद्धसेनः अत्र "बाधविवर्जितम्" इति पदं संयोज्य प्रमाणलक्षणं प्रतिपादयति[7]। अकलंकः समन्तभद्रवत् प्रमाणलक्षणे "स्व" "पर" "अवभासक" पदानां स्थाने क्रमशः "आत्मा" "अर्थ" "ग्राहक" पदं संयुनक्ति। एवञ्च बाधविवर्जितपदमपहाय "व्यवसायात्मक" पदं स्थापयति। विद्यानन्दः कथयति यत्–स्वार्थव्यवसायात्मकसम्यग्ज्ञानं प्रत्यक्षमिति[8]।

---

1. साधकतमं करणम्। पाणिनि सूत्रम्–1/4/42।
2. तर्कसंग्रहः।
3. प्रमाता येन अर्थं प्रमिणेति तत्प्रमाणम्–न्यायभाष्यम् 1/1/1।।
4. स्वसंवित्तिः फलं चात्रतद्रूपादर्थनिश्चयः।
   विषयाकार एवास्य प्रमाणं तेन मीयते।। प्र. सं. 1/10।
5. अविसंवादकं ज्ञानं सम्यग्ज्ञानम्, अनधिगतविषयं प्रमाणम्। न्या. बि. पृ. 4।
6. स्वपरावभासकं यथा प्रमाणं भुवि बुद्धिलक्षणम्।
7. प्रमाणं स्वपरावभासि ज्ञानं बाधविवर्जितम्।। न्या. व. का.
8. स्वार्थव्यवसायात्मकं सम्यग्ज्ञानं सम्यग्ज्ञानत्वात्। प्र. प. पृ. 5

माणिक्यनन्दिः भणति यत् अपूर्वार्थस्य निश्चायकं ज्ञानं प्रमाणमिति[1]। आचार्य हेमचन्द्रानुसारेण प्रमाणलक्षणे स्व-अपूर्व शब्दौ निरर्थकौ[2]।

सांख्यशास्त्रानुसारेण—असन्निकृष्ट अर्थस्य कारणं यद्भवति तत्प्रमाणम्।

नैयायिकः एतन्मतं खण्डयति। यतोऽहि पुरुषगत धर्मः बुद्धौ, बुद्धिगतः धर्मः पुरुषे असम्भवः[3]।

भाट्टमीमांसकानुसारेण अज्ञातार्थग्राहकं ज्ञानं प्रमाणम्। कुमारिलपार्थसारथिमिश्रौ वदतः—प्रमाणं हि कारणदोषरहितत्त्वे सति बाधकज्ञानरहितत्त्वे च सति अग्रहीतग्राहित्वम्[4]। गुरुमतानुयायिनः मीमांसकाः "अनुभूतिरेव प्रमाणमि" तिस्वीकुर्वन्ति। वेदान्ते अग्रहीतग्राहित्वमेव प्रमाणं स्वीकृतमस्ति।

ध्यातव्यमत्र यत् नैयायिकाः यथार्थानुभवस्य प्रमात्वमयथार्थानुभवस्य चाप्रमात्वमङ्गीकुर्वन्ति। अयं भावः यत् नैयायिकैरपि अगृहीतग्राहित्वं स्वीक्रियते। अस्याः शंकायाः समाधानं ब्रुवता वाचस्पतिमिश्रेणोक्तं यत् लोकव्यवहारकारणेनैव स्मृतेः अप्रमात्वं न तु गृहीतग्राहित्वेन[5]। जयन्तभट्टस्यायमाशयः यत् अर्थः (विषयः) अनुपस्थितो भवति[6]।

---

1. स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् प. मु. 1
2. स्वनिर्णयः सन्नपि अलक्षणम्, अप्रमाणेऽपि भावात्। गृहीष्यमाणग्राहिण इव गृहीतग्राहिणोऽपि नाप्रामाण्यम्। प्र. मी. 1/1
3. अथ स्वच्छतया पुंसो बुद्धिवृत्यनुपातिनः।
   बुद्धेर्वाचेतनाकार संस्पर्श इव लक्ष्यते।।
   एवं सति स्ववाचैव मिथ्यात्वं कथितं भवेत्।
   चिद्धर्मो हि मृषा बुद्धौ बुद्धिधर्मश्चितौ मृषा।। न्यायमञ्जरी 1/26
4. तत्रपूर्वार्थविज्ञानं निश्चितं बाधवर्जितम्।
   अदुष्टकारणारब्धं प्रमाणं लोकसम्मतम्।। श्लो. वा.।
   एतच्च विशेषणत्रयमुपादानेन सूत्रकारेणकारणदोषबाधज्ञानरहितम्, अगृहीतग्राहिज्ञानं प्रमाणमिति प्रमाणलक्षणं सूचितम्—शा. दी.।
5. प्रमासाधनं हि प्रमाणम्, न च स्मृतिप्रमा, लोकाधीनावधारणा हि शब्दार्थ सम्बन्धः। लोकश्च संस्कारमात्रजन्मनः स्मृतेरन्वामुपलब्धिमर्थाव्यभिचारिणां प्रशामावष्टे, तस्मात्तदहेतुः प्रमाणमिति न स्मृति हेतौ प्रसङ्गः।
   —न्यायमञ्जरी।
6. न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम्।
   किन्त्वनर्थजन्यत्वं तदप्रामाण्यकारणम्।।

वैशेषिकदर्शनप्रवर्तकाः कणादमहर्षयः वदन्ति यत्–यत्र दोषराहित्यं तदेव प्रमाणम्। उपस्कारग्रन्थे शंकरमिश्रेणोक्तं यत् येन ज्ञानमुत्पद्यते तत्प्रमाणम्।

उपर्युक्त विश्लेषणस्यायमाशयः यत् बौद्धाः अविसंवादिविज्ञानमेव प्रमाणमङ्गीकुर्वन्ति। प्रभाकरमीमांसकानुसारेण अनुभूतिरेव प्रमाणम्। जयन्तभट्टप्रभृति नैयायिकानामयमाशयः यत् सामग्री साकल्यमेव प्रमाणमिति [1]।

**प्रमाणभेदाः–**

भारतीयदार्शनिकानां मध्ये प्रमाणभेदमाश्रित्य वैमत्यमस्ति। चार्वाकः प्रत्यक्षमेव एकं प्रमाणं स्वीकरोति, पौराणिकाश्च अष्टौ प्रमाणानि स्वीकुर्वन्ति। तान्त्रिकाः तत्र चेष्टां संयोज्य नव प्रमाणानि स्वीकुर्वन्ति। विभिन्नदर्शनानां मते प्रमाणसंख्याविषयकं स्वरूपमित्थम्–

(1) **चार्वाकाः**–प्रत्यक्षम्।

(2) **बौद्धाः**–प्रत्यक्षम्, अनुमानञ्च[2]।

(3) **वैशेषिकाः**–प्रत्यक्षम्, अनुमानञ्च।

(4) **सांख्याः**–प्रत्यक्षम्, अनुमानम्, शब्दश्च[3]।

(5) **योगमते**–प्रत्यक्षम्, अनुमानम्, शब्दश्च।

(6) **नैयायिकाः**–प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानञ्च[4]।

(7) **मीमांसकाः ( प्रभाकरः )**–प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्, अर्थापत्तिश्च।

(8) **मीमांसकाः ( भाट्टः )**–प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्,

---

1. अविसंवादि विज्ञानं प्रमाणमिति सौगताः।
अनुभूतिः प्रमाणं सा स्मृतेरन्येति केचन।।
अज्ञातचरतत्त्वार्थं निश्चायकत्वमथापरे।
प्रमेयव्याप्तमपरे प्रमाणमिति मन्वते।।
प्रमानियतसामग्री प्रमाणं केचिदूचिरे।। ता. र. 5–7
2. प्रमेयद्वैविध्यात् प्रमाणद्वैविध्यम्।
3. दृष्टमनुमानमाप्तवचनं सर्वप्रमाणसिद्धत्वात्।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि।। सां. का. 4
4. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। न्या. सू. 1/1/3

अर्थापत्तिः। अनुपलब्धिश्च[1]।

(9) **वेदान्तिनः**—प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्, अर्थापत्तिः।

(10) **पौराणिकाः**[2]—प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसम्भवैति-ह्याश्च।

(11) **तान्त्रिकाः**—प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसम्भवै-तिह्यचेष्टाश्च।

**जैनमते प्रमाणानि—**

जैनमते[3] प्रत्यक्षं परोक्षञ्च द्विविधं प्रमाणम्। प्रत्यक्षस्यापि द्वौ भेदौ—सांव्याव-हारिकमुख्यौ च। सांव्यावहारिकस्य चत्वारो भेदाः सन्ति। (1) अवग्रहः (2) ईहा (3) अवादः (4) धारणा च। मुख्यस्यापि चत्वारो भेदाः। (क) अवधिः (ख) मनः (ग) पर्यायः (घ) केवलम्।

**परोक्षप्रमाणस्य पञ्चभेदाः**—(क) स्मृतिः (ख) प्रत्यभिज्ञानम् (ग) तर्कः (घ) अनुमानम् (ङ) आगमश्च।

वैयाकरणमते एकादश प्रमाणानि सन्ति[4]। तत्रापि प्रत्यक्षस्य एक एव भेदः परोक्षं तावत् दशविधम्- (1) अनुमानम् (2) शब्दः (3) अर्थापत्तिः (4) अभ्यासः (5) अदृष्टः (6) प्रतिभा (7) उपमानम् (8) अनुपलब्धिः (9) प्रत्यभिज्ञा (10) कोशश्च।

---

1. जैमिनेः षट्प्रमाणाणि चत्वारिन्यायवादिनः।
   सांख्यस्य त्राणि वाच्यानि द्वै वैशेषिकबौद्धयोः।
2. प्रत्यक्षमेकं चार्वाकाः कणादसुगतो पुनः।
   अनुमानं च तं चापि सांख्याः शब्दश्च ते उभे।।
   न्यायैकदेशिनोत्येवमुपमानञ्च केवलम्।
   अर्थापत्या सहैतानि चत्वार्याहुः प्रभाकराः।
   अभाव षष्ठान्येतानि भाट्टवेदान्तिनस्तथा।
   संभवैतिह्ययुक्तानि इति पौराणिका जगुः।। वेदान्तकारिका।।
3. जैनन्याय, पृ. 113
4. वा. प., परमलघुमञ्जूषा।

भासर्वज्ञं विहायान्ये नैयायिकाः चत्वार्येव प्रमाणानि स्वीकुर्वन्ति। इदानीं तेषामेव सविस्तरं व्याख्यानं प्रस्तूयते।

**( क ) प्रत्यक्षप्रमाणम्–**

असमक्षं प्रत्युत्पद्यते इति प्रत्यक्षम्। चक्षुरादिभिरिन्द्रियैः यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षम् प्रत्यक्षमेव सर्वेषु प्रमाणेषु प्रथमं पदं धत्ते। प्रत्यक्षस्य स्वरूपं निरूपयन् गंगेशोपाध्यायः आह–"प्रत्यक्षस्य साक्षात्कारित्वं लक्षणम्। इदं लक्षणं प्रत्यक्षव्यतिरिक्ते कश्मिंश्चिदपि प्रमाणे नहि व्याप्नोति। प्रत्यक्षं हि जिज्ञासान्तरविरहितमेव ज्ञानं भवति। तथा चोक्तं न्यायभाष्यकारेण वात्स्यायनेन–

"जिज्ञासितमर्थमाप्तोपदेशात् प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते। लिङ्गदर्शनानुमितं च प्रत्यक्षतो दिदृक्षते। उपलब्धेऽर्थे जिज्ञासा निवर्तते[1]। इति।

अतएव हि प्रत्यक्षं निर्विवादं निरपेक्षं च भवति। तद्धि प्रमाणान्तरं नह्यपेक्षते। तस्मात् कारणात् प्रत्यक्षं ज्ञानान्तरनिरपेक्षं भवति अतएव ह्युक्तम्–"ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्[2]" इति। प्रत्यक्षज्ञानस्य मूलत्वात् तस्य ज्ञानान्तरं हेतुर्नहि भवति। तत्र "इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्"। इन्द्रियार्थयोः सन्निकर्षेण जन्यं ज्ञानं प्रत्यक्षं भवतीत्यर्थः।

अस्य लक्षणस्य घटकीभूतानि त्रीणि पदानि सन्ति (1) इन्द्रियाणि, (2) अर्थाः, (3) सन्निकर्षश्च।" (1) तत्रेन्द्रियाणि द्विप्रकारकाणि सन्ति ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च। शरीरस्य ये अवयवाः क्रियायामनुष्ठाने साधकाः भवन्ति तानि कर्मेन्द्रियशब्देनाभिधीयन्ते। ये चावयवाः ज्ञानावाप्तौ साधकानि भवन्ति तानि ज्ञानेन्द्रियशब्देनाभिधीयन्ते। तत्र चक्षुरसनाश्रोत्रत्वक्घ्राणाख्यानि पञ्चज्ञानेन्द्रियाणि सन्ति। ज्ञानावाप्तौ साधकानि तत्र चक्षुषा रूपस्य, रसनया रसस्य, घ्राणेन गन्धस्य, त्वचा स्पर्शस्य श्रोत्रेण च शब्दस्य ज्ञानं जायते। एतेषामाधारभूतानि द्रव्याणि पञ्च सन्ति–पृथिव्यप्तेजोवायुवाकाशाख्यानि। इमानि हि ज्ञानेन्द्रियाणि अतीन्द्रियाणि सन्ति एतेषां साक्षात्कारो नहि भवितुमर्हति।

---

1. न्यायभाष्यम्।
2. तर्कसंग्रहः।

ज्ञानेन्द्रियविषयकस्य सम्यज्ज्ञानायाधस्तात् चक्रमुपस्थाप्यते–

| इन्द्रियाणि | इन्द्रियाणामधिष्ठानानि | इन्द्रियकारणभूतानि | इन्द्रियाणां विषयः | इन्द्रियाणामाश्रयः | ऐन्द्रियिकज्ञाननामानि |
|---|---|---|---|---|---|
| 1. घ्राणम्ः | नासिका | पृथिवी | गन्धः | पृथ्वी | घ्राणज-प्रत्यक्षम् |
| 2. चक्षुः | नेत्रम् | तेजः | रूपम् | पृथ्वी, अग्निश्च | चाक्षुष-प्रत्यक्षम् |
| 3. रसना | जिह्वा | जलम् | रसः | पृथिवी-जलञ्च | रासन प्रत्यक्षम् |
| 4. त्वक् | त्वचा | वायुः | स्पर्शः | पृथिव्य-प्तेजोवायवः | त्वाच-प्रत्यक्षम् |
| 5. श्रोत्रम् | कर्णकुहरम् | आकाशः | शब्दः | आकाशम् | श्रावण-प्रत्यक्षम् |

**अर्थाः–**

प्रत्यक्षज्ञानाय प्रत्यक्षविषयभूतानां वस्तूनामप्युपस्थितिरावश्यकी भवति। प्रत्यक्षविषयं विना प्रत्यक्षज्ञानस्यासम्भवात्। अतएव ज्ञानेन्द्रियाणि यान् विषयान् विषयीकुर्वन्ति तान्येवार्थशब्देनाभिधीयन्ते। ते च प्रत्यक्षस्य विषयाः सन्ति पृथिव्यप्तेजोवाय्वाकाशाख्यानि पञ्चद्रव्याणि। मुख्यरूपेण एतेषां द्रव्याणामेव प्रत्यक्षं भवति गौणरूपेण च तेषां गुणानां रूपरसगन्धशब्दस्पर्शाख्यानाम्।

प्रत्यक्षलक्षणघटकीभूतं तृतीयं पदं सन्निकर्षो वर्तते। तत्र पदार्थानामिन्द्रियैस्साकं यो हि सम्बन्धो भवति स एव सन्निकर्ष इत्यभिधीयते। कस्यचन वस्तुनः प्रकाशे सर्वप्रथम आत्मनः मनसा सह संयोगो भवति। मनः इन्द्रियेण सह संयुज्यते। इन्द्रियञ्च स्वविषयेण सह संयुक्तं सत् प्राप्यविषयं प्रकाशयति। अतएवेन्द्रियाणां प्राप्यप्रकाशकारित्वनियमो वर्तते। केचन नैयायिकाः चक्षुष एव प्राप्यप्रकाशकारित्वं स्वीकुर्वन्ति, किन्तु जयन्तानुसारेण सर्वेषामेव विषयाणां साक्षात्कारे–

"आत्मा मनसा संयुज्यते, मनः इन्द्रियेण, इन्द्रियम् विषयेण।" इति।

### सन्निकर्षस्य भेदाः–

इन्द्रियार्थसंयोगरूपस्य सन्निकर्षस्य षड्भेदाः नैयायिकाः स्वीकुर्वन्ति। ते च सन्निकर्षाः सन्ति–संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। तत्र घटप्रत्यक्षे संयोगसन्निकर्षो भवति, यतः चक्षुरिन्द्रियस्य घटेन सह संयोगो भवति। घटगतरूपस्य ग्रहणे संयुक्तसमवायसम्बन्धो भवति। चक्षुषा संयुक्ते घटे रूपस्य समवायसम्बन्धेन तत्र विद्यमानता भवति। घटगतरूपत्वस्य ग्रहणे तु संयुक्तसमवेतसमवायसन्निकर्षो भवति, घटगतरूपे रूपत्वस्य समवायसम्बन्धेन विद्यमानत्वात्। शब्दस्य साक्षात्कारे समवायसन्निकर्षो भवति, श्रोत्रे शब्दस्य समवायसम्बन्धेन सत्वात्। शब्दे समवायसम्बन्धेन सत्वात् शब्दत्वस्य साक्षात्कारे समवेतसमवायसन्निकर्षो भवति। घटाभावभूतलयोः विशेषणविशेष्यभाव-रूपस्य सन्निकर्षस्य सत्त्वात्।

### प्रत्यक्षज्ञानस्योत्पत्तिः–

सत्यपि इन्द्रियार्थसन्निकर्षे कदाचित् विषयाणां प्रत्यक्षो नहि भवति। यथा अध्ययने संलग्नस्य पुरुषस्य समक्षतः एव किमपि वस्तु आयाति किन्तु तस्य वस्तुनः उपलब्धिर्नहि भवति। अतएव कस्यचनापि वस्तुनः उपलब्धिस्तदा भवति यदा त्रीणि कार्याणि भवन्ति–

(1) आत्मा मनसा संयुज्यते। (2) मनः इन्द्रियेण संयुज्यते। (3) इन्द्रियमर्थेन संयुज्यते। यदा अनया क्रियया इन्द्रियार्थयोः संयोगो भवति तदैव कस्यापि वस्तुनः साक्षात्कारो भवति।

### प्रत्यक्षस्य भेदाः–

प्रत्यक्षस्य द्वौ भेदौ भवतः–(1) निर्विकल्पकं प्रत्यक्षम्, (2) सविकल्पकं प्रत्यक्षञ्च।

### निर्विकल्पकं प्रत्यक्षम्–

यस्मिन् प्रत्यक्षे वस्तुमात्रं प्रतीयते तत् प्रत्यक्षं निर्विकल्पकमित्यभिधीयते। निर्विकल्पके प्रत्यक्षे वस्तुनः प्रकाराणां प्रतीतिः नहि भवति। अतएव हि तर्कसंग्रहकारेणाभिहितम्–"निष्प्रकारकं ज्ञानं निर्विकल्पकम्[1]।" इति।

---

1. तदेव।

**सविकल्पकं प्रत्यक्षम्–**

यस्मिन् प्रत्यक्षे प्रत्यक्षविषयीभूतस्य वस्तुनः रूपपरिमाणजात्यादिकानामपि प्रतीतिर्भवति तत् प्रत्यक्षं सविकल्पकं भवति। तथा चोक्तमन्नंभट्टेन– "सप्रकारकं ज्ञानं सविकल्पकम्[1]" इति।

निर्विकल्पकस्य ज्ञानस्य विषये सिद्धान्तमुक्तावलीकारेणाप्यभिहितम्–"प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाहिज्ञानं जायते तदेव निर्विकल्पकम्।" इति। अस्यामवस्थायां यथार्थज्ञानं नहि भवति, यतः यथार्थे ज्ञाने विषयविषयिभावरूपसम्बन्धोऽवश्यं भवति।

अस्य निर्विकल्पकस्य ज्ञानस्य विषये दार्शनिकानां मतभेदो वर्तते। वैयाकरणाः निर्विकल्पकस्य प्रत्यक्षस्य सत्तामेव नहि स्वीकुर्वन्ति। तेषां मतानुसारेण निस्संज्ञं ज्ञानं भवत्येव नहि। बौद्धा अपि निर्विकल्पकं ज्ञानं स्वीकुर्वन्ति।

**विशिष्टाद्वैतिनस्त्वाहुः–**

सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम्। निर्विकल्पकमपि सविशेषविषयमेव, सविकल्पके स्वस्मिन् अनुभूतपदार्थविशिष्ट-प्रतिसन्धानहेतुत्वात्। निर्विकल्पकं नाम केनचिद् विशेषेण वियुक्तस्य ग्रहणं न सर्वविशेषरहितस्य, तथाभूतस्य कदाचिदपि ग्रहणादर्शनात् अनुपपत्तेश्च। केनचिद् विशेषेण इदमित्थमिति हि सर्वा प्रतीतिरुपजायते। त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात्। अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम् द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते। तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः। प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्ड-ग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वम्। सास्नादिवस्तुसंस्थानरूपगोत्वा-देरप्रवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यते–

इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्।"[2] इति।

**लौकिकालौकिकप्रत्यक्षे–**

नवीनाः नैयायिकाः लौकिकालौकिकभेदेन प्रत्यक्षं द्विप्रकारकं स्वीकुर्वन्ति। उपर्युक्तौ प्रत्यक्षस्य द्वौ निर्विकल्पकसविकल्पकभेदौ लौकिकप्रत्यक्षान्तर्गतौ स्तः।

1. तदेव।
2. श्रीभाष्यम्–1/1/1

अलौकिके प्रत्यक्षे तु इन्द्रियार्थयोः अलौकिकरूपेण सन्निकर्षो भवति।

गङ्गेशोपाध्यायः अलौकिकप्रत्यक्षस्य त्रीन् भेदान् स्वीकरोति[1]–(1) सामान्यलक्षणं प्रत्यक्षम् (2) ज्ञानलक्षणं प्रत्यक्षम् (3) योगजप्रत्यक्षञ्चेति। तद्यथा–

**(1) सामान्यलक्षणं प्रत्यक्षम्–**

यत्र कस्यचनैकस्य वस्तुनो दर्शनेन तत्सजातीयानां वस्तूनां ज्ञानं सम्पद्यते तत्प्रत्यक्षं सामान्यलक्षणमित्यभिधीयते। यथा वर्तमानकालिकमग्निं संस्पृश्य सर्वकालिकोऽग्निः उष्णः इति ज्ञानम्।

**(2) ज्ञानलक्षणं प्रत्यक्षम्–**

यत्रेन्द्रियग्राह्यविषयेण सह अन्यस्यापि विषयस्य ज्ञानं सम्पद्यते तत्र ज्ञानलक्षणं प्रत्यक्षम्। यथा चक्षुषः कमलरूपग्रहणसमकालमेव तस्य मार्दवस्यापि ज्ञानं सम्पद्यते। चक्षुषा तु कमलरूपस्यैव ग्रहणं भवति किन्तु तस्य मार्दवस्य ज्ञानं लौकिकज्ञानलक्षणसन्निकर्षेण सम्पद्यते। अतएव तज्ज्ञानं ज्ञानलक्षणप्रत्यक्षजन्यं भवति।

**(क) योगजं प्रत्यक्षम्–**

योगिनो यत् स्वयोगमहिम्ना व्यवहितातीन्द्रियाणां विषयाणामपि साक्षात्कारं कुर्वन्ति तद् योगजप्रत्यक्षम्।

**(ख) अनुमानप्रमाणम्–**

अनु पश्चात् ज्ञानम्–अनुमानमित्यभिधीयते। एकस्य ज्ञानस्यानन्तरं यदपरस्य वस्तुनो ज्ञानं सम्पद्यते तदनुमानमित्यभिधीयते। यथा पर्वतो धूमवानिति प्रत्यक्षज्ञानानन्तरं धूमाग्न्योः साहचर्यनियमं स्मृत्वा, पर्वतो वह्निमान् इति यज्ज्ञानं भवति तदनुमानमित्यभिधीयते।

अस्यानुमानस्य मूलं प्रत्यक्षमस्ति, यतोऽनुमानं लक्षणेनैव क्रियते, लक्षणस्य च प्रत्यक्षं भवति। एतस्मादेव महर्षिः गौतमः प्रत्यक्षं तत्पूर्वकम् अनुमानमूलकमिति प्राह[2]।

यदि प्रत्यक्षद्वारा लिङ्गस्य ज्ञानं नहि भवति अथापि तस्य लिङ्गस्य आगमेन सिद्धिर्भवति तदापि तेनानुमानं कर्तुं शक्यते। अतएव हि प्राह न्यायभाष्यकारः–

---

1. सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा–कारिकावली का. सं. 63
2. अथ तत्पूर्वकं त्रिविधमनुमानम्–पूर्ववत् शेषवत् सामान्यतो दृष्टं च।

"प्रत्यक्षमाश्रितमेवानुमानम्[1]। सा अन्वीक्षा।" इति।

अनुमानेन यस्यार्थस्य सिद्धिः क्रियते सोऽर्थः साध्यमित्यभिधीयते। येन लक्षणेन साध्यमनुमीयते तत् साधनमिति कथ्यते। यथा पर्वतो वह्निमान् धूमवत्वात्, यो यो धूमवान् स स वह्निमान्, पर्वतोऽपि धूमवान्, अतएव सोऽपि वह्निमान् इत्यस्मिन् अनुमानवाक्ये वह्निमत्वं साध्यम्, धूमवत्वं च साधनम्।

**व्याप्तिः—**

पर्वते धूमं दृष्ट्वा कश्चनापि धूमाग्न्योः पूर्वदृष्टामव्यभिचरितसाहचर्यनियम-स्वरूपां व्याप्तिं स्मृत्वा तत्र वह्निसत्वं अनुमिनोति। यथा उपर्युक्ते अनुमानवाक्ये यत्र—यत्र धूमस्तत्र तत्र वह्निरिति वाक्यं व्याप्तिवाक्यं वर्तते। अत्र धूमाग्न्योः व्याप्यव्यापकभावरूपं सम्बन्धं स्मरति अनुमानकर्ता। अयं साध्यसाधनयोः व्याप्यव्यापकभावस्य स्मरणमेव व्याप्तिस्मरणमित्यभिधीयते। अतएव अनुमानक्रियायां व्याप्तेर्ज्ञानमनिवार्यं भवति। विना व्याप्तिज्ञानमनुमानं कर्तुं नहि शक्यते।

**पक्षधर्मता—**

व्याप्तिज्ञानेन साकं पक्षधर्मताया अपि ज्ञानमत्यावश्यकं भवति। यतः "यत्र-यत्र धूमस्तत्र तत्र वह्निरित्येव वक्तुं शक्यते व्याप्तिज्ञानेन। यावत् कालपर्यन्तं "पर्वतो वह्निव्याप्यधूमवान्।" इति पर्वते पक्षधर्मताज्ञानं नहि जायते तावत् कालपर्यन्तं "पर्वतो वह्निमान्" इत्यनुमानं कर्तुं नहि शक्यते। स्थानविशेषे रूपे पक्षे लिङ्गस्य विद्यमानताज्ञानमेव पक्षधर्मताज्ञानं कथ्यते। इत्थं सिद्ध्यत्ययमर्थो यत् अनुमानाय व्याप्त्या सह पक्षधर्मताया अपि ज्ञानमावश्यकं भवति।

**लिङ्गपरामर्शः—**

धूमाग्न्योः व्याप्तिज्ञानं विना पर्वते धूमं दृष्ट्वाऽपि अनुमानमसम्भवं भवति। व्याप्तिज्ञानानन्तरमेव धूमे लिङ्गत्वमायाति। व्याप्तिज्ञानसम्पन्न एव पुरुषो जानाति यत् पर्वतो वह्निव्याप्यधूमवान् वर्तते इति। पर्वते धूमस्य वह्निव्याप्यत्वज्ञानमेव लिङ्गपरामर्श इत्यभिधीयते। केचन इदं ज्ञानं तृतीयलिङ्गपरामर्शशब्देनाभिदधाति। तथा हि—

(1) पर्वतो धूमवानिति प्रथमो लिङ्गपरामर्शः।

(2) धूमो वह्निव्याप्यो भवतीति द्वितीयो लिङ्गपरामर्शः।

---

1. न्यायभाष्यम्—1/1/5।

(3) पर्वतो वह्निव्याप्यधूमवानिति ज्ञानं तृतीयलिङ्गपरामर्शः।

अत्र प्रथमे लिङ्गपरामर्शे लिङ्गस्य पक्षेण साकं सम्बन्धो दृश्यते। द्वितीये लिङ्गपरामर्शे लिङ्गस्य साध्येन साकं सम्बन्धो दृश्यते। तृतीये लिङ्गपरामर्शे साध्यविशिष्टलिङ्गस्य सम्बन्धः पक्षे दृश्यते।

इत्थं वक्तुं शक्यते यत् पक्षधर्मताज्ञानव्याप्तिज्ञानयोः सांगत्येन यद्विशिष्टं ज्ञानं जायते तल्लिङ्गपरामर्श इत्यभिधीयते। तथा चाभिहितवान् तर्कसंग्रहकारः–

**"व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः।"** इति।

अत एव कारिकावल्यामप्यभिहितम्–

**"व्याप्यस्य पक्षवृत्तित्वधीः परामर्शः[1]।"** इति।

**अनुमितिः–**

अनुमानप्रमाणजन्यं ज्ञानमनुमितिरित्यभिधीयते। अनुमितिरियमनुमानस्य फलस्वरूपा भवति। अत एव अन्नम्भट्टेनाभिहितम्–

**"परामर्शजन्यं ज्ञानमनुमितिरि"[2]** ति।

अत्र वेदान्तिनो मीमांसकाश्चाभिदधति–व्याप्तिपक्षधर्मताज्ञानाभ्यामेवानुमितिर्जायते, अत्र लिङ्गपरामर्शोऽन्यथासिद्ध एव।

मीमांसकानां मतस्य खण्डनं कुर्वखिर्नैयायिकैरभिहितं यत् प्रत्येकस्य प्रमाणस्य कोटित्रयी भवति–कारणम्, व्यापारः, कालश्च। अनुमाने व्याप्तिज्ञान–पक्षधर्मताज्ञाने कारणस्वरूपे स्तः। करणद्वारा या क्रिया सम्पाद्यते सा व्यापार इत्यभिधीयते। तस्य व्यापारस्यैव फलमनुमितिशब्दवाच्यं भवति। यद्यप्यत्र व्याप्तिज्ञानं कारणं भवति किन्तु तत् अव्यवहितपूर्वं कारणं नहि भवति व्याप्तिज्ञानानुमित्योरन्तराले लिङ्गपरामर्शस्य सत्त्वात्। अस्य परामर्शस्यानन्तरमेवानुमितिर्भवति। इत्थमनुमितिः लिङ्गपरामर्शजन्यैव भवति।

**अनुमानस्य पञ्चावयवाः–**

अनुमानवाक्यस्य पञ्चावयवाः भवन्ति। महर्षिः गौतमः अनुमानस्य पञ्चाङ्गानि निर्दिशति। ते चानुमानावयवाः सन्ति–

---

1. कारिकावली –का. सं. 68
2. तर्कसंग्रहे।

(1) प्रतिज्ञा–

"साध्यनिर्देशः प्रतिज्ञा[1]" साध्यस्यार्थस्य निर्देश एव प्रतिज्ञेत्यभिधीयते। यथा–"पर्वतो वह्निमान्" इति वाक्यम्।

(2) हेतुः–

उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः"[2]। पक्षे साध्यस्य सत्वं साधयितुं या युक्तिः स्वीक्रियते, तस्याः युक्तेः उपस्थापकं वाक्यं हेतुरित्यभिधीयते। धूमवत्वादिति वाक्यम्।

(3) उदाहरणम्–

साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्।"[3] स्वसाध्यसमर्थकस्य दृष्टान्तस्य वाक्यम् उदाहरणमित्यभिधीयते। दृष्टान्तमात्रमेवाश्रित्य अनुमानं नहि भवति, तत्र व्याप्तेः सम्बन्धेनापि भाव्यम्। अतएवोदाहरणम्–व्याप्तिसूचकदृष्टान्तस्वरूपं भवति। तथा चोक्तं तर्कसंग्रहदीपिकायाम्–"व्याप्तिप्रतिपादकमुदाहरणम्।"[4] इति। यथा–"यो यो धूमवान् स स वह्निमान्, यथा–"महानसम्" इति वाक्यम्।

(4) उपनयः–

उदाहरणापेक्षः तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः[5]। यथा पर्वतोऽपि तथा।

(5) निगमनम्–

हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्[6]। यथा–"अतएव पर्वतो वह्निमान्।" इति वाक्यम्।

अनुमानस्य भेदाः–

महर्षिः गौतमः त्रिप्रकारकमनुमानं स्वीकरोति–(1) पूर्ववत् (2) शेषवत्, (3) सामान्यतोदृष्टञ्च। तथा च न्यायदर्शनसूत्रम्–

1. न्या.सू. 1.1.33
2. न्या. सू. 1/1/34
3. न्या. सू. 1/1/36
4. तर्कसंग्रहः।
5. गो. सू. 1/1/38
6. न्या. सू. 1/1/39

**"अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतोदृष्टञ्च**[1]**।** त्रयाणामप्येषां विवेचनं क्रियते।

**(1) पूर्ववदनुमानम्–**

यत्र कार्यमनुमीयते तत्पूर्ववदनुमानम्। यथा–उन्नतं मेघसमूहमवलोक्य भाविन्याः वृष्टेरनुमानम्।

**(2) शेषवदनुमानम्–**

यत्र कार्यमवलोक्य कारणमनुमीयते। यथा–प्रातःकाले आर्द्रां पृथिवीं दृष्ट्वा रात्रौ संजातायाः वृष्टेरनुमानम्।

**(3) सामान्यतोदृष्टानुमानम्–**

यथा स्थानान्तरगतं सूर्यं विलोक्य तस्य गतेरनुमानम्। एतेषां त्रयाणामनुमानानां वर्णनं षड्दर्शनसमुच्चयेऽभिहितम्–

**कार्यात् कारणानुमानं यच्च तच्छेषवन्मतम्।**
**तथाविध नदी पूरान्मेघो वृष्टो यथोपरि।।**
**यच्च सामान्यतोदृष्टं तदेवं गतिपूर्विका।**
**पुंसि देशान्तरप्राप्तिर्यथा सूर्येऽपि सा तथा**[2]**।।"** इति।

प्रयोजनानुसारेणानुमानस्य द्वौ भेदौ स्वीक्रियेते–स्वार्थानुमानम्, परार्थानुमानञ्च। तत्र–

**"स्वीयसंशयनिवृत्तिप्रयोजनकमनुमानं स्वार्थानुमानम्**[3]**।**
**परसंशयनिवृत्तिप्रयोजनकञ्चानुमानं परार्थानुमानम्**[4]**।।"**

नव्यन्यायानुसारेणानुमानस्य त्रयो भेदाः– (1) अन्वयव्यतिरेक्यनुमानम् (2) केवलान्वय्यनुमानम् (3) केवलव्यतिरेकी।

**(1) अन्वयव्यतिरेक्यनुमानम्–**

यत्रान्वयव्यतिरेकमुभयविधदृष्टान्तमुपलभ्यते तत्रान्वयव्यतिरेक्यनुमानं भवति।

---

1. न्या. सू. 1/1/5
2. षड्दर्शन समुच्चयः।
3. तर्कसंग्रह दीपिका।
4. तदेव।

यथा–यत्र-यत्र धूमस्तत्र तत्र वह्निः, इत्यन्वयदृष्टान्तः। यत्र अग्न्यभावः तत्र धूमाभावः इति व्यतिरेक्यनुमाने हेतुः पञ्चरूपोपपन्नं भवति–(1) पक्षसत्वम्, (2) सपक्षसत्वम्, (3) विपक्षव्यावृत्तत्वम्, (4) अबाधितविषयत्त्वम्, (5) असत्प्रतिपक्षत्वं चेति पञ्च रूपाणि सन्ति सद्धेतोः।।

**(2) केवलान्वय्यनुमानम्–**

अस्मिन्ननुमाने अन्वयदृष्टान्त एवोपलभ्यते। यथा–पटः प्रमेयः, अभिधेयत्वात्। यो यः अभिधेयो भवति स स प्रमेयो भवति। अस्यां व्याप्तौ अन्वयदृष्टान्तः।

**(3) केवलव्यतिरेकी–**

अस्मिन्ननुमाने व्यतिरेकदृष्टान्त एवोपलभ्यते। यथा–यत्र-यत्र आत्मत्वाभावः तत्र चैतन्यत्वाभाव इति।

**(ग) उपमानप्रमाणम्–**

भगवता अक्षपादेन उपमानस्य लक्षणमुच्यते यत्–"**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्**[1]" इति। "गो सदृशो गवयः" इति श्रवणानन्तरं वनं गतः पुरुषो गोसदृशं जीवं दृष्ट्वा "अयं गवयपदवाच्यः गोसदृशत्वात्" इत्येवं गवयगवयशब्दयोर्वाच्यवाचकभावसंबन्धमवधारयति तदवधारणे चोक्तं प्रसिद्धसाधर्म्यमेव कारणम्। तदेवोपमानं प्रमाणम्।

उपमानं त्रिविधम्–सादृश्यविशिष्टपिण्डदर्शनम् असाधारणधर्मविशिष्टपिण्ड-दर्शनम्। वैधर्म्यविशिष्टपिण्डदर्शनञ्च। तत्र प्रथमं गोसदृशो गवय इति। द्वितीयं यथा–भल्लुकः कीदृगिति पृष्टे–पञ्चाङ्गुलिविशिष्टपादचतुष्टयसम्पन्नो लम्बनासि-कालसन्मुखो दीर्घाऽनत्युच्चतरः कृष्णदीर्घरोमाकुलितशरीरो भल्लुकः इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशाऽसाधारणधर्मादिविशिष्टं पिण्डं पश्यति तत उपदेश-वाक्यार्थस्मरणं ततो भल्लुको भल्लुकपदवाच्य इत्युपमिति भवति। तृतीयं यथा–सिंहः कीदृगिति पृष्ठे "करशृङ्गपक्षखुरादिरहितशरीर इति। तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे करशृङ्गादिधर्मविरुद्धधर्मविशिष्टपिण्डदर्शनं करोति, तत उपदेशवाक्यार्थस्मरणं भवति ततः सिंहः सिंहपदवाच्य इति उपमितिर्जायते।

अत्र केचन–अतिदेशवाक्यार्थशाब्दबोधः करणम्, अतिदेशवाक्यार्थस्मरणं व्यापारः, सादृश्यविशिष्ट-पिण्डदर्शनं सहकारि, गवयो गवयपदवाच्य इत्युपमितिरिति।

---

1. न्या. सू. 1/1/6

उपाध्यायास्तु–सादृश्यज्ञानमात्रं करणम्, विशेषणज्ञानविधया तज्जन्यमति-देशवाक्यार्थज्ञानं सादृश्यविशिष्टपिण्डदर्शनं च व्यापारः गवयो गवयपदवाच्य इत्युपमिति। अन्ये तु वाक्यज्ञानं करणम्, वाक्यार्थानुभवो व्यापारः, गवयो गवयपदवाच्य इत्युपमितिः फलम्।

**(घ) शब्दप्रमाणम्–**

योऽर्थः श्रोत्रग्राह्यो भवति सः शब्दः। सोऽयं शब्दः द्विप्रकारको भवति–ध्वन्यात्मको वर्णात्मकश्च। वर्णात्मकश्चापि शब्दो द्विप्रकारको भवति–सार्थको निरर्थकश्च।

तत्र सार्थकाः शब्दाः संज्ञा-सर्वनाम क्रिया-विशेषणादिकानां भेदात् अनेकप्रकारकाः भवन्ति। एतेषु सार्थकेषु शब्देषु अर्थविशेषस्य प्रकाशिका शक्तिर्भवति। यथा–अश्व इति शब्दोच्चारणेन पशुविशेषस्य ज्ञानं भवति। गमनम् इति कथनेन क्रियाविशेषस्य च ज्ञानं भवति।

शब्देषु अर्थप्रकाशिका शक्तिः कुत आयाति? मीमांसकमतानुसारेण सेयं शब्दस्य शक्तिर्नैसर्गिकी नित्या च। किन्तु नैयायिकमतानुसारेण तु शब्दाः इच्छाकृतसंकेतमात्रास्सन्ति। सा चेच्छा ईश्वरस्याथवा मनुष्यस्य भवति।

**संकेतस्य भेदद्वयम्–**

संकेतो हि द्विप्रकारको भवति–आजानिकः आधुनिकश्च। अज्ञातकालतः प्रवर्तमानः संकेतः आजानिक इत्यभिधीयते। यथा घटशब्दस्य कम्बुग्रीवादिमति व्यक्तौ प्रयोगः कस्मात् कालात् प्रारब्धोऽभूदिति कश्चनापि नहि जानाति।

कस्यचन पुरुषस्येच्छामात्रेण प्रवर्तमानः संकेतः आधुनिक इति कथ्यते। यथा रमेश इति पदस्य व्यक्तिविशेषे संकेतः।

**पदम्–**

नैयायिकमतानुसारेण शक्तिमान् शब्द एव पदमित्यभिधीयते। यस्मिन् शब्देऽर्थविशेषस्य द्योतनस्य शक्तिर्भवति स एव शब्दः पदमित्यभिधीयते। अत्रायं प्रश्नोदेति यत् पदं कीदृशमर्थं बोधयति–(1) व्यक्तिविशेषम् (2) जातिविशेषम्, (3) अथवा आकृतिविशेषम्?

न्यायदर्शनानुसारेण एतासां व्यक्त्याकृतिजातीनां स्वरूपं निम्नप्रकारकमस्ति–

**"व्यक्तिर्गुणविशेषाश्रयो मूर्तिः।**

गुणाश्रयं मूर्तिवद् द्रव्यमेव व्यक्तिरित्यभिहितं भवतीत्यर्थः।

**"समानप्रसवात्मिका जातिः।[1]"**

भिन्नासु व्यक्तिषु विद्यमानापि समानैव प्रतीयते सा जातिरिति कथ्यते इति भावः। यथा सर्वेषु घटेषु समानरूपेण विद्यमाना घटत्वजातिः।

**"आकृतिर्जातिलिङ्गाख्या।[2]"**

गौतममतानुसारेण शब्दः जात्याकृतिविशिष्टं व्यक्तिं बोधयति। तथा च न्यायसूत्रम्–

**"व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः[3]।"**

अतएवाह गौतमः स्पष्टरूपेण–

**"व्यक्त्याकृतिजातयस्तु पदार्थः[4]।"**

इत्ययमेव नैयायिकानां सिद्धान्तः।

**अवयवार्थसमुदायार्थयोः विवेचनम्–**

नैयायिकमतानुसारेण केचन शब्दास्तथाविधाः भवन्ति येषां व्युत्पत्तिलभ्योऽर्थो भवति। यथा पाचकः पाकस्य कर्त्तेत्यर्थः अस्य शब्दस्य शक्तिः धात्ववयवोरुभयोरधीना वर्तते। अतएवायमवयवार्थमित्यभिधीयते।

केचन शब्दास्तथाविधाः भवन्ति येषामर्थाः व्युत्पत्तिलभ्या नहि स्वीक्रियन्ते। तेषां शब्दानां तु समुदायार्थ एव गृह्यते। गौरिति शब्दः। गम् धातोः डोस् प्रत्यये कृते सति गौ शब्दो व्युत्पद्यते–गच्छतीति गौः इत्यस्मिन् अर्थे। अस्यामवस्थायां गमनकर्तारः सर्वेऽपि जीवाः गौरिति शब्देनाभिधीयेरन्। गौरपि स्वयं स्वापवेलायामगौः स्यादिति गौशब्दस्य व्युत्पत्तिलभ्योऽर्थो न स्वीक्रियते। अपि तु गौः इति वर्णसमुदायस्य गोत्वावच्छिन्न व्यक्तिरूपोऽर्थः स्वीक्रियते।

**पदानां भेदाः–**

नैयायिकाः पदानां भेदत्रयं स्वीकुर्वन्ति (1) रूढपदम्, (2) यौगिकपदम्,

---

1. न्या. सू. 2/2/68
2. तदेव 2/2/67
3. तदेव 2/2/63
4. न्या. सू. 2/2/65

(3) योगरूढपदञ्चेति।

(1) रूढपदम्–

यस्य पदस्य प्रवृत्तिः व्युत्पत्त्यनुकूला नहि भवति तत् रूढपदं भवति। यथा–घट-पट-जलादिकाः शब्दाः।

(2) यौगिकपदम्–

यस्य पदस्य प्रवृत्तिः व्युत्पत्त्यनुकूला भवति तत् पदं यौगिकमित्यभिधीयते। यथा–दाता। दा धातोः कर्तरि तृचि प्रत्यये कृते दातेति पदं व्युत्पद्यते दानकर्तरि अर्थे।

(3) योगरूढपदम्–

यस्य पदस्य कस्यचनांशो व्युत्पत्तिलभ्यः कस्यचनांशश्च समुदायलभ्यः स्वीक्रियते तत् पदं योगरूढमित्यभिधीयते। यथा–पङ्कजम्। पङ्कात्–कर्दमात् जायते–उत्पद्यते इति व्युत्पत्तिलभ्यानुसारेणार्थो भवति। किन्तु पङ्काज्जायमानेषु–कमल-सैवाल–जलौकादिषुपङ्कजमितिपदं कमले एव रूढमिति पङ्कजपदस्य योगरूढत्वं सिद्धं भवति।

वाक्यम्–

आकांक्षायोग्यताऽसत्तियुक्तानां पदानां समूह एव वाक्यमित्यभिधीयते। तथा चोक्तमपि–"वाक्यं पदसमूहः[1]" इति। पदसमूहे वाक्यत्वव्यवहाराय त्रीणि वस्तून्यपेक्षितानि भवन्ति–आकांक्षायोग्यतासन्निधिनामानि।

(1) आकाङ्क्षा–

वाक्ये कस्यचन पदस्यापरस्य पदस्यापेक्षा भवति। सैवापेक्षाकांक्षेत्यभिधीयते। यथा–"गौश्चरति इति वाक्ये" गौरिति पदस्याकांक्षा वर्तते। तस्या आकांक्षायाः पूर्तिः चरतीति पदेन भवति अत इदं वाक्यम्। आकांक्षायाः स्वरूपं निरूपयता तर्कसंग्रहकारेणाभिहितम्–

पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम् आकांक्षा[2]।" इति। तथा च भाषापरिच्छेदनामके ग्रन्थेऽभिहितम्–

---

1. तर्कसंग्रहे।
2. तर्कसंग्रहः

**यत्पदेन विना यस्याननुभावकता भवेत्।**
**आकांक्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्[1]॥**

**(2) योग्यता–**

वाक्यसमूहस्य वाक्यत्वाय पदानां योग्यता द्वितीया अपेक्षिता विशेषता भवति। यथा–अग्निना सिञ्चति इति समूहः। अग्निस्तु दहनक्रियाकर्मण्येव क्षमः न तु सेचनक्रियायां करणतास्वीकाराभावात्, अस्मिन् पदसमूहे योग्यताया अभावः। योग्यतायाः स्वरूपम्–"अर्थाबाधो योग्यता[2]" इत्याह तर्कसंग्रहकारः।

**(3) आसत्तिः–**

वाक्यस्थानां पदानामासत्तिरप्यावश्यकी भवति। पदानामविलम्बेनोच्चारणमेव सन्निधिरित्यभिधीयते। पदानामुच्चारणे व्यवधानं मा भूत्। इयं पदानामव्यवहितासत्तिरेव शाब्दबोधस्य साधनम्। तथा चोक्तम्–"यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितः तयोरव्यवधानेनोपस्थितिः कारणम्[3]" इति।

**(4) तात्पर्यम्–**

नव्याः नैयायिकाः शाब्दबोधाय तात्पर्यबोधस्याप्यनिवार्यतां स्वीकुर्वन्ति। वक्ता केनाऽभिप्रायेण कस्य शब्दस्य प्रयोगं करोतीति ज्ञानमावश्यकं भवति। भोजनावसरे "सैन्धवमानय" इति वाक्यस्य लवणमानय इति वक्तुरभिप्रायो भवितुमर्हति, किन्तु युद्धे गमनवेलायां तस्य वाक्यस्याश्वमानयेति अभिप्रायो भवितुमर्हति।

**शब्दस्य शक्तिः–**

नैयायिकाः शब्दस्य शक्तिद्वयी स्वीकुर्वन्ति–अभिधाशक्तिः–लक्षणाशक्तिश्च। शब्दस्य यो हि मुख्योऽर्थो भवति सः शब्दस्याभिधया शक्त्या प्रकाश्यते। शक्तिज्ञानस्य साधनानां निर्देशं कुर्वद्भिराचार्यैरभिहितम्–

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**

**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः[4]।"**

---

1. कारिकावली–का.सं.–84
2. तर्कसंग्रहः।
3. न्या. सि. मु.।
4. न्या. सि. मु.।

शब्दस्य यया वृत्त्या मुख्यार्थोनुपपत्तौ प्रयोजनवशात् मुख्यार्थेन सम्बन्धः मुख्यार्थव्यतिरिक्तश्चार्थो ज्ञायते सेऽयं शब्दस्य लक्षणा अथवा गौणी शक्तिर्भवति। यथा–गङ्गायां घोषः, "अग्निरयं माणवकः।" इत्यादौ गङ्गापदं गङ्गातटरूपम्, अग्निपदञ्च तेजस्वितासम्पन्नम् इत्यादिकं अर्थं बोधयति।

लक्षणेयं द्विप्रकारवती भवति–जहल्लक्षणा अजहल्लक्षणा च। यत्र शब्दः स्वमुख्यार्थं जहाति तत्र जहल्लक्षणा भवति। यत्र च शब्दः मुख्यार्थं स्वम् अपरित्यज्य अन्यार्थमप्युपादत्ते तत्राजहल्लक्षणा भवति। तद्यथा–"कुन्ताः प्रविशन्ति" अस्य वाक्यस्य कुन्तशब्दः लक्षणया शक्त्या वाक्येऽन्वयसिद्धये कुन्तधारिणं पुरुषमाक्षिपति।

**शब्दस्य प्रमाणता–**

नैयायिकाः शब्दनामकं स्वतन्त्रं प्रमाणं स्वीकुर्वन्ति। सर्वे शब्दाः यस्मात् प्रमाणं नहि भवितुमर्हन्ति अतएव शब्दप्रमाणं लक्षयन् महर्षिः गौतमः प्रावोचत्–"आप्तोपदेशः शब्दः[1]" इति। अस्य सूत्रस्य भाष्ये अभिहितम्–

"आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः उपदेष्टा। साक्षात्करणमर्थस्याप्तिः तया प्रवर्तते इत्याप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणम्।[2]"

अन्नम्भट्टानुसारेण तु–

**"आप्तस्तु यथार्थवक्ता[3]।"**

**शब्दप्रमाणस्य भेदद्वयम्–**

शब्दप्रमाणं द्विविधं भवति–दृष्टार्थमदृष्टार्थञ्च। यस्य शब्दस्योपलब्धिरस्मिन् लोके भवति तत् शब्दप्रमाणं दृष्टार्थं भवति।

यस्य च शब्दप्रमाणस्य सम्बन्धः पारलौकिकेन विषयेण सह भवति तत् शब्दप्रमाणं पारलौकिकं भवति। वैदिकानां वाक्यानामर्थाः पारलौकिकाः सन्ति। अत एव वैदिकानि वाक्यानि अलौकिकशब्दप्रमाणानि सन्ति। गौतमेनाभिहितं यत् येन

1. न्या. सू. 1/1/7
2. न्या. सू. भा. 1/1/7
3. तर्कसंग्रहः।

प्रकारेण मन्त्रशास्त्रस्य आयुर्वेदशास्त्रस्य च वाक्यानि प्रामाणिकानि सन्ति तेनैव प्रकारेण वेदानामपि वाक्यानि प्रमाणभूतानि सन्तीति। तथा सूत्रम्–

"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्[1]" इति।

**वैदिकवाक्यानि–**

वैदिकानि वाक्यानि त्रिप्रकारकाणि भवन्ति (1) विधिवाक्यम्, (2) अर्थवादवाक्यम्, (3) अनुवादवाक्यञ्च।

**(1) विधिवाक्यानि–**

वेदानामाज्ञासूचकानि वाक्यानि विधिवाक्यशब्देनाभिधीयन्ते। यथा–"**स्वर्गकामोऽश्वमेधेन यजेत।**"

**(2) अर्थवादवाक्यानि–**

इमानि वाक्यानि वर्णनात्मकानि भवन्ति। अर्थवादवाक्यानां चत्वारो भेदाः भवन्ति–

**(क) स्तुतिवाक्यानि–**

एतादृशानि वाक्यानि विहितानां कर्मणां फलानि बोधयित्वा तेषां कर्मणां प्रशंसां कुर्वन्ति।

**(ख) निन्दावाक्यानि–**

वेदप्रतिषिद्धानां वाक्यानां दुष्परिणामं बोधयित्वेमानि वाक्यानि तेषां कर्मणां निन्दां कुर्वन्ति।

**(ग) प्रकृतिवाक्यानि–**

मनुष्यकृतेषु कर्मसु विरोधं प्रदर्शयन्ति एतादृशानि वाक्यानि।

**(घ) पुराकल्पवाक्यानि–**

एतादृशानि वाक्यानि ऐतिहासिकमथवा परम्पराप्राप्तमर्थंबोधयन्ति।

**(3) अनुवाद वाक्यानि–**

एतादृशानि वाक्यानि पूर्वं प्रोक्तस्यार्थस्य अनुवादं कुर्वन्ति। अनुवादवाक्यान्यपि द्वेधा भवन्ति। अर्थानुवादवाक्यानि, शब्दानुवादवाक्यानि।

(क) अर्थानुवादवाक्यानि–पूर्वमुक्तस्यार्थस्य अर्थतोऽनुवादं कुर्वन्ति।

1. न्या. सू. 2/1/69

(ख) शब्दानुवादवाक्यानि–पूर्वमुक्तस्य अर्थस्य शब्दशोऽनुवादकराणि वाक्यानि शब्दानुवाक्यानि कथ्यन्ते।

नैयायिकाः वैशेषिकाश्च सर्वे विद्वांसः वेदस्य सम्पूर्णस्य प्रामाणिकतां स्वीकुर्वन्ति इति।

## न्यायनये शब्दस्य नित्यत्वानित्यत्वपरीक्षणम्–

शब्दस्य नित्यत्वानित्यत्वविषयेऽस्ति भारतीयदार्शनिकां वैमत्यम्, तत्र न्यायवैशेषिकयोः मते ऐन्द्रियकत्वाद् आकाशाश्रितत्त्वाच्च कण्ठताल्वाद्यभिघातोत्पद्यमानत्वाच्च शब्दस्यानित्यत्वम्। यदि शब्दस्य नित्यत्वं स्यात् तर्हि शब्दराश्यात्मकवेदस्य कोऽपि कर्ता न स्यात्, दृश्यते, अनुमीयते च तस्य कर्ता। शब्दराश्यात्मकवेदस्य पौरुषेयत्वात् शब्दानां चोत्पत्तिर्विनाशदर्शनात् शब्दानामनित्यत्वमिति सिद्धान्तः।

"आप्तोदेशः शब्दः[1]" इति शब्दलक्षणम्। तल्लक्षणे शब्दस्यनत्यत्वानित्यत्वविषये भवति दार्शनिकानां विप्रतिपत्तिः। तत्र च प्रथमा विप्रतिपत्तिः मीमांसकानाम्–

**वृद्धमीमांसकमतप्रतिपादनम्–**

एतेषां नये शब्दस्य आकाशगुणत्वं, सर्वव्यापकत्वं, नित्यत्वम्, अनुत्पद्यमानत्वञ्च। तात्पर्यटीकाकारेण मीमांसकमतमुल्लिख्य उक्तम्–"अभिघातप्रेरितवायुः श्रवणेन्द्रियसमवेतनित्यशब्दमभिव्यञ्जयति। उद्योतकारः अनुमानं प्रदर्शयति "एके तावद् ब्रूते नित्यः शब्द इति अविनश्यदाधारैक द्रव्याकाशगुणत्वात्, यदविनश्यदाधारैकद्रव्यमाकाशगुणश्च तन्नित्यं दृष्टं, यथाकाशमहत्वं तथा शब्दस्तस्मान्नित्य इति। सोऽयं नित्यः सन्नभिव्यक्तिधर्मा, तस्याभिव्यञ्जकाः संयोगविभागनादा इति[2]"।

उद्योतकारमतमुपरि तात्पर्यटीकाकारः वदति–भेरीदण्डयोः संयोगप्रेरितवायुः श्रवणेन्द्रियं संप्राप्य शब्दस्य व्यञ्जकः, एवं वंशदलद्वयविभागप्रेरितवायुः शब्दस्य व्यञ्जकः। परम्परासम्बन्धेन संयोगविभागौ शब्दस्य व्यञ्जकौ, साक्षात् सम्बन्धेन नादः शब्दस्य व्यञ्जकः, "आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मकः[3]" इति भाष्योक्त्या ज्ञायते इदं प्रभाकरमतम्।

---

1. न्या. सू. 1/1/7
2. न्यायवार्तिके।
3. न्या. वा.ता.टी.।

**सांख्यमतोपस्थापनम्–**

यत्र गन्धादयो वर्तन्ते तत्रैव शब्दोऽपि पृथिव्यादिषु वर्तते शब्दस्पर्शादीनामुत्तरोत्तरभूतेषु सत्वस्वीकारात्, गन्धादिवत् सत्वादेवाभिघातादिभिरभिव्यज्यमानो न तूत्पत्तिधर्मकः, सांख्यैरनित्यपदार्थानां सत्वाभिव्यक्त्योः स्वीकारात्। "गन्धादिसहवृत्तिर्द्रव्येषु संनिविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मकः[1]।"

**वैशेषिकसिद्धान्तप्रतिपादनम्–**

"आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवत्"[2] तथा च वैशेषिकसूत्राणि "श्रोत्रग्रहणो योऽर्थः स शब्दः"[3] "गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम्"[4] "अनित्यश्चायं कारणतः[5]" "संयोगाद् विभागाच्च शब्दाच्च शब्दनिष्पत्तिः[6]" "लिङ्गाच्चानित्यः शब्दः[7]", तस्मात् कारणात् वैशेषिकानां मते शब्दस्य अनित्यत्वम् इति।

**बौद्धमतप्रदर्शनम्–**

"महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मकः[8]" एतेषां नये वस्तुमात्रस्य क्षणिकत्वात् उत्पत्तिर्विनाशत्वाच्च शब्दस्यानित्यत्वम्।

प्रतिपादितविप्रतिपत्तिवाक्यप्रयुक्तशब्दस्य नित्यत्वानित्यत्वे भवति संशयस्योत्पत्तिः। तत्र किं तत्त्वमित्याकाङ्क्षायां शब्दस्य अनित्यत्वमिति नैयायिकानां सिद्धान्तः।

**नैयायिकमतम्–**

शब्दस्योत्पत्तिमत्त्वाद् उत्पत्तिमतोऽनित्यत्वनियमाच्च, इन्द्रियग्राह्यत्वाद् इन्द्रियग्राह्यस्यानित्यत्वनियमाच्च अनित्यत्वम्।

ननु नायमपि नियमः सामान्यादौ व्यभिचारादिति चेन्न अनित्यपदार्थसदृशत्वान्न

---

1. सां.प्र.भा.।
2. न्या. भा. पृ. 172
3. वै. सू. 2/2/21
4. वै. सू. 2/2/25
5. वै. सू. 2/2/28
6. वै. सू. 2/2/31
7. वै. सू. 2/2/32
8. न्या. भा. पृ. 172

व्यभिचारः यथा "तीव्रं दुःखं मन्दं दुःखम्" इत्यनित्यं दुःखमुपचर्यते तथा "तीव्रः शब्दो मन्दः शब्दः" इत्युपचर्यते एतादृशोपचाराद् तीव्रत्वादिधर्माणां नित्येष्वसंभवाच्च शब्दस्यानित्यत्वं सिद्धम्।

**"आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च[1]।"**

"अनित्यः शब्दः तीव्रमन्दविषयत्वात्, सुखदुःखवदिति। कृतकवदुपचारादित्यनेन सूत्रेण सर्वानित्यत्वसाधनधर्मसंग्रहः, कृतकत्वग्रहणस्योदाहरणार्थत्वात्। यथा सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वाद् उपलब्धस्यानुपलब्धिकारणभावे सत्यनुपलब्धेः गुणस्य सतोऽस्मदादिबाह्यकरणं प्रत्यक्षत्वाद् इत्येवमादि[2]।"

ननु व्यभिचाराद् आदिमत्त्वादिहेतूनां शब्दानित्यत्वसाधकत्वं न संभवति। यतः "साध्याभाववति वृत्तित्वं व्यभिचारित्वं, घटध्वंसे ह्यनित्यत्वसाध्यं नास्ति उत्पत्तिमत्त्वं त्वस्तीति तस्य व्यभिचारित्वं सिद्धम् "येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनैवेन्द्रियेण तन्निऽष्ठजातेर्ग्रहणाभ्युपगमादैन्द्रियकत्वं सामान्ये सिद्धम्। आकाशादावनित्यत्वं नास्ति अनित्यवदुपचारस्तु भवति "आकाशस्य प्रदेशः" इत्यादिरिति अनित्यवदुपचारस्यापि व्यभिचारित्वं सिद्धम्। व्यभिचारिणश्च हेतोः साध्यसाधकत्वं न संभवतीति आदिमत्त्वादिहेतूनामपि पूर्वसूत्रोक्तानां व्यभिचारित्वात् शब्दानित्यत्वसाधकत्वं नोपपद्यते इति चेन्न—"तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः[3]"।

तदर्थश्च वास्तविकौपचारिकयोर्नित्यत्वयोः परस्परं भेदा प्रध्वंसे च भाक्तमेव नित्यत्वं न तु तात्त्विकमिति। अनित्यत्वव्यभिचारित्वं नास्ति। "नित्यमित्यत्र किं तावत् तत्त्वम्? अर्थान्तरस्यानुत्पत्तिधर्मकस्यात्महानानुपपत्तिर्नित्यत्वं तच्चाऽभावे नोपपद्यते, भाक्तं तु भवति। यद्भूत्वा न भवति न जातु तत् पुनर्भवति, तत्र नित्य इव नित्यो घटाभाव इत्ययं पदार्थ इति। तत्र यज्जातीयकः शब्दो न तथाजातीयकं कार्यं किञ्चिद् नित्यं दृश्यते इत्यव्यभिचारः इति भाष्यकारैः[4]। यदि शब्दसदृशं किञ्चित्कार्यं नित्यं स्यात्तदा तत्रोत्पत्तिमत्त्वस्य वृत्तित्वेन व्यभिचारित्वं स्यादपि न चैवमस्तीत्यव्यभिचार इत्युत्पत्तिमत्त्वेन शब्दस्यानित्यत्वं सिद्धम्।

यच्चैन्द्रियकत्वहेतोः सामान्येऽनित्यत्वव्यभिचारित्वमुक्तं तन्निराकरोति"

---

1. न्या. सू. 2/2/13
2. न्यायभाष्ये।
3. न्या. सू. 2/2/15।
4. न्या. भा. पृ. 176।

सामान्यनित्यत्वात्" इत्यनेन नित्ये सामान्ये वर्तमानत्वेनैन्द्रियकत्वानित्यत्वव्यभिचारित्वं यदुक्तं तन्नोपपद्यते। यद् इन्द्रियसम्बन्धग्राह्यं तद् ऐन्द्रियकमित्युच्यते सामान्यमपीन्द्रियसंबन्धग्राह्यमिति तत्र नित्यभूते सामान्ये ऐन्द्रियकत्वं व्यभिचरतीति हेतोः प्रकृतसूत्रेण व्यभिचारनिवृत्त्यर्थमैन्द्रियकत्वे संतानस्य विशेषणत्वादव्यभिचारः। "सन्तानानुमानविशेषणात्[1]" संतानशब्दोऽत्र सामान्यवत्वपरः। अनुमानशब्दश्च ऐन्द्रियकत्वहेतुपरः, तयोर्विशेषणविशेष्यभावश्च–सामान्यवत्वे सति ऐन्द्रियकत्वमित्येव। तथा च नैन्द्रियकत्वमात्रेण शब्दस्यानित्यत्वं साध्यते येनोक्तरीत्या व्यभिचारः स्यात्, किन्तु सामान्यवत्वे सति ऐन्द्रियकत्वात् इत्यनेन। अस्ति च शब्दे शब्दत्वं सामान्यं यथा घटत्वादिकं घटादिषु, नित्ये च सामान्यवत्त्वं नास्ति, आत्मादौ चैन्द्रियकत्वं नास्तीति सामान्यवत्वे सत्यैन्द्रियकत्वादिति हेतुरनित्यत्वव्यभिचारी न संभवतीति तेन शब्दस्यानित्यत्वं सिद्धम्।

कृतकवदुपचारादिति हेतोर्यद् व्यभिचारित्वमुक्तं तदपि न संगच्छते। यतः–कारणवतो द्रव्यस्य भागविशेषः किं वाक्यलक्षणं कारणीभूतं द्रव्यं प्रदेशशब्देनाभिधीयते यथा "कम्बलप्रदेशः" इति। नित्यानां चाकाशादीनां कारणाभावेन कारणवद् द्रव्यत्वाभावात् प्रदेश एव वस्तुतो नास्ति येनाभिधीयते, यथा चाकाशादिषु "आकाशप्रदेशः" इत्यादिरनित्यवदुपचारः–प्रदेशव्यवहारो गौण एव न मुख्य इति नित्येषु आकाशादिषु कृतकवदुपचारादिति हेतोर्व्यभिचारो नास्तीति तेन शब्दस्यानित्यत्वं सिद्धम्। उक्तं च सूत्रकारेण महर्षिगौतमेन–

"कारणद्रव्यस्य प्रदेशशब्देनाभिधानाद् नित्येष्वप्यव्यभिचार इति[2]"। पूर्वोक्तयुक्त्या अस्माभिर्ज्ञायते यद् आकाशगुणत्वाद् कण्ठताल्वाद्यभिघातजन्यत्वाद् ऐन्द्रियकत्वाच्च शब्दस्यानित्यत्वं सिद्धम्।

**पर्यालोचनम्–**

लोके कारणात् कार्योत्पत्तिरिति सर्वाभिमतः, असतिकारणे कार्यस्योत्पत्तिर्भवितुं न शक्यते। कार्यं सर्वदा अनित्यं भवति। कार्यत्वानित्यत्वयोः अविनाभावदर्शनात् शब्दस्यापि कार्यत्वाद्रव्याश्रितत्त्वाच्च शब्दोऽनित्यः गुणपदार्थश्च। शब्दात्मककार्यस्य कण्ठताल्वाद्यभिघातसंयोगरूपानित्यकारणात् जायमानत्वात् शब्दोऽनित्येति नैयायिकानां सिद्धान्तः।

---

1. न्या. सू. 2/2/16।
2. न्या. सू. 2/2/17

तदुपरि आक्षिपन्ति मीमांसकाः—शब्दोऽनित्यः गुणपदार्थश्च भवितुं नार्हति। यतः गुणस्य सर्वत्र साश्रयतया प्रतीयमानत्वादिह च निराश्रयतयैव प्रतीतिदर्शनात् प्रत्यक्षविरुद्धत्वाच्च शब्दो द्रव्यमेवेति भाट्टाः।

श्रोत्रेन्द्रिय ग्राह्यः शब्दः शब्दत्वजातिमान्।
द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः॥
वियद् गुणत्वं शब्दस्य केचिदुचुर्मनीषिणः।
प्रत्यक्षादिविरोधात् तद्भाट्टपादैरुपेक्षितम्[1]॥

"शब्दो द्रव्यं कार्यत्वात् घटवत्" "शब्दो द्रव्यम् सत्त्वेसत्यनाश्रयत्वाद् गगनवद्" इत्याद्यनुमानेन शब्दस्य द्रव्यत्वं सिद्धयति, साश्रयत्वेन शब्दस्य प्रतीत्यभावाद् शब्देऽनाश्रिततत्त्वस्यासिद्धिरपि वक्तुं न शक्यते—निराश्रयत्वस्यानुमानाधीनत्वात्। तच्चानुमानं—विमतं द्रव्यम् (आकाशादि) शब्दाश्रयो न भवति द्रव्यत्वात् पटादिवत्। ताल्वादिव्यापारे शब्दस्य कारणत्वं यत्प्रतिपादितं तन्न संगच्छते। अर्थात् ताल्वादिव्यापारः शब्दस्य कारणं भवितुं नार्हति यतोऽहि यथा भूखननादेः व्यापारः कन्द-मूलोदकादेरनुत्पादक अभिव्यञ्जकमात्रं तथैव कण्ठताल्वादिव्यापारः न शब्दोत्पादकोऽपिचाभिव्यञ्जक एव, तदपि अनुमानेन सिद्धयति—यथा ताल्वादिव्यापारः न शब्दकारणं व्यापारत्वाद् आकुञ्चनादिव्यापारवद्। शब्दो विभुः स्पर्शानर्हद्रव्यत्वाद् अनारम्भकत्वे सति अनवयवद्रव्यत्वाद् व्योमवत्" इत्याद्यनुमानेन शब्दस्य नित्यत्वं विभुत्वञ्च सिद्धयति। अतो शब्दः नित्यः विभुः द्रव्यपदार्थश्च भवति।

गुरुमते किञ्चिद् व्यतिक्रमः दृश्यते। एतेषां नये शब्दो आकाशगुणः नित्यश्चेति। उट्टङ्कितमस्ति यत्—

एषा शालिकनाथेन शब्दनित्यत्वसाधने।
प्रभाकरगुरोर्दृष्ट्या न्यायशुद्धिः परीक्षिता[2]॥

"नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्[3]" इत्यस्मिन् सूत्रे जैमिनिः शब्दस्य नित्यत्वमाह। तेन वर्णनित्यत्वं सिद्धयति। शब्दानित्यत्वपक्ष एव च गौरवं बहूनां शब्दानां क्षणिकानामुत्पत्तिः, प्रागभावाः ध्वंसाश्चानन्ताः कल्पनीयमिति।

समादधति नैयायिकाः। अयि भो कुमारिल! अस्माभिः यथा श्रोत्रग्राह्यत्वं

1. मानमेयोदये।
2. तदेव।
3. जैमिनि सू.–1.1.18

स्वीक्रियते, भवताऽपि तथैव शब्दस्य श्रोत्रग्राह्यत्वमभ्युपेयते। श्रोत्रस्तावत् कर्णशष्कुल्यवच्छिन्नमात्रप्रदेशः, शब्दस्य श्रोत्रग्राह्यत्वाद् आकाशगुणत्वाच्च कथं तस्य द्रव्यत्वम्। "शब्दो न द्रव्यं श्रोत्रग्राह्यत्वाद् शब्दत्ववत्" इत्यनुमानेन शब्दस्य द्रव्यत्वाभावत्वं सिद्ध्यति। स च शब्दः कर्मादौ नान्तर्भावनीयत्वात् गुण एव स्वीकार्यः। आकाशाश्रितत्त्वात् निराश्रितत्त्वमिति वचनमपि परास्तम्। कण्ठताल्वाद्यभिधा-तजन्यशब्दः इति सर्वजनाभिमतस्य अपलापो कर्त्तुं न शक्यते। यतः ताल्वादिव्यापारे शब्दस्य कारणता अनुमानेनैव सिद्ध्यति। तच्चानुमानम्–"ताल्वादिव्यापारः शब्दस्य कारणं भवति। शब्दस्य तदनन्तरभावित्वाद् यो यदनन्तरभावो स तत्कारणकः यथा कुलालव्यापारानन्तरभावो घटस्तत्कारणकः। अतः शब्दे सकारणत्वमस्त्येव अकारणत्वं कथम्? शब्दस्य यन्नित्यत्वं साधितं तन्न समीचीनम्। यतः यावन्तः घटपटादयः पदार्थाः सन्ति ते सर्वे प्रयत्नानन्तरीयकत्वाद् अनित्यः तथैव शब्दस्यापि कार्यत्वाद् ऐन्द्रिकत्वाद् वा अनित्यः, तदपि अनुमानेन सिद्ध्यति तद्यथा–

"शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवत्"

जयन्तभट्टेन शब्दानित्यत्वमभ्युपेत्य सम्यक्रूपेणोच्यते–"अनित्य हेतवः इमे किल कथ्यन्ते प्रयत्नानन्तरमुपलब्धेः कार्यः शब्द इति[1]।" कण्ठताल्वाद्यभिघात-संयोगस्य अनित्यत्वात् तज्जन्यकार्यात्मकशब्दोऽनित्येति। यतः कार्यत्वानित्यत्वयोः परस्परं व्याप्त्यात्मकसम्बन्धदर्शनात् शब्दस्यापि कार्यत्वादनित्यः सः। उच्चारणादूर्ध्वमनुपलब्धेरनित्यः शब्दः नह्येनमुच्चरितं मुहूर्तमप्युपलभामहे तस्माद्विनष्ट इत्यवगच्छामः। करोति शब्दव्यपदेशाच्च कार्यशब्दः, शब्दं कुरु शब्दं माकार्षी इत्यादिभिः व्यवहारैः नूनं शब्दस्य कार्यत्वमिति।

श्रूयते खलु यद्विकारि भवति तदनित्यम्, यथा द्राक्षेक्षुरसादीनां विकार्यत्वाद् अनित्यमस्ति तथैव शब्दान्तरविकार्यत्वात् शब्दस्यापि अनित्यत्वम्। यथा दध्यत्र इत्यत्र इकारशब्दस्थानापन्नः यकारः दृश्यते एतेन सिद्धं यत् यकारागते सति इकारस्य विनाशः, कुत्रचित् यकारस्य स्थाने सम्प्रसारणादिकृते सति इकारो भवति। अतः यकारस्य अनित्यत्वं सिद्धम्। तस्मात् शब्दानामनित्यत्वमभ्युपेयम्।

## संशयस्वरूपपरीक्षणम्–

अप्रमाज्ञानस्य त्रयो भेदाः सन्ति। संशयः, विपर्ययः, तर्कश्च। एतल्लक्षणं हि–

---

1. न्या. म. पृ. 268।

**स संशयो मतिर्यास्यादेकत्राभावभावयोः।**
**साधारणादिधर्मस्य ज्ञानं संशयकारणम्[1]॥**

तथा च एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशयः। उभयसाधारणधर्मज्ञानम्, असाधारणधर्मज्ञानं, विप्रतिपत्तिवाक्यजन्यकोटिद्वयज्ञानं संशयस्य कारणं भवति। एकवृत्तिभावाभावविषयकज्ञानत्वस्य वृक्षे कपिसंयोगतदभावज्ञानेऽतिव्याप्तिस्तद्वारणाय एकधर्मिकविरुद्धेति पदम्। वृक्षे कपिसंयोगतदभावयोरविरुद्धत्वात् तद्वारणम्। भूतलं घटवद् पृथिवीघटाभाववतीत्यत्र ज्ञानेऽतिव्याप्तिवारणाय एकधर्मितावच्छेदक-विशिष्टविशेष्यकत्वावच्छिन्नेति उक्तम्। भूतलं घट-तदभाववत् इति ज्ञानवारणाय विरुद्ध भावाभावेति पदम्। भूतलं भूतल-तदभावाभावमिति ज्ञान वारणाय प्रकारकमिति। इच्छादिवारणाय ज्ञानमिति पदम्।

ननु भूतलं संयोगेन घटवत् समवायेन घटाभाववच्च इतिज्ञानेऽतिव्याप्तिः इति चेन्न तत्सम्बन्धावच्छिन्न तन्निष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताकविशेष्य-तानिरूपित तत्संबन्धावच्छिन्नप्रतियोगिताकतद्विरुद्धं तदभावनिष्ठप्रकारताकज्ञानत्वमिति विवक्षणात्। वस्तुतस्तु स्वावच्छिन्नप्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन विषयिताविशिष्ट विषयिताशालिज्ञानत्वं संशयत्वम्।

अन्ये तु तद्विरोधविशिष्ट दैशिकविशेषणता संसर्गावच्छिन्नप्रकारतानिरूपकत्वं तत्संशयत्वम्। अपरे तु तन्निष्ठप्रकारतानिरूपिता या प्रतियोगितासम्बन्धावच्छिन्न तन्निष्ठप्रकारता निरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपिता च विशेष्यता तन्निरूपकत्वं तत्संशयत्वमिति वदन्ति।

कोटिद्वयसहचरितत्त्वेन गृह्यमाणो यो धर्मः ऊर्ध्वत्वादिस्तत्प्रकारक निश्चयः संशयकारणम्। तेन घटत्वतदभावसहचरित पटत्ववानयमिति भ्रमात् "अयं घटो न वा" इति संशयोत्पत्तिः। उच्चैस्तरत्वम्-स्थाणवस्थाणुसाधारण धर्ममुच्चैस्तरत्वं संशयधर्मिणिज्ञात्वा " अयं स्थणुत्ववान् तदभाववान्वा" इति संदिग्धे स्थाणवस्थाणु सहचरितत्त्वेन वर्तमानग्रहविषयधर्मप्रकारकपुरोवर्तिविशेष्यकज्ञानात् पुरोवर्तिविशेष्य-कस्थाणुत्वतदभावकोटिसंशयो भवति।

अत्र साधारणधर्मवद्धर्मिज्ञानजन्यकोटिद्वयस्मरणस्यैव संशयजनकत्वं धर्मिज्ञानं तु प्रयोजकत्वमात्रम् इति प्राचीनानामाशयः। नवीनास्तु-कोटिद्वयस्मरणक्षणे एव संशयोत्पत्तिसंभवात् क्षणविलम्बकल्पनायां मानाभावात् साधारणधर्मवद्धर्मिज्ञानजन्य

1. कारिकावली-का. सं. 130

कोटिद्वयस्मरणत्वेन कारणत्वे गौरवात् तत्तद्व्यक्तित्त्वेन हेतुत्वे व्यभिचारात् साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुत्वं युक्तमिति।

अत्र "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः[1]" इति गौतमसूत्रे "विरुद्धकोटिद्वयवाक्यात्मकविप्रतिपत्तेः" शब्दो नित्यो न वा इत्याकारिकायाः अर्थद्वयस्मृतिद्वारा संशयजनकत्वमुक्तं तत्खण्डयति–"विप्रतिपत्तिस्तु शब्दो नित्यो न वा इत्यादि शब्दात्मिका न संशयकारणं भवति[2]" तथा च संशयात्मक शाब्दबोधोऽपि नाङ्गीकर्त्तव्यः। शब्दज्ञानस्य व्याप्तिज्ञानस्य अतिदेशवाक्यार्थज्ञानस्य च प्रत्यक्षान्यनिश्चयमात्रजनकत्वात्मक असाधारणधर्मवत्त्वात्। तथा च विप्रतिपत्यादि शब्दज्ञानं न संशयजनकं प्रत्यक्षान्यनिश्चयकारणत्वात् व्याप्तिज्ञानादिवत् इत्यनुमानेन विप्रतिपत्तेः संशयाजनकत्वसिद्धिः।

ननु विप्रतिपत्तेः संशयाजनकत्वे उक्तसूत्रस्याप्रामाण्यापत्तेः, किं समाधान-मित्यत्रोच्यते। "तत्र शब्देन कोटिद्वयज्ञानं जन्यते[3]" तथा च कोटिद्वयव्याप्यवत्ता-ज्ञानकाले भावाभावरूपकोटिद्वय शाब्दसामग्रीसत्वे एकैकशाब्दं प्रति अपरशब्दसामग्र्याः प्रतिबन्धकत्वात् शाब्दसामान्यानुपपत्तिरेव तदा अनुभूयमान संशयोत्पत्तिः कथमिति चेत् "संशयस्तु मानस एव" इत्याह।

वैशेषिकाचार्यास्तावत् विद्याविद्याभेदेन बुद्धेः भेदद्वयं मन्यन्ते[4]। अविद्यायाश्चत्वारो भेदाः। (1) संशयः (2) विपर्ययः (3) अनध्यवसायः (4) स्वप्नश्च।

संशयस्तावत् प्रसिद्धानेकविशेषयोः सादृश्यमात्र दर्शनादुभयविशेषानुस्मरणाद-धर्माच्च किंस्विदित्युभयावलम्बी विमर्शः संशयः[5]।।

अयम्भावः प्रसिद्धाः पूर्वं प्रतीताः अनेकविशेषाः असाधारणधर्मा वक्रकोटरादयः शिरः पाण्यादयश्च ययोः स स्थाणुपुरुषयोस्तयोः सादृश्यमात्रस्य साधारणधर्ममात्रस्य क्वचिदेकत्रधर्मिणि दर्शनात् उभयोः स्थाणुपुरुषयोर्विशेषाणां वक्रकोटरादीनां शिरः पाण्यादीनाञ्च पूर्वं प्रतीतानां स्मरणादधर्माच्च किञ्स्विदिति उभयावलम्बी विमर्शः संशयः। किं स्थाणुः? किं वा पुरुषः? इति अनवस्थितोभयरूपेण उभयविशेषसंस्पर्शी विमर्शः विरुद्धावमर्शो ज्ञानविशेषः संशयः।

1. न्यायसूत्रम् 1/1/23।
2. किरणावली टीका–का. सं. 130
3. मुक्तावली टीका।
4. प्रशस्तपादभाष्यम्।
5. तदेव।

मात्रग्रहणसामर्थ्यात् विशेषाणामनुपलम्भोगे गम्यते। दर्शनशब्दः उपलब्धिवचनो न प्रत्यक्षप्रतीतिवचनोऽनुमेयस्यापि सामान्यस्य हेतुत्वात्। सादृश्योपलम्भाभिधाना-हर्म्युपलम्भोऽपि लभ्यते। अस्यानुपलम्भेः तद्धर्मस्य सादृश्यस्योपलम्भाभावात् संशयोऽपि धर्मिण्येव, न सादृश्ये, तस्य निश्चितत्त्वात्। सादृश्यमिति च साधारणधर्ममात्रं कथ्यते, नानेकार्थसमवेतं सादृश्यम्, अस्पर्शवत्वस्य स्पर्शाभावस्याकाशान्तः करणगतस्य प्रतीत्यात्मन्यणुत्वमहत्वसंशयदर्शनात्।

यदा अयं प्रतिपत्तोभयसाधारणं धर्मं क्वचिदेकत्र धर्मिणि उपलभ्यते, कुतश्चिन्निमित्तात् तस्य धर्मिणो विशेषं नोपलभ्यते, पूर्वं प्रतीतयोः स्मरति विरुद्धविशेषयोः, न च उभयोरेकत्र सम्भवति सद्भावं, विरुद्धत्वात्। नाप्यभावं तदविनाभूतस्य साधारणधर्मस्य दर्शनात्। तदा अस्य साधारणधर्मविषयत्वेनावधारिते धर्मिणि विशेषविषयत्वेन अनवधारणात्मकः प्रत्ययः संशयो भवति।

संशयः अविद्या एव[1]। अविद्या पुरुषं नश्यति। अतएवोक्तं संशयः अधर्मादुत्पद्यते। सामान्यं दृष्ट्वा यदेकं विशेषमनुसृत्य विशेषमनुस्मरति तदा सामान्यदर्शनस्य विनष्टत्वात् संशयहेतुत्वानुपपत्तिरिति चेन्न, उभयविशेषविषयाभ्यां संस्काराभ्यां युगपत्प्रबुद्धाभ्यामुभयविशेषविषयैकस्मरणजननात्, तत्काले च विनश्यदवस्थस्य सामान्यज्ञानस्य सत्त्वात्।

स च संशयः द्विविधः। अन्तर्बहिश्च[2]। अन्तस्तावत् आदेशिकस्य सम्यङ्मिथ्या चोद्दिश्य पुनरादिशतस्त्रिषु कालेषु संशयो भवति "किन्नु सम्यङ्मिथ्या वा" इति।

आदेशिकोज्योतिर्विद्पदवाच्यः। तेन ज्योतिर्विदा एकदा कस्यचित् पुरुषं तद्ग्रहसंचारादिनिमित्तमुपलभ्य आदिष्टं किञ्चिदनिष्टं किञ्चिदिष्टं वा अत्र अभूत्, वर्तते भविष्यति च तत् तथैव तदा संवृत्तम्। पुनश्च तादृश एव निमित्तानि उपस्थितानि। तानि दृष्ट्वा तदादेशिकस्य ज्योतिर्विदः पुरुषस्य स्वज्ञाने संशयो जायते यत् एतन्मम नैमित्तिकं ज्ञानमभूत् तत्किं सत्यमसत्यं वा[3]?।

बहिः संशयो द्विविधः–(1) प्रत्यक्षात्मकः (2) अप्रत्यक्षात्मकश्च[4]। यत्र साधारणलिङ्गदर्शनादुभयविशेषानुस्मरणाद् अधर्माच्च संशयो भवति तदप्रत्यक्षात्मकः।

1. न्यायकन्दली, पृ. 421, सं. सं. वि. वि. प्रकाशिता–1977
2. पदार्थधर्मसंग्रहे, पृ. 412–सं. सं. वि. वि. प्रकाशिता–1977
3. न्यायकन्दली।
4. प्रशस्तपादभाष्यम्।

यथा–अरण्ये विषाणमात्रदर्शनात् अयं गौर्गवयो वा इति संशयः।

प्रत्यक्षात्मकश्च संशयः यथा–स्थाणुपुरुषयोः सम्बन्धिनी योर्ध्वता तन्मात्रस्य प्रत्यक्षविषये पुरोवर्तिनि धर्मिणि दर्शनात् भवति। वक्रकोटरादेः स्थाणुधर्मस्य शिरः पाण्यादेर्विशेषस्य पुरुषधर्मस्यानुपलब्धितः। स्थाणुत्वादिसामान्य विशेषानभिव्यक्ता-वित्यादिपदेन पुरुषत्वाद्यवरोधः। वक्रकोटरादयः स्थाणुत्वाभिव्यक्तिहेतवः, शिरः पाण्यादयः पुरुषत्वाभिव्यक्ति हेतवः, तेपामनुपलम्भात्। स्थाणुत्वपुरुषत्वयोरनभिव्यक्तौ सत्यामुभयोः स्थाणुपुरुषयोः प्रत्येकमुपलब्धानां विशेषाणामनुस्मरणादुभयत्राकृष्यमाणस्य उभयत्र स्थाणौ पुरुषे वा आकृष्यमाणस्य प्रतिपत्तुः यत् ऊर्ध्वता दर्शनात् स्थाणुरयमिति निश्चेतुमिच्छति तदा पुरुषविशेषानुस्मरणेन पुरुषे समाकृष्यत इत्युभयत्राकृष्यमाणः अत एवास्य प्रत्ययो दोलायते, नैकत्र नियमेन अवतिष्ठते–"किन्तु खल्वयं स्थाणुः स्यात् पुरुषो वेति"[1]।

वैशेषिकदर्शनकारः कणादः संशयस्वरूपमित्थं निगदति। तथा च सूत्रम् "सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः[2]" सामान्यवतो धर्मिणः प्रत्यक्षात् विशेषस्य परस्परव्यावर्तकस्य धर्मस्य वक्रकोटरादेः शिरः पाण्यादेश्चाप्रत्यक्षादग्रहणात्। विशेषस्मृतेः विशेषस्य कोटिद्वयस्य स्थाणुत्वपुरुषत्वलक्षणस्य स्मरणात्।

अत्र स्मरणमपि ग्रहणपरम्[3]। क्वचिदनुभूयमानधर्मयोरपि कोटित्वात्, चकारात् अदृष्टादेः संशयकारणस्य संग्रहात्।

ननु सामान्यधर्म एव तत्तदभावसमानाधिकरण इति तत्तद्धर्मिणो एकतरानिश्चाय-कत्वात् संशयहेतुत्वं युक्तम्–असाधारणस्य तु तत्तदभावव्यावृत्तरूपस्य साधारणत्वाभावात् कथं संशयजनकता इत्याशंक्य प्राचीनमताभिप्रायेण निराकरोति[4]–"असाधारणो धर्मोऽनध्यवसायात्मकज्ञानजनक इति नोक्तः[5]। तत्र समाधत्ते–असाधारणधर्मोऽपि एकसम्बन्धिाज्ञानमपरं स्मारयति इति नियमेन व्यावृत्तत्वसम्बन्धज्ञानद्वारा तत्तदभावरूपकोटिद्वयं स्मारयन् कोटिद्वयज्ञानसम्पादनद्वारा संशये प्रयोजकमिति एतन्मते

1. प्रशस्तपादभाष्यम्।
2. वैशे. सू. 2/2/17
3. वैशेषिकसूत्रोपस्कार–ग्रहणपरं ज्ञानपरमित्यर्थः।
4. उपस्कारटिप्पणी, पृ. 75
5. उपस्कारटीका–शंकरमिश्रः।

संशयातिरिक्त अनध्यवसायात्मकज्ञानस्यासत्त्वेऽपि न क्षतिः[1]। विप्रतिपत्तिरपि विरुद्धप्रतिपत्तिद्वयजन्यं वाक्यद्वयं शब्दो नित्य इत्यपरं तदुभयं, तदुभयजन्यञ्च ज्ञानद्वयमयुगपद् भावित्वात्। सम्भूय न संशायकमतस्तत्र शब्दत्वादिरसाधारणः सत्वप्रमेयत्वादि साधारणो वा धर्मः संशयः इति पृथङ्नोक्ताः[2]।

समानतन्त्रे गौतमीये अनध्यवसायज्ञानस्यानभ्युपगमात् असाधारणो धर्मः संशयकरणत्वेन उक्तः। विप्रतिपत्तेर्विरुद्धवाक्यद्वयस्य अन्वयव्यतिरेकशालितया संशयकारणत्वमुक्तम्। न्यायभाष्ये च उपलभ्यमानत्वं यत् संशयकारणत्वमुक्तं सदप्युपलभ्यते असदप्युपलभ्यते इति उपलभ्यमानमिदं सदसद्वेति, यच्चानुपलभ्यमानत्वं सदपि नोपलभ्यते मूलकीलकोदकादि, असदपि नोपलभ्यते गगनारविन्दादिः तथा च पञ्चविधः संशय[3] इति।

न्यायवार्तिकेऽपि यत्कारणभेदेन संशयस्य त्रित्वमुक्तं तदपि न सम्भवति, व्यभिचारेण समानधर्मादीनां त्रयाणां कारणत्वस्यैवासम्भवात्[4]। न हि तृणारणिमणिजन्यवह्नौ वैजात्यवदत्रापि वैजात्यं कल्पनीयम्- संशयत्वावच्छिन्न कार्यं प्रति समानधर्मत्वेनैव कारणतायाः कल्पनात्। यच्च प्रधानविधिकोटित्वप्रधाननिषेधकोटित्वादि वैजात्यमुक्तम्, तदनुगतत्वान्नावच्छेदकम्[5]। तथा च संशयो न त्रिविधः न वा पञ्चविधः किन्त्वेकविध[6] एव। प्रकारान्तरेण संशयस्य द्वैविध्यं सूत्रकृता कणादेन स्वयमेव स्पष्टयति।

ननु जिज्ञासा जनकज्ञानं संशय इति न लक्षणम्, अनध्यवसायेऽपि गतत्त्वात्। संस्काराजनकज्ञानं संशय इत्यपि निर्विकल्पकसाधारणं विशिष्टाज्ञानत्वेन संशयस्यापि संस्कारजनकत्वात्। संशयत्वञ्च जातिरपि न लक्षणं धर्म्यंशे[7] संशयत्वाभावेन तदंशे

---

1. तदेव।
2. उपस्कारटिप्पणी।
3. न्यायभाष्यम्।
4. न्यायवार्तिकम्।
5. तादृशवैजात्यं कार्यतावच्छेदके न भवति सकलकार्याव्यापकत्वात्। उपस्कार टिप्पणी उ. टी. 77
6. न्यासूत्रोपस्कारः पृ. 77
7. वह्न्यंशे संशयात्मकस्यापि पर्वतांशे निश्चयात्मकस्यैव पर्वतो वह्निमान्नवेति संशयस्यस्वीकारात्। उ. टी.–77

तज्जात्यभावात् जातेश्चाव्याप्यवृत्तित्वानभ्युपगमादिति चेत् एकस्मिन् धर्मिणि विरोधिनानाप्रकारकं ज्ञानं संशय[1] इति लक्षणात्।

संशयो द्विविधः बहिर्विषयकः अन्तर्विषयकश्च[2]। बहिर्विषयकोऽपि द्विविधः—दृश्यमानधर्मिकः अदृश्यमानधर्मिकश्च। तत्र दृश्यमानधर्मिको यथा ऊर्ध्वत्व-विशिष्टस्य धर्मिणो दर्शनात् अयं स्थाणुः पुरुषो वा इति। अदृश्यमानधर्मिको यथा—गोगवयादिपिण्डे विषाणमात्रदर्शनात् अयं गौर्गवयो वेति।

वस्तुतस्तत्रापि विषाणधर्मिक एव संदेहो विषाणमिदं गोसम्बन्धि गवयसम्बन्धि वा? विवक्षामात्रात्तु[3] द्वैविध्याभिधानम्। यत्सामान्यं संशये हेतुस्तदनेकत्र दृष्टं संशायकमेकत्र धर्मिणि वा दृष्टं संशयहेतुरित्यत्र प्रथमां विधामाह—"दृष्टञ्च दृष्टवत्"[4]।

दृष्टमूर्ध्वत्वं संशयहेतुः। दृष्टवदिति वति प्रत्ययः तेन दृष्टाभ्यां स्थाणुपुरुषाभ्यां तुल्यं वर्तते पुरोवर्तिनि यदूर्ध्वत्वं तद्दृष्टं संशयहेतुः।

एकधर्मिविषयं यद्दृष्टं तदुदाहरति—"यथा दृष्टमयथादृष्टत्वाच्च[5]" संशय हेतुरित्यर्थः। चकारः समुच्चयार्थः। अयथादृष्टत्वाद्धेतोर्यथादृष्टमपि संशायकम्। यथा—चैत्रो दृष्टः केशवान्, कालान्तरे अयथादृष्टः केशविनाकृतो दृष्टः। क्रमेण तत्रैव चैत्रे वस्त्रावृतमस्तके दृष्टे सति भवति संशयश्चैत्रोऽयं सकेशो निष्केशो वेति। तत्र हि चैत्रत्वं समानो धर्मः संशायकः स च एकत्रैव दृष्ट इत्यभिन्न एव धर्मिणि दृष्टः संशयहेतुः।

उपलभ्यमानत्वं समानमेव धर्मं संशयकारणमाह—"विद्याऽविद्यातश्च संशयः[6]" संशयो हि विद्याऽविद्याभ्यां भवति। यथा—मौहूर्तिकः सम्यगादिशति चन्द्रोपरागादि,

---

1. न्यायसूत्रोपस्कारः सू. सं. 2/2/17
2. वै. सू. उपस्कार—प्रस्तावना सू. सं. 18
3. विषाणमात्रदर्शनोत्तरसंदेहस्य दृश्यमानधर्मिकत्वेऽपि गोवलिवर्दन्यायेन विषाणधर्मिकान्य-दृश्यमानधर्मिकत्वं तदन्यदृश्यमानधर्मिकत्वञ्चेति कौचिद्धर्मावाश्रित्य विभाजकेच्छा-मात्रेण द्विधोक्तिर्बहिर्विषयस्य संशयस्येत्यर्थः।
   —न्यायसूत्रोपस्कारटिप्पणी।
4. वैशे. सू. 2/2/18
5. वै. सू. 2/2/19
6. कणाद सू. 2/2/20

असम्यगपि। तत्र स्वज्ञाने संशयोऽस्य जायते सम्यगादिष्टमसम्यग्वा? यद्वा ज्ञानं हि क्वचिद् विद्या भवति क्वचिच्चाविद्या अप्रमा भवति। तथा च ज्ञायमानत्वात् इदं सद्–असद् वा इति संशयो जायते। पुनः संशयग्रहणमिहापि सामान्यप्रत्यक्षादेव संशयो न तु निमित्तान्तरादिति सूचनार्थम्। तथा च "समानानेकधर्मोपपत्तेर्विप्रतिपत्ते-रुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः[1]" इति गौतमीये लक्षणे उपलब्ध्यनुपलब्ध्यव्यवस्थेत्यस्य पृथगेव संशयकारणत्वं यदुक्तं[2] तन्निरस्तम्।

महर्षि गौतमेन षोडशपदार्थेषु मध्ये प्रमाणप्रमेयानन्तरं संशयस्य गणनां कृत्वा एतस्य पर्याप्तप्रमुखता प्रदत्ता। भगवता वात्स्यायनेन उक्तं यत् संशयः न्यायस्याङ्गभूतः। न्यायञ्च अननुभूते अनिर्णीते च न प्रवर्तते। इत्थं भारतीयनैयायिकानामिदं मतं डेकार्ट सिद्धान्तानुसारमेव यत् दर्शनस्याविर्भावः संशयाज्जायते। भारतेऽपि "वादे-वादे जायते तत्त्वबोधः" इति या धारणा, अस्यां धारणायामपि संशय एव। शुद्धचिन्तन दृष्ट्येयं जिज्ञासापि कथ्यते। इदं नावश्यकं यत् यद्वस्तुविषये संशयः तत्परिणामेऽपि संशयः स्यात्। वस्तुतः संशयस्य सत्ता तावता कालेन भवति यावद्विशेषं नोपलभ्यते। गौतमानुसारेण समानधर्मोपलब्धितः, अनेकधर्मोपलब्धितः, विप्रतिपत्तितः, उपलब्ध्यव्यवस्थातः, अनुपलब्धि अव्यवस्थातश्च विशेषापेक्षा विमर्शः संशयः। तथा च सूत्रम्–"समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः[3]।"

**(1) समानधर्मोपपत्तिमूलकः संशयः**–स्थाणुपुरुषयोः समानं धर्ममारोहपरिहाणौ पश्यन् पूर्वदृष्टञ्च तयोर्विशेषं बुभुत्समानः किंस्विदित्यनन्तरं नावधारयति तदनवधारणं ज्ञानं संशयः। "समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभे[4]" इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्तिका तेन विशेषापेक्षो विमर्शः संशयः।

**(2) अनेकधर्मोपपत्तिमूलकसंशयः**–समानजातीयमसमानजातीयञ्चानेकं तस्यानेकस्य धर्मोपपत्तेः। अस्ति च शब्दे विभागजत्वं विशेषः तस्मिन् द्रव्यं गुणः कर्म चेति संशयः। अन्यतमस्य व्यवस्थापकं धर्मं नोपलभे इति[5]।

---

1. न्या. सू. 1/1/23
2. भाष्यकारेण वात्स्यायनेनोक्तम्।
3. न्या. सू 1/1/23
4. न्या. भा. सू. 1/1/23
5. वात्स्यायनभा. 1/1/23

**(3) विप्रतिपत्तिमूलकः संशयः**—अस्त्यात्मा इत्येकं दर्शनं नास्त्यात्मा इत्यपरम्। न च सद्भावासद्भावौ सहैकत्र सम्भवतः। न चान्यतरसाधको हेतुरुपलभ्यते तत्र तत्त्वानवधारणं संशयः[1]।

**(4) उपलब्ध्यव्यवस्थामूलकः संशयः**—सदप्युदकं तडागादिषूपलभ्यते असदप्युदकं मरीचिषूपलभ्यते[2]। तथा च सदेवोपलभ्यते इति नियमो नास्ति किन्त्वसदपि प्रतीयते यथा शुक्तिरजतम् इत्येषोपलब्ध्यव्यवस्था। अतः क्वचिदुपलभ्यमाने जलादौ सत्वासत्वयोर्व्यवस्थापकस्य प्रमाणस्यानुपलब्धौ सत्वासत्वयोरन्यतरस्य निश्चयासम्भवात् संशयो जायते।

**(5) अनुपलब्ध्यव्यवस्थामूलकः संशयः**—नियमाभावादपि "किं सन्नोपलभ्यते उत असन्नोपलभ्यते[3]" इति संशयो भवति। यथा—अन्तःप्रविष्ट कीलकमूलमुदकं च असदपि नोपलभ्यते यथानुत्पन्नं निरुद्धं मूलकीलकोदकादि तथा असद् एवानुपलब्धिर्भवतीति नियमो नास्ति—किन्तु सतोप्यावृत्तस्यानुपलब्धिर्भवति इत्येषाऽनुपलब्ध्यव्यवस्था ततश्च क्वचिदनुपलभ्यमाने सत्वासत्वयोरन्यतरस्य व्यवस्थापकाप्रमाणानुपलब्धौ निश्चयाभावात् संशयो जायते, यदिदं न प्रतीयते तत् सद्वासद्वा इति।

संशयस्य पञ्चसु भेदेषु अन्तिमौ द्वौ समानधर्मोपपत्तिमूलके संशये[4] एवान्तर्भूतौ इति उद्योतकराणामाशयः। वैशेषिकानुसारेण प्रथमे संशये एव सर्वेषामन्तर्भावः[5]। केशवमिश्रोऽपि अन्तिमयोः द्वयोः संशययोः गणना न कृतवानिति[6]।

## सामान्यस्य स्वरूपम्—

### (क) वैशेषिकमतम्—

न्यायवैशेषिकयोः विचारणीयविषयेषु सामान्यस्यापि एकं वैशिष्टयं स्थानमस्ति। महर्षिकणादेन—"धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां

1. तदेव।
2. न्याय. भा. प्रसन्नपदाटीका।
3. न्यायभाष्यम्।
4. उद्योतकरः।
5. वैशे. सू. 2/2, 17-20
6. तर्कभाषा।

साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निश्रेयसमि"[1] इति सूत्रद्वारेणा सामान्यस्योल्लेखः कृतः। तत्सामान्यस्य रूपे द्वे भवतः। अनुवृत्तिबुद्धिसम्बद्धं सामान्यम्, अनुवृत्ति-व्यावृत्तिरूपोभयबुद्धिसम्बद्धसामान्यञ्च[2]। सूत्रकृता कणादेन न किमपि सामान्यस्य सामान्यलक्षणं विहितम्। कणादमतं स्पष्टतया प्रशस्तपादाचार्येणोक्तं यत् उपर्युक्तसामान्यस्य प्रथमभेदः परसामान्यबोधकः द्वितीयभेदश्च अपरसामान्याभिधः। परसामान्यं सत्ता। अपरं द्रव्यत्वादयः। सामान्याश्रयाणि द्रव्यगुणकर्माणिभवन्ति। द्रव्यत्वं पृथिवीजलादिषु नवद्रव्येषु अनुगतबुद्धेः कारणं किन्तु गुणकर्मणोः भेदबुद्धेरपि कारणमतः तत्सामान्यं सामान्यविशेषोभयरूपम्।

द्रव्यत्वगुणत्वादिसामान्यं द्रव्यगुणादेः भिन्नत्वात् नित्यम्[3]। यदि उभयोरभेदः स्यात्तदा सामान्यस्यापि द्रव्यादिवत् उत्पत्तिनाशौ भवेताम्। द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परश्चान्यत्वम्। प्रत्येकं स्वाश्रयेषु लक्षणविशेषात् विशेषलक्षणा-भावाच्चैकत्वम्।

सामान्यं स्वविषये समवायसम्बन्धेन तिष्ठति। यद्यपि सामान्यनियतदेशत्वात् सर्वत्र उत्पद्यमानस्य स्वविषयगोव्यक्तेः सामान्यं तत्र स्थितेषु अश्वादिष्वपि सम्बद्धं स्यात् तथापि गोत्वजातेः अभिव्यञ्जकसास्नादिरूपअवयवसंस्थानस्य गोरूपव्यक्तावेव नियतत्त्वात् गोत्वजातेः गोव्यक्तावेव समवायः न तु अश्वादिपिण्डे[4]।

**(ख) न्यायमतम्–**

वात्स्यायनानुसारेण यः पदार्थः अनेकव्यक्तिषु एकाकारज्ञानस्य निमित्तो भवति सः सामान्यपदवाच्यः[5]। उत्तरवर्ती ग्रन्थकाराः प्रायः एवमेव लक्षणं सामान्यस्य मन्यन्ते[6]। अयमाशयः यत् यदेकं नित्यमनेकेषु समवेतं भवति तत्सामान्यम्। सामान्यमेव जातिः। अयं गौः अयं गौः इत्याकारिका बुद्धिरेव सामान्यम्। नैयायिकानुसारेण सामान्यस्य उपलब्धिः व्यक्तिरुपलब्धेरधीना। जातिव्यक्त्योरुपलब्धिः सहैव भवति।

---

1. वैशेषिकसूत्रम् 1/1/4
2. सामान्यं विशेष इति बुद्ध्यपेक्षम्–वै. सू. 1/2/3
3. लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम्। अतएव च नित्यत्वम्।
4. यद्यपि अपरिच्छिन्नदेशानि सामान्यानि भवन्ति तथाप्युपलक्षणनियमात् कारणसामग्री नियमाच्च स्वविषय सर्वगतानि। वै. भा. पृ. 282–ढुण्ढिराजशास्त्री।
5. योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम्। न्या. भा. 2/2/68
6. नित्यत्वे सति अनेक समवेतत्त्वम्–सि. मु.। नित्यमनेकानुगतं सामान्यम् तर्कसंग्रहः।

तत्र न कालकृद्भेदः। सामान्यं व्यक्तौ समवायेन तिष्ठति तत्तु अयुतसिद्धयोः द्वयोः पदार्थयोः मध्य एव तिष्ठति। तत्सामान्यस्य न प्रत्यक्षोपलब्धिः यस्याश्रयः इन्द्रियग्राह्यो न भवति। यथा—अणुत्वम्। व्यक्तेरुपलब्धिं विना सामान्यस्योपलब्धिः न सम्भवति[1]। सामान्यं नित्यमतः व्यक्तिरनुपलब्धिकालेऽपि तस्य अस्तित्त्वं भवत्येव। जातिरहितव्यक्तेरुपलब्धिः न भवतीति जयन्तभट्टानामाशयः[2]।

**(ग) बौद्धमतम्—**

सामान्यं संज्ञामात्रमेवेति बौद्धदार्शनिकानां मतम्। तत् न वास्तवमपितु काल्पनिकमेव। ते पदार्थान् क्षणिकं मन्यन्ते अथ च जातेः सत्तापि न स्वीकुर्वन्ति। अनेकेषु घटेषु अयं घटः अयं घटः इत्याकारिकां प्रतीतिं प्रति अपोहः कारणमिति ते ब्रुवन्ति। अपोहश्च तावत् तद्भिन्नभिन्नत्वम्। तेषां मते एकाकारप्रतीतेः अपोह एव कारणं न तु सामान्यम्। विभिन्न गोव्यक्तिषु उपलब्धं यत् समानधर्मं वैशेषिकाः सामान्यमिति कथितवन्तः, बौद्धानां मते तद् "अगोव्यावृत्तिरूप" अपोह एव।

नैयायिकाः वैशेषिकाश्च अपोहवादस्य खण्डनं चक्रुः। ते कथयन्ति—विभिन्नपिण्डेषु यत् एकाकारकं स्फुरणं भवति तद् विधिमुखेन न तु निषेधमुखेन। अतः गोत्वादिधर्मः न अतद्व्यावृत्तिरूपः अपितु भावात्मकः सामान्यरूप एव। एतद्विरुद्धं बौद्धानामयमाशयः यत् गोत्वं न गवि नापि गोभिन्ने। यदि गोत्वं गोत्वानुवृत्तेः कारणं तदा तद् गवि—गोभिन्ने वा तिष्ठति? गोत्वं यदि गवि पूर्वकालादेव वर्तमानं भवति तदा सामान्यरूपेण तस्यास्तित्वं व्यर्थमेव, यदि तद् अङ्गे तिष्ठति तदा अश्वादावपि तस्य प्रवृत्तिःस्यात्। अतः गोत्वं नानुवृत्तेः कारणम्। एतत् तर्कं खण्डयति उद्योतकरः—गोत्वात्पूर्वं न किमपि गोपदवाच्यम्, नापि गोभिन्नपदवाच्यम्। गोत्वयोगात्पूर्वं गोः अस्तित्वमेव नास्ति[3]।

---

1. न व्यक्त्या विना सामान्यस्फुरणं कारणाभावात्। व्यक्तिस्फुरणसामग्रीनिविष्टा हि जातिस्फुरणसामग्री।। न्या. क. पृ. 262
2. यथा रूपाद्यसम्बद्धा न व्यक्तिरूपलभ्यते तथैव जात्यूक्तेति का ते व्यसनसन्ततिः।। न्या.मं.।
3. न च प्रागगोत्वायोगात् वस्तुविद्यते। न चाविद्यमानं गौरित्यगौरिति च शक्यं व्यपदेष्टुम्। यदैव वस्तु तदैव गोत्वेनाभिसम्बद्ध्यत इत्यानापस्पदो विकल्पः। न्या. वा. पृ. 662, डी. एन. शास्त्री, पृ. 528

**(घ) जैनमतम्–**

जैनमते सामान्यस्य सत्ता अस्ति किन्तु तत्स्वरूपविषये जैनवैशेषिकयोः परस्परं मतभेदः दृष्टगोचरो भवति। वैशेषिकमते सामान्यं व्यक्तिभिन्नमस्ति, किन्तु जैनमते न तद्व्यक्तिभिन्नम्। जैनाः सामान्यस्य सत्ता बौद्धवत् नाममात्रमेव नहि मन्यन्ते व्यक्तिष्वनुस्यूतं नित्यसामान्यमपि ते न मन्यन्ते। तेषां नये प्रत्येकस्मिन् पदार्थे सामान्यविशेषौ तिष्ठतः। अतः प्रत्येकपदार्थः अनुगतव्यावृत्तिप्रत्यस्य विषयः भवति। विभिन्नेषु व्यक्तिषु या एकाकारा प्रतीतिः सा सादृश्यस्यास्तित्वकारणेन भवति। सादृश्यास्तित्वमेव सादृश्यसामान्यं तिर्यक्सामान्यं वा उच्यते। अयंभावः यत् सामान्यं व्यक्तिषु वर्तमानः धर्मः किन्तु तत् व्यक्तेः भिन्नं नास्ति[1]।

**(ङ) मीमांसकमतम्–**

**(1) सामान्याकृत्ययोरैक्यम्–**

मीमांसकाः स्वीकुर्वन्ति जातिः, परं जातिव्यक्त्योर्मध्ये समवायः न स्वीकुर्वन्ति। भाट्टमीमांसकाः जातिव्यक्त्योः, गुणगुणिनोर्मध्ये समवाय स्थाने भेदाभेदसिद्धान्तं स्वीकुर्वन्ति। नैयायिकाः जातिव्यक्त्योर्मध्ये समवाय एव स्वीकुर्वन्ति।

भाट्टमीमांसकानुसारेण सामान्यमाकृतिरूपमेव[2]। जातेराशयः आकृतिरेव। कुमारिलभट्टः जातिराकृत्योः सम्बन्धः आन्तरिकः मनुते। आन्तरिकसिद्धान्तमेव स्वाभाविकसम्बन्धः तादात्म्यो वा। जातिव्यक्ती परस्पराश्रितौ। सामान्यविशेषयोः भेदः अभेदश्च विद्यते। एतदसङ्गतिसम्बन्धे भट्टः ब्रवीति यत् यस्य वस्तुनः यादृशः स्वभावः तदुपरि आक्षेपो न सम्भवति[1]।

सामान्याकृत्योः ऐक्यप्रसङ्गे अनेकाः आपत्तयः सन्ति। सामान्यं यद्याकृतिः तदा "वायुत्वं" कथं सामान्यम्? विभिन्न घटस्याकृतिः सर्वथा एका कथमपि न सम्भवति। अथ च अङ्गभङ्गे सति तस्याकृतिरपि परिवर्तिता भवति। अतः नैयायिकानुसारेण आकृतिः भिन्ना सामान्यञ्च भिन्नमेव[4]।

---

1. बी. एन. सिंह–वैशेषिकदर्शन का तुलनात्मक अध्ययन, पृ. 151
2. जातिरेवावृतिं प्राह व्यक्तिर्विज्ञायते तया।
   सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम्।। श्लो. वा. 3
3. श्लो. वा. आकृति 67–74
4. जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरा।।

**(2) सामान्यसादृश्ययोः भेदः–**

केचन तादात्म्यं विहाय सादृश्यमेव सामान्यस्याधारमिति स्वीकुर्वन्ति किन्तु भट्टेभ्यो नेदं रोचते सादृश्यम् सम्बन्धः, सामान्यं न सम्बन्धः। एवञ्च सादृश्यं ययोर्द्वयोर्मध्ये भवति तयोः गुणानां सम्बन्धानाञ्च सह अस्तित्वं पूर्वत एव स्वीकरणीयम्[1] अन्यथा सादृश्यस्य आधारः किं स्यात्?

न्यायवैशेषिकयोरिदं मतं यत् यत्र कुत्रापि समानतायाः प्रतीतिर्भवति, तत्र सर्वत्र जातिः। अनेकेषु घटेषु एतत्प्रतीतेः कारणं घटत्वम्, किन्तु भारतवर्षस्य सर्वस्मिन्नपि जनेषु भारतीयता रूपेण यस्याः समानतायाः प्रतीतिः सा काल्पनिका। तस्याः प्रतीतेः बाह्यजगति अस्तित्वाभावः अतः सा न जातिः अपितु उपाधिरेव। एतद्विपरीतं गोत्वं, घटत्वं, नित्यं सत् तस्य बाह्यजगति अस्तित्वमस्ति।

**(3) सामान्यसमष्ट्योः भेदः–**

वनं वृक्षाणां समष्टिरूपमस्ति किन्तु गौः गोमात्रस्य न समष्टिरूपम् अतः अनयोः परस्परं भेदः विद्यते।

प्रभाकरानुसारेण सामान्यं व्यक्तितः भिन्नं भवति। तस्य प्रत्यक्षज्ञानं भवति[2]। जातिव्यक्त्योर्मध्ये समवायः सम्बन्धः किन्तु सः सम्बन्धः न एकः नापि नित्यः। कुमारिलमतेन अनयोर्मध्ये न समवायः अपितु तादात्म्यसम्बन्धः। वैशेषिकमते समवायः एकः नित्यः सन्नपि न प्रत्यक्षगम्यः किन्तु न्यायनये सः प्रत्यक्षगम्यः अस्ति। ब्राह्मणत्वादि सदृश यत्किञ्चित् सामान्यस्य अप्रत्यक्षत्वेऽपि अन्यस्य उपदेशमुखेनान्यसामान्यस्य प्रत्यक्षः भवतीति[3] जयन्तभट्टानामाशयः।

**(च) वेदान्तमतम्–**

वेदान्तदर्शने विशेषस्य अस्तित्त्वं न स्वीक्रियते। तेषां मते सत्तातिरिक्तं न किमपि वास्तवम्। वेदान्तिनां मते एष आक्षेपः विद्यते यत् यदि विशेषस्य सत्ता न स्वीक्रियेत तदा एकं वस्तु अन्यस्माद् भिन्नमिति कथं साधयितुं शक्यते। एवमेव बौद्धमतेऽपि अयमाक्षेपः भवति। अतः बौद्धानां वेदान्तिनां च मतं स्वीकरणीयं

---

1. उपदेश सहायप्रत्यक्षगम्यत्वात्, न चोपदेशापेक्षणात् तस्य अप्रत्यक्षत्वं भवितुमर्हति गोत्वादि प्रत्यक्षस्यापि सम्बन्धग्रहणकाले तदपेक्षणत्वदर्शनात्। न्या. मं. 1/204
2. सर्वसर्वगता वा स्यात्। न्या. मं. 1/273
3. पिण्डसर्वगताऽपि वा। न्या. मं. 1/273

नास्ति। वस्तुतः सामान्यं विना विशेषस्य विशेषं विना च सामान्यस्य अस्तित्त्वसाधनमसम्भवमेव।

### (2) सामान्यं व्यक्तिश्च–

### (क) सामान्यस्य सर्वगतत्त्वम्–

सामान्यस्याभिव्यक्तिसम्बन्धे मतत्रयं प्रचलितमस्ति। (1) सामान्यं सर्वगतं, सर्वव्यापकञ्चास्ति। अर्थात् सर्वसामान्यस्य सर्वविशेषेषु विद्यमानेऽपि तस्याभिव्यक्तिः स्ववर्गविशेष एव भवति। यथा–गोत्वमश्वेऽपि विद्यते किन्तु गोत्वस्याभिव्यक्तिः गवि एव भवति[1]। (2) सामान्यं सर्वव्यापकं भवति किन्तु सर्वाणि सामान्यानि सर्वेषु विशेषेषु न तिष्ठन्ति। समवायसम्बन्धेन सामान्यं स्ववर्गविशेषे सम्बद्धं भवति। (3) सामान्यं सर्वव्यापकं न भवति तच्च तत्रैव निहितं भवति यत्र तत्सम्बद्धविशेषः भवति[2]।

एषु प्रथमपक्षं खण्डयता उद्योतकरेणोक्तं यत् सर्वाणि सामान्यानि सर्वेषु विशेषेषु न तिष्ठन्ति। सामान्यं हि स्वविषये सर्वत्र तिष्ठति। अतएव तत् सर्वगतं कथ्यते[3]।

### (3) सामान्योपाध्योः भेदः–

विदितमेव प्रायः सामान्यसमानतयोः परस्परं भेदः। समानतायाः कल्पनिकत्वात् सा न जातिः। सा तु उपाधिरेव। उपाधेः रूपस्य सविस्तरं विवरणं न्याय–वैशेषिकग्रन्थे विद्यते। तत्र उदयनाचार्यः वदति यत् निम्नलिखितानां यत्र अभावः तत्रैव जातित्त्वव्यवहारः। तथा हि–

"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधक संग्रहः[4]॥

### (क) व्यक्तेरभेदः–

व्यक्तेः स्वाश्रयस्य अभेदः–भेदाभावः, स्वाश्रयव्यक्तैक्यमित्यर्थः। स्वाश्रयनिष्ठ एकत्वावच्छिन्नप्रतियोगिताकभेदवद् वृत्तित्वाभाववत्त्व[5] त्वस्य जातित्त्वे बाधकम्।

1. व्यक्तिसर्वगतत्त्वेऽपि स्वयूथ्यैः कैश्चिदाश्रिते। न्या. मञ्जरी 1/286।
2. द्रव्यकिरणावली–उदयनाचार्यः।
3. न्या. सि. मु. किरणावली–पृ. 46।
4. न्या. सि.मु. कि. पृ. 46
5. तदेव, पृ. 47।

स्वं-आकाशत्वं, तदाश्रय:—आकाश:, आकाशनिष्ठो य: एकत्वावच्छिन्न गगन-प्रतियोगिताकभेदवद्घटादिनिरूपिताया घटत्वादिनिष्ठवृत्तितया अभाववत्वं गगनत्वे वर्तते तदैव गगनत्वं जातिबाधकमिति।

**(ख) तुल्यत्वम्–**

तुल्यव्यक्तिवृत्तित्वम्—अन्यूनानतिरिक्तव्यक्तिकत्वम्, स्वभिन्नजात्याश्रयव्यक्ति-निष्ठसंख्याऽन्यूनानतिरिक्तसंख्याकव्यक्तिकत्वम्[1]। स्वं—कलशत्वं तद्भिन्नघटत्व-जात्याश्रयव्यक्तयो घटा:, तन्निष्ठसंख्याऽन्यूनानतिरिक्तसंख्याकव्यक्त्य: कलशा: सन्ति, तत्कत्वं कलशत्वे जातिबाधकम्।

**(ग) संकर:–**

परस्परात्यन्ताभावसमानाधिकरणयो: धर्मयोरेकत्र समावेश: संकर:[2]। तथा च स्वाभाववद्वृत्ति—स्वसमानाधिकरणधर्माभाववद्वृत्तित्वं स्वनिष्ठ संकर इति। स्वं—मूर्त्तत्वं तदभाववानाकाशस्तत्र वृत्तिभूतत्त्वं पुन: स्वं-मूर्त्तत्वं तत्समानाधिकरणधर्म: पृथिव्यादौ भूतत्त्वम्, तदभाववन्मनोनिरूपितवृत्तित्वं मूर्तत्वे जातिबाधकम्। तथैव स्वं-भूतत्त्वं तदभाववन्मन: तत्रवृत्तिमूर्त्तत्वम्, पुन: स्वं भूतत्त्वम्, तत्समानाधिकरणधर्म: पृथिव्यादौ मूर्त्तत्वम्, तदभावादाकाशनिरूपितवृत्तित्वं भूतत्त्वे जातिबाधकम्।

**(घ) अनवस्था–**

अप्रामाणिककल्पनासमाप्त्यभावोऽनवस्था[3]। यथा—सकलजातिषु एकं जातित्वम्, तज्जातित्त्व—तदाश्रयजातिषु च पुनर्वैजात्यम्। अत: जातित्त्वं न जाति:।

**(ङ) रूपहानि:–**

विशेषाणां स्वरूपस्य हानि: रूपहानि:[4]। तथाहि—अयं परमाणु: परमाण्वन्तरभिन्न: विशेषात्। इत्येवं परमाणूनां परस्परभेदसाधकतया विशेषपदार्थ: स्वीक्रियते। स च तद्व्यक्तित्त्वेनैव हेतुर्भवति। तद्व्यक्तित्त्वञ्च तादात्म्येन तद्व्यक्तिरेव। यदि तत्र विशेष: जातिस्वीक्रियेत तदा सामान्याश्रयाणां सामान्यरूपेणैव भेदसाधकत्वनियमात्

---

1. न्या. सि. मु. कि. पृ. 48।
2. किरणावली टीका—न्या. सि. मु. पृ. 48।
3. किरणावली—कृष्णवल्लभाचार्य पृ. 49।
4. कारिकावली—का. 8।

विशेषत्वावच्छिन्नतया विशेषस्य हेतुता भवेत् तथा च परमाण्वन्तरेऽपि विशेषत्वावच्छिन्नविशेष्यस्य हेतोः सत्वात् परमाण्वन्तरभेदात्मकसाध्यस्य चाऽभावात् हेतोर्व्यभिचारित्वापत्या विशेषस्य परमाणूनां परस्परव्यावर्त्तकत्वं न भवेत्। तज्ज्ञानस्य विशेषो जातिमानितिज्ञानं प्रति तर्कविधया प्रतिबन्धकत्वम्। तर्कश्च–यदि विशेषो जातिमान् स्यात् तर्हि परमाणुषु परस्परव्यावर्तको न स्यात् इति। एवं विशेषासिद्धेस्तु बाधकतर्कज्ञानविषयत्वात् जातिबाधकत्वम्। तथाहि–अयं परमाणुः परमाण्वन्तरभिन्नः इत्यनुमितिः, सामान्यानाश्रयकिञ्चिल्लिङ्गज्ञानजन्या, सामान्याश्रय- लिङ्गकत्वाभाववत्वे सति अनुमितित्त्वात्। धूमप्रागभावलिङ्गकवह्न्यनुमितिवत् इत्यनुमानात् सामान्याऽनाश्रय यत्किञ्चित् लिङ्गज्ञानजन्यत्वे सिद्धे विशेषो यदि सामान्यवान् स्यात् तदा अनुमितिविषयो न स्यात् इति तर्कस्य मणिमन्त्रादिन्यायेन जातिप्रकारक विशेषः सामान्यवान् इति ज्ञानं प्रति स्वतंत्रप्रतिबन्धकत्वेन अनुमितिविषयत्वाभावरूपाया विशेषासिद्धेः तादृशप्रतिबन्धकतर्कज्ञानविषयतारूपं जातिप्रतिबन्धकत्वमिति।

**(च) असम्बन्धः–**

प्रतियोगितानुयोगितान्यतरसम्बन्धेन समवायाऽभावः असम्बन्धः[1]। समवायप्रतियोगित्व–समवायानुयोगित्वैतदन्यतरत्वावच्छिन्न प्रतियोगिताकाभावत्वमिति। अयं च समवायाभावयोर्जातिमत्वे समवायत्वाभावत्वयोर्जातित्त्वे च बाधकः। बाधकत्वं च अस्य तदभावव्याप्यवत्ताज्ञानमुद्रया। तथाहि अभावः जातित्त्व- जातिमत्वान्यतराभाववान्, व्यतिरेके वा घटवत् इत्यत्र समवायप्रतियोगित्वसमवायानुयोगित्वान्यतराभाववान् अभावः इति परामर्शज्ञानस्य जातित्त्वजातिमत्वान्यतरप्रकारको योऽभावः जातित्त्वजातिमत्वान्यतरवान् इति ज्ञानं तत्प्रतिबन्धकस्य–अभावो–जातित्त्वाजातिमत्वान्यतराभाववान् इति अनुमित्यात्मकज्ञानस्य जनकत्वात् विरोधिज्ञानसामग्रीत्वात् तदभावव्याप्यवत्तानिश्चयत्वाच्च प्रतिबन्धकत्वं सिद्धम्।

उपर्युक्तेषु व्यक्त्यभेदादित्रयं जातित्त्वबाधकम्, अनवस्थारूपहानी जातिबाधिके असम्बन्धस्तु उभय (जातिजातित्त्व) बाधक इति।

**(4) सामान्यस्यभेदाः–**

पर, अपर, परापरभेदेन सामान्यस्य त्रयो भेदाः। परं व्यापकम्, अपरं–व्याप्यं, परापरं–व्याप्यव्यापकञ्च कथ्यते। कारिकावल्यां विश्वनाथेन प्रोक्तम्–

1. न्या.सि.मु.किरणावली–का.सं.– 9।

"सामान्यं द्विविधं प्रोक्तं परं चापरमेव च।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते[1]॥
परभिन्ना च या जातिः सैवापरतयोच्यते।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते[2]॥
व्यापकत्वात् परापि स्याद् व्याप्यत्वादपरापि च[3]॥

नव्यनैयायिकाः सखण्डाखण्डरूपेणापि सामान्यस्य भेदद्वयं निगदितवन्तः। सखण्डसामान्यमनित्यं विनाशी च, अखण्डसामान्यं नित्यमविनाशी च।

**(1) परसामान्यम्–**

यस्याः जातेः क्षेत्रमधिकं सा परजातिः। व्यापकत्वात् सत्तायाः परत्वम्। सा च जातिः द्रव्यगुणकर्मसु विद्यते।

**(2) अपरसामान्यम्–**

परभिन्ना या जातिः सा अपरजातिः। इयमेव व्याप्यजातिरप्युच्यते। सत्ता, द्रव्यत्वादेः भिन्नत्वात् घटत्वादयः अपरसामान्यम्। मधुरत्वाम्लत्वादि जातिरपि अपरजातिः।

**(3) परापरसामान्यम्–**

द्रव्यत्वजातिः सत्तापेक्षया अपरा घटत्वाद्यपेक्षया च पराजातिः। अतः घटत्वं परापरसामान्यम्।

वैशेषिकसूत्रे, किरणावल्यां च परापरभेदेन द्विविधमेव सामान्यम्, किन्तु जगदीशमते परापरनामकं तृतीयमपि सामान्यं भवति।

**(ख) सम्बन्धदृष्ट्या सामान्यम्–**

**(1) अखण्डसामान्यम्–**

यस्य सामान्यस्य पदार्थेन सह साक्षात् सम्बन्धः भवति तत् अखण्डसामान्यम्।

---

1. कारिकावली–का. 8।
2. सामान्यं द्विविधम् अखण्डं सखण्डं चेति। तत्र अखण्डं साक्षात्संबद्धं सामान्यं सामान्यं जातिः इत्युच्यते। यथा–सत्ता, द्रव्यत्वकर्मत्वादि। सखण्डं तु परम्परया सम्बद्धं सामान्यम् उपाधिरित्युच्यते। यथा–प्रमेयत्वदण्डित्वादि च।
   –दीधि. 2, पृ. 81 कारिकावली का–9।
3. कारिकावली–का. 10।

यथा–द्रव्यत्वं, कर्मत्वम्।

**(2) सखण्डसामान्यम्–**

यो हि धर्मः कस्मिंश्चित् पदार्थे परम्परया तिष्ठति तत्सखण्डसामान्यम्। यथा–दण्डित्वम्[1]।

**(5) सामान्यस्य सम्बन्धे ग्रीकदार्शनिकानां मतम्–**

पाश्चात्यदर्शने वस्तुवादस्य अर्थद्वयमस्ति। एकस्तावत् व्यक्तौ सदपि सामान्यस्य स्वतंत्रमस्तित्त्वमस्ति। अपरश्च बाह्यवस्तूनां स्वतंत्ररूपेण स्वकीया सत्ता विद्यते। प्रथमेऽर्थे वस्तुवादस्य नामवादेन संघर्षः द्वितीयेऽर्थे च आदर्शवादेन सह। अयं सिद्धान्तः धारणायामस्यामाधारितो विद्यते यत् सामान्यस्य पृथक् सत्ता विद्यते। सामान्यञ्च तद्व्यक्तिभिन्नमेव यस्मिन् सामान्यं तिष्ठति। सामान्यं भिन्नं व्यक्तिश्च भिन्न इति।

सामान्यस्य सम्बन्धे प्लेटो, विलियम ओकम, अरस्तु प्रभृति पाश्चात्यविदुषां विचारः कीदृश इति प्रस्तूयते।

**(क) प्लेटोमतम्–**

प्लेटो मतानुसारेण सामान्यस्य स्वतंत्रसत्ता विद्यते। यथा संसारे अनेकानि सुन्दराणि वस्तूनि सन्ति। तेषु सर्वेषु यत्सामान्यविज्ञानं विद्यते तत्सर्ववस्तुभिन्नम्। तदनुसारेण सामान्यस्य ज्ञानमिन्द्रियद्वारा न भवति। सामान्यं सारगुणः। अयञ्च वस्तुषु साम्यग्रहणेन वैषम्यपरित्यागेन च ज्ञायते। सामान्यं नित्यं व्यक्तिश्चानित्या इति।

**(ख) विलियम ओकममतम्–**

एतेषां मतं प्लेटोमतभिन्नम्। ओकममतानुसारेण विशेष एव सत्। अस्माकं ज्ञानं तत्रैवाधारितम्। सामान्यञ्च कल्पनामात्रमेव। ओकममहोदयस्य एतन्मतं सामान्यविघटनार्थं क्षुरिकातुल्यम्।

**(ग) अरस्तूमतम्–**

अरस्तू महोदयस्य जन्म ओकम कालात् पूर्वमेव अभवत्। प्लेटोमहोदयस्य वस्तुवादापेक्षया ओकममहोदयस्य च संज्ञावादापेक्षया च अरस्तोः विचारः मध्यमार्गी अस्ति। प्लेटोमतेन सामान्यं विशेषस्य कारणमस्ति इति। ओकममहोदयश्च विशेष

1. श्लोकवार्तिकम्।

एव सामान्यस्य कारणमिति स्वीकृतवान् किन्तु अरस्तू मतेन सामान्यविशेषौ परस्पर सापेक्षौ। अरस्तोराशयः यत् सामान्यं व्यक्तिनिष्ठं भवति। तस्य सत्ता व्यक्तिसापेक्ष' एव।

## लौकिकालौकिकसंसर्गस्वरूपविवेचनम्–

अत्र केशवमिश्रः अवादीत्–करणं त्रिविधम् (1) इन्द्रियम्, (2) इन्द्रियार्थसन्निकर्षः (3) ज्ञानञ्च। यदा इन्द्रियं करणं भवति तदा इन्द्रियार्थसन्निकर्षः अवान्तरव्यापारः निर्विकल्पकं ज्ञानञ्च फलम्। यदा इन्द्रियार्थसन्निकर्षः करणं तदा निर्विकल्पकज्ञानमवान्तरव्यापारः, सविकल्पकज्ञानञ्च फलं भवति, यदा च निर्विकल्पकज्ञानं करणं तदा सविकल्पकज्ञानमवान्तरव्यापारः, हानोपादानापेक्षाबुद्धिश्च फलं भवति। इत्थमिन्द्रियार्थसन्निकर्षः करणं भवेत् अवान्तरव्यापारो वा भवेत्, प्रत्यक्षे इन्द्रियार्थसन्निकर्षः आवश्यक एव इति प्राचीननैयायिकानामाशयः।

इतः पूर्वं विचारणीयं यत् किं नाम निर्विकल्पकं किञ्च सविकल्पकमिति। निर्गतो विकल्पो विशेषणविशेष्यभावः यस्मात् तद् निर्विकल्पकम्, अर्थात् यस्मिन् ज्ञाने विशेषणविशेष्यभावो न भवति तन्निर्विकल्पकमिति। तच्च निर्विकल्पकज्ञानमतीन्द्रियमिन्द्रियाऽग्राह्यमिति। विषयता त्रिधा भवति–विशेष्यताख्या, विशेषणताख्या संसर्गताख्या च। एतत्त्रिविधविषयतायाः अतिरिक्तम् एकं चतुर्थविषयतानिरूपकं यज्ज्ञानं तदेव निर्विकल्पकम्। यथा–किञ्चिदिदमिति। एतादृशनिर्विकल्पकज्ञानस्य वर्णनं कुमारिलभट्टपादाः श्लोकवार्तिके उपस्थापितवन्तः। तथा हि–

**अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्।**
**बालमूकादि विज्ञानसदृशं शुद्धवस्तुजम्[1]॥**

विशेषण–विशेष्यभावानुल्लेखि एव शुद्धवस्तुजमित्यस्यार्थः। घ्राणज, रासन, चाक्षुष, श्रोत्रज, स्पार्शन, मानसं च प्रत्यक्षं भवति। एतत्प्रत्यक्षं प्रति क्वचित् साक्षात् सम्बन्धेन क्वचिच्च परम्परासम्बन्धेन महत्वं कारणं भवति। प्रत्यक्षं द्विविधम्–"अयं घटः" इत्याकारकं सविकल्पकज्ञानात्मकम्, एवञ्च सविकल्पकज्ञानात् पूर्वम् "इदं किञ्चिद्" इत्याकारकं निर्विकल्पकज्ञानात्मकम्। निर्विकल्पकज्ञानस्य सत्ता सविकल्पकज्ञानात् पूर्वमवश्यमेव मन्तव्या।

घटेन सह चक्षुरिन्द्रियसंयोगसम्बन्धानन्तरं "किञ्चिद्" इदमिति ज्ञानं जायते।

1. तार्किकरक्षा

अत्र घटत्वं घटे स्वतंत्ररूपेण भासते। तयोर्मध्ये न कोऽपि सम्बन्धः। अतएव घटत्वघटौ इत्याकारकं ज्ञानं वैशिष्ट्यानवगाहि ज्ञानं कथ्यते। तत्र विशेष्यविशेषण-भावसम्बन्धस्यासत्वे निर्विकल्पकज्ञानस्य साक्षात्कारोऽपि न भवति[1]। अत एव तज्ज्ञानं प्रत्यक्षायोग्यमतीन्द्रियञ्च भवति। तदनन्तरम् "अयं घटः" (घटत्वविशिष्टो घटः) इत्याकारकं व्यवसायात्मकं ज्ञानं भवति, तत्सविकल्पात्मकं ज्ञानम्। सविकल्पात्मकज्ञानानन्तरं "घटमहं जानामि" (घटविषयकज्ञानवानहम्) इत्याकारकमनुव्यवसायात्मकं ज्ञानं भवति। इदमेव विशिष्टवैशिष्ट्यावगाहिज्ञानं कथ्यते।

सविकल्पकनिर्विकल्पकप्रत्यक्षज्ञानस्य स्वरूपमित्थमस्ति–

**"नामादिभिर्विशिष्टार्थं विषयं सविकल्पकम्।**
**अविशिष्टार्थविषयम्प्रत्यक्षं निर्विकल्पकम्[2]।।**

सांख्यमतानुसारेण "आलोचनात्मकज्ञानविशेष" एव निर्विकल्पकज्ञानं भवति।

**(क) बौद्धमतम्–**

बौद्धमतानुसारेण विशेषणहीनं ज्ञानमेव निर्विकल्पकम्। एतेषां मतानुसारेण पदार्थो द्विविधः–स्वलक्षणात्मकः सामान्यलक्षणात्मकश्च। स्वलक्षणं तावत् स्वजातीयविजातीयभिन्नस्वरूपात्मकम्। अर्थात् यद्वस्तु परमार्थसत् तदेव स्वलक्षणात्मकम्। बौद्धमते सविकल्पकज्ञाने असद्विशेषणविशेष्यसम्बन्धानां विवरणं भवति अतः तज्ज्ञानं न यथार्थज्ञानं भवितुमर्हति। निर्विकल्पकज्ञाने शुद्धवस्तुमात्रमेव विषयो भवति अतः निर्विकल्पकज्ञानमेव यथार्थज्ञानम्।

सर्वदर्शनसंग्रहे यद्यपि इदमुल्लिखितमस्ति यत् वैशेषिकसूत्रे प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदौ स्तः तथापि तत्र स्पष्टतया अस्य भेदस्य उल्लेखः नास्ति।

प्रत्यक्षस्य मुख्यतः द्वौ भेदौ स्तः। निर्विकल्पकः, सविकल्पकश्च न्याय-वैशेषिक, मीमांसादर्शने च एतद्भेदद्वयं स्वीकृतम्। बौद्धाः निर्विकल्पकस्यैव प्रत्यक्षं स्वीकुर्वन्ति, जैनाश्च सविकल्पकस्यैव। सांख्या उभयं स्वीकुर्वन्ति। अद्वैतवेदान्तिनः निर्विकल्पकमेवामनन्ति, माध्वाः वल्लभमतानुयायिनश्च सविकल्पकमेव स्वीकुर्वन्ति।

1. ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते।
2. अदृष्टसाक्षात्कारिप्रमाजनकसामग्री जनितं प्रत्यक्षम्। सां. सू. पृ. 1–89।

## (ख) चार्वाकमतम्–

चार्वाकदर्शने इन्द्रियप्रत्यक्षमेव ज्ञानसाधनम् अन्यप्रमाणस्य आवश्यकता तत्र नास्ति। प्रत्यक्षभेदस्य एतद्दर्शने चर्चा नास्ति।

## (ग) जैनमतम्–

बौद्धदर्शने निर्विकल्पकस्यैव सत्ता स्वीकृता किन्तु जैनदर्शने सविकल्पकप्रत्यक्षमेव स्वीकृतमस्ति। आचार्य हेमचन्द्रः "निर्विकल्पकं नाम अनध्यवसायः" इति स्वीकृत्य प्रत्यक्षकोटौ निर्विकल्पकं न स्वीचकार। "आचार्य अकलंक" मतानुसारेण सविकल्पकज्ञानमेव प्रामाणिकम्। सविकल्पकज्ञाने संस्काराणामुद्बोधनं भवति निर्विकल्पके च संस्काराणामुदयो न भवति। अतः सविकल्पकज्ञानमेव प्रामाणिकम्।

## (घ) सांख्ययोगमतम्–

सांख्याचार्यः अनिरुद्धः बौद्धसिद्धान्तमालोचितवान्। एतन्मते प्रत्यक्षे पदार्थस्य साक्षात् ग्रहणं भवति। इदं ग्रहणं निर्विकल्पकं सविकल्पकं वा सम्भवति। निर्विकल्पके पदार्थस्य नामजात्योः ग्रहणं न भवति सविकल्पके च अतीतस्मृत्या पदार्थस्य नामगुणादेः स्मरणं भवति[1]।

वाचस्पतिमिश्रस्य मतमिदं यत् निर्विकल्पकप्रत्यक्षे विशेष्य–विशेषण रहित शुद्धवस्तुनः ज्ञानं भवति सविकल्पके च पदार्थस्य निर्णयात्मकज्ञानं भवति। निर्विकल्पकप्रत्यक्षं बाह्येन्द्रियस्य कार्यमस्ति, सविकल्पकप्रत्यक्षश्च मनसः कार्यमस्ति। मनसः कार्यं संकल्पविकल्पात्मकं भवति[2]।

विज्ञानभिक्षोः मतं यत् सविकल्पकनिर्विकल्पकज्ञाने बाह्येन्द्रियद्वारा भवतः। संकल्पात्मकं विकल्पात्मकं कार्यमपि इन्द्रियद्वारा एव भवति। भगवता व्यासेनापि सविकल्पकज्ञानस्य इन्द्रियजन्यता स्थापिता[3]।

---

1. सांख्यतत्त्वकौमुदी–27।
2. क्रमशः क्रमशश्चेन्द्रियवृत्तिः, सां.सू. 2/32।
   कश्चित्तु निर्विकल्पकज्ञानमेवालोचनमिन्द्रियजन्यं च भवति, सविकल्पकं तु मनोमात्रजन्यमिति–श्लोकमाह। तन्न, योगभाष्ये व्यासदेवैर्विशिष्टानस्याप्यैन्द्रियकत्वस्य व्यवस्थापितत्त्वात्, इन्द्रियैर्विशिष्टाने बाधकाभावाच्च। सां. भा. 2/32।
3. निर्विकल्कमनेकाकारं वस्तु संमुग्धं गृह्णाति, सविकल्पकं तु एकाकारं जात्यादिकं विविच्य विषयीकरोति। शा0 दी0 पृ0 114।

**(ङ) मीमांसकमतम्–**

मीमांसकाः प्रत्यक्षस्य सविकल्पकनिर्विकल्पकभेदौ स्वीकुर्वन्ति। कुमारिलमतानुसारेण निर्विकल्पके सर्वेषां तत्त्वानां ज्ञानमभेदात्मकरूपेण भवति। पार्थसारथिमिश्रानुसारेण निर्विकल्पके पदार्थस्य तद्गुणस्य च भेदरहितं ज्ञानं भवति सविकल्पके च पदार्थेन सह जाति, द्रव्य, गुण, क्रियायाश्च ग्रहणं भवति।[1]

प्रभाकरस्य मतमिदं यत् निर्विकल्पकप्रत्यक्षे सामान्यविशेषाभ्यां युक्तस्य शुद्धवस्तुनः स्वरूपमात्रस्य ग्रहणं भवति।[2]

गागाभट्टस्य अभिप्रायोऽयं यत् निर्विकल्पके पदार्थस्य तद्विशेषतायाश्च परस्परसम्बद्धरूपं दृष्टिगोचरं न भवति। इयमेका मनोवैज्ञानिकी प्रक्रिया एव।[3]

**(च) वेदान्तमतम्–**

अद्वैतवेदान्तिनां मते निर्विकल्पकः विषयस्य साधारणं बोधं कारयति। स च सविकल्पकस्य पूर्वावस्था विद्यते। वेदान्तपरिभाषायां निर्विकल्पकस्य संसर्गावगाहित्वेन सविकल्पकस्य च वैशिष्ट्यावगाहिज्ञानत्वेन बोधो भवति।[4]

आचार्यशंकरमतानुसारेण अखण्डवाक्यार्थत्वेन एतादृशं वाक्यज्ञानं निर्विकल्पकमेव कथ्यते। किन्तु महादेवानन्दसरस्वती एतन्मतं खण्डयति। तेषां मते सविकल्पकः निर्विकल्पकात् नोत्पद्यते। शाब्दिकानामपि प्रायः इदमेव मतम्।[5]

रामानुजाचार्यः-शंकर, मीमांसक, न्याय-वैशेषिकानां मतं खण्डितवान्। तेषामिदं मतं यत् निर्विकल्पके महासामान्यसत्तायाः ग्रहणं नास्ति, नैवायं निःसम्बन्धात्मकः

---

1. निर्विकल्पकेन सामान्यविशेषौ द्वे वस्तुनी प्रतिपाद्यभावेनापि तयोर्भेदौ ग्रहीतुं न शक्यते, समाहितमनस्को विषयान्तरानुसन्धानशून्य इन्द्रियसंयुक्तवस्तुसाक्षादुपलभ्यत इति स्वसंविदेवात्र प्रमाणम्। द्र०प०प्र० 54। वस्त्वन्तरानुसंधानशून्यता सामान्यविशेषरूपता न प्रतीयते। प्र० पं० पृ० 55 सविकल्पकस्य गृहीतग्राहित्वेऽपि धारावाहिकन्यायेन प्रामाण्यं वेदितव्यम्। प्र० पं० पृ० 65।
2. भाट्टचिन्तामणि, पृ० 2
3. तच्च प्रत्यक्षं द्विविधम्-सविकल्पकनिर्विकल्पकभेदात्। तत्र सविकल्पकं वैशिष्ट्वगाहिज्ञानम् यथा घटमहंजानामीत्यादि ज्ञानम्।
4. निर्विकल्पकं तु संसर्गावगाहिज्ञानम्, यूथा सोऽयं देवदत्तः, तत्त्वमसीत्यादिवाक्य-जन्यम्-वेदान्तपरिभाषा, प्रत्यक्षपरिच्छेदः। पृ० 18
5. विशेषणसन्निकर्षाद्विशिष्टज्ञानोपपत्तेः। तत्त्वानुसंधान, अद्वैतचिन्ताकौस्तुभ।

प्रत्ययः।[1] वेङ्कटनाथः रामानुजमतस्य सविस्तरं व्याख्यां चकार। तेषां मते निर्विकल्पकप्रत्यक्षः प्रत्यभिज्ञारहितः, सविकल्पकश्च प्रत्यभिज्ञायुक्तः भवति।[2]

वल्लभाचार्यानुयायी पुरुषोत्तमः अवादीत् यत् सर्वज्ञानं सविकल्पकमेव तच्च निश्चयात्मकं भवति। तत्र पदार्थस्य तद्गुणस्य च परस्परसम्बन्धः दृष्टिगोचरो भवति।[3] सविकल्पकस्य द्वौ भेदौ–विशिष्टबुद्धिः, समूहालम्बनबुद्धिश्च।

## (छ) शाब्दिकमतम्–

एतेषां मते निर्विकल्पकस्य प्रत्यक्षो न भवति। आचार्यभर्तृहरिणा उक्तं यत् कस्यापि पदार्थस्य बोधः तन्नाम्ना सह भवति। व्यावहारिकं कार्यं सविकल्पकप्रत्यक्षद्वारैव भवति, अतः निर्विकल्पकस्य पूर्वसत्तायाः आवश्यकता नास्ति।[4]

## (ज) वैशेषिकमतम्–

वैशेषिकमतानुसारेण निर्विकल्पकप्रत्यक्षे पदार्थस्य सामान्य-विशिष्टगुणानां साक्षात्कारो भवति किन्तु उभयोः भेदः नास्ति। सविकल्पकप्रत्यक्षे च उभयोः भेद स्पष्ट एव। अथ च पदार्थस्य निश्चयात्मकज्ञानं भवति। प्रशस्तपादानामाशयः यत् यदा इन्द्रियपदार्थयोः सन्निकर्षो भवति तदा पदार्थस्वरूपस्यालोचनमात्रं भवति। इयं प्रत्यक्षस्य प्रारम्भिकी अवस्था भवति। अत्र पदार्थस्य सामान्यविशिष्टगुणस्य भेदबोधो न भवति। इदं न कस्यापि पूर्वज्ञानस्य परिणामभूतम्।[5]

श्रीधरमतानुसारेणापि निर्विकल्पके पदार्थस्य स्वरूपमात्रस्यैव ज्ञानं भवति।[6]

---

1. निर्विकल्पकं नाम केनचित् विशेषणवियुक्तस्य ग्रहणं न सर्वविशेषरहितस्य। –रा० भा० 1/1/1
2. सत्प्रत्यवमर्शप्रत्यक्षं सविकल्पकं तद्रहितं प्रत्यक्षं निर्विकल्पकम्। न्या० परि० श० पृ० 77।
3. प्रस्थानरत्नाकर, 1, पृ० 9
4. न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
   अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।। वा०प० 1/123
   व्यवसायात्मकत्वेन सर्वस्य व्यवहारयोग्यत्वात्। न्या०क० 189
5. सामान्यविशेषज्ञानोत्पत्तापावविभक्तमालोचनमात्रं प्रत्यक्षं प्रमाणम्। अस्मिन्नान्यत् प्रमाणान्तरमस्ति अकलरूपत्वात्। प्र०पा०भा०पृ० 160
6. विशिष्टज्ञाने विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयसंसर्गग्रहस्य कारणतावधारणात्, न्या.कन्दली।

सविकल्पकज्ञानं त्रिभिर्कारणैरुत्पद्यते। (क) गुणस्य निर्विकल्पकप्रत्यक्षेण, (ख) पदार्थ इन्द्रियसन्निकर्षेण, (ग) विशेष्य-विशेषण सम्बन्धेन च। अयमेव वैशेषिकाणामभिप्रायः। अतएव न्याय-वैशेषिक मतानुसारेण निर्विकल्पक सविकल्पकयोः भेदः प्रामाणिक एव।

### (झ) न्यायमतम्

निर्विकल्पकसविकल्पकभेदस्योल्लेखः यद्यपि न्यायसूत्रे भाष्ये च नोपलभ्यते, वार्तिकग्रन्थात् पूर्वं प्रशस्तपादभाष्ये च "आपत्तितस्वरूपालोचनमात्रम्" "स्वरूपालोचनमात्रं प्रत्यक्षं प्रमाणम्" "आलोचनमात्रं प्रत्यक्षं प्रमाणम्" इत्यादि वाक्यानामर्थः निर्विकल्पकप्रत्यक्षमेव परवर्ती टीकाकृद्भिः स्वीकृतम् किन्तु तत्र प्रत्यक्षस्य उक्तप्रभेदद्वयस्य निरूपणं नास्ति।

वार्त्तिककारः दिङ्नागमतमालोचयता स्पष्टरूपेण प्रत्यक्षस्य द्वैविध्यतायाः प्रतिपादनं चकार।[1] तात्पर्यटीकाकृता प्रत्यक्षसूत्रे प्रयुक्तव्यवसायात्मकपदेन सविकल्पकमव्यपदेश्यपदेन च निर्विकल्पकमर्थं प्रतिपादितम्।[2] ध्यातव्यमिदं यत् मीमांसकः कुमारिलभट्टः निर्विकल्पकसविकल्पकयोः चर्चा कृतवानासीत्।[3]

जयन्तभट्टोऽवादीत् यत् प्रत्यक्षस्य द्वावपिभेदौ (सविकल्पकनिर्विकल्पकौ) प्रामाणिकौ। उभयोः परस्परभेदस्तु-वस्तुस्वरूपमात्रावभासकं निर्विकल्पकं यथा-प्रथमाक्षिसन्निपातजं ज्ञानम्, सविकल्पकं तु तद्भिन्नम्।[4] वेदान्तिनां मतस्य "निर्विकल्पकस्य विषयः महासामान्यसत्ताऽस्ति" खण्डनं कुर्वता जयन्तभट्टेन प्रोक्तं यन्निर्विकल्पकस्य विषयः मात्र महासामान्यसत्ता नास्ति।[5]

प्राचीन नैयायिकः भासर्वज्ञः अवादीत् यत् निर्विकल्पकं वस्तुस्वरूपमात्रावभासकं भवति।[6] तन्मतेन सविकल्पकप्रत्यक्षे पदार्थस्य द्रव्य, गुण, जातेरपि बोधो

---

1. एवं ज्ञानमपि सामान्यविशेषाकारवत् तस्य विशेषाकारेणनाभिधानं सामान्याकारेण त्वभिधानमेव। यदि च विशेषाकारेणानभिधानं यत् तल्लक्षणं प्रत्यक्षस्य न केवल प्रत्यक्षस्य त्रैलोक्यस्यैतल्लक्षणमिति। न्या0वा0 1/1/4
2. ता. टी. 1/1/4
3. श्लो.वा. प्र.सू. 12-13
4. न्या.म.- पृ0 99
5. न्या.म.पृ. 98, महासामान्यसत्ता, न्या.म.पृ. 98-99
6. न्यायसारः।

भवति। वरदराजस्यापि अयमेवाभिप्रायः।[1]

गङ्गेशोपाध्यायमतेन निर्विकल्पकप्रत्यक्षे पदार्थस्यासम्बद्धात्मकग्रहणं भवति। निर्विकल्पकज्ञानं न प्रमा नैवाप्रमा शब्देन कथयितुं शक्यते। प्रमात्वाप्रमात्वे प्रकारताघटितज्ञाने एव तिष्ठतः, निर्विकल्पकज्ञानं तु प्रकारताशून्यं भवति अतः इदं न प्रमा नैवाप्रमा, अतः उभाभ्यां विलक्षणमेव।

विभिन्नदर्शनानां दार्शनिकानां मते सविकल्पकनिर्विकल्पकयोः व्याख्यानानन्तरं सविकल्पकप्रत्यक्षज्ञानमूलकः इन्द्रियार्थसन्निकर्षः कतिविधः इति जिज्ञासायां समाधीयते। स च सन्निकर्षः लौकिकालौकिकभेदेन द्विविधः। तत्र लौकिकसन्निकर्षः (क) संयोगः, (ख) संयुक्तसमवायः (ग) संयुक्तसमवेतसमवायः (4) समवायः (ङ) समवेतसमवायः (च) विशेषणविशेष्यभावश्चेति षड्विधः।

तथाचोक्तं कारिकावल्याम्–

विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः।
द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः॥[2]
द्रव्येषु समवेतानां तथा तत्समवायतः।
तत्रापि समवेतानां शब्दस्य समवायतः॥[3]
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः।
प्रत्यक्षं समवायस्य विशेषणतया भवेत्।[4]
विशेषणतया तद्वद भावानां ग्रहो भवेत्।

लौकिकसन्निकर्षः–

(क) संयोगः–

"चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः[5] इति अन्नंभट्टपादाः। द्रव्यप्रत्यक्षे सर्वत्र संयोगः सन्निकर्षः। आत्मा मनसा संयुज्यते, मनः इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते। द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति

---

1. ता० र०, पृ० 60
2. कारिकावली–का० 59
3. कारिकावली–का० 60
4. कारिकावली–का० 61
5. तर्कसंग्रहः।

चक्षुः संयोगः कारणम्, तादृश सम्बन्धेन त्वाच् प्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयोगः कारणं भवति।

केषाञ्चिन्मतमस्ति यत् संयोगसम्बन्धः द्विविधः एकः युतसिद्धः अपरः अयुतसिद्धश्च। स च संयोगः द्रव्ययोरेव भवति।

## (ख) संयुक्तसमवायः–

घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः।[1] तथा च द्रव्यसमवेत चाक्षुषत्वाचमानसरासनघ्राणजेषु संयुक्तसमवाय एव सन्निकर्षः। उदाहरणं यथा–घटरूपस्य प्रत्यक्षे संयुक्तसमवायः सन्निकर्षः। चक्षुरिन्द्रियं घटेन सह संयुनक्ति तत्र रूपस्य समवायात्। अतः चक्षुरिन्द्रियेण सह नीलादिरूपस्य संयुक्तसमवायः सन्निकर्षः। अयं प्रत्यक्षः द्वाभ्यां सम्बन्धाभ्यां जायते। प्रथमः चक्षुघटयोः मध्ये द्वितीयश्च घटरूपयोर्मध्ये।

## (ग) संयुक्तसमवेतसमवायः–

रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः।[2] तथा च द्रव्यसमवेतसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसेषु संयुक्तसमवेतसमवायः सन्निकर्षः।

अत्रेयमाशंका यत्–घटप्रत्यक्षे–चक्षुः संयुक्ता कपालिका, तत्र समवेतं कपालम् तत्र समवेतो घटः इत्येवं कृत्वा, अथ च घटरूपप्रत्यक्षे–चक्षुः संयुक्तं कपालं तत्र समवेतो घटः तत्र समवेतं रूपमिति कृत्वा समन्वयं विधाय घटादिप्रत्यक्षे घटादिरूपप्रत्यक्षे च चक्षुः संयुक्तसमवेतसमवायेनैव निर्वाहे संयोगः संयुक्तसमवायश्चेत्युभौ नाङ्गीकार्यौ इति चेन्न, आत्मनः अवयवसमवेतत्त्वाभावेन मनः संयुक्तः कपालिकास्थापन्न कपालस्थानापन्नश्च कश्चिदवयव एव नास्ति अतः मनसः आत्मना सह संयुक्तसमवाय विरहात् सुतरां संयुक्तसमवेतसमवायस्य अप्रसिद्धिः, तथा च आत्मतद्गुणादेरप्रत्यक्षत्वं स्यात् अतः संयोगसंयुक्तसमवायौ स्वीकार्यौ।

## (घ) समवायः–

श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः।[3] स च समवायः नित्यः। दूरस्थशब्दस्य प्रत्यक्षस्तु वीचीतरंगन्यायेन, कदम्बमुकुलन्यायेन च भवति। जलमध्ये पाषाणादिनिक्षेपात् एको वीचीतरङ्गस्ततो द्वितीयः ततस्तृतीयः इत्येवं शब्दा अपि

1. तर्कसंग्रहः।
2. तदेव।
3. तर्कसंग्रहः।

परितः उत्पद्यन्ते, कदम्बमुकुले प्रथमेकञ्चक्रं ततो द्वितीयं ततस्तृतीयं क्रमशो जायते तद्वत् प्रथमं भेरी दण्डसंयोगेनैकः शब्दस्ततोऽन्ये शब्दास्ततो दशसु दिक्षु शब्दाः उत्पद्यन्ते। शब्दसाक्षात्कारे कथं समवाय इति जिज्ञासायां वदति-कर्णविवरवर्त्याकाशस्य श्रौत्रत्वात् शब्दस्य च आकाशगुणत्वात् गुणगुणिनोश्च समवायात्। एवञ्च अवयवावयविनोर्गुणगुणिनोः जातिव्यक्त्योः विशेषनित्यद्रव्ययोश्च समवायः। तथा चोक्तं कारिकावल्याम्–

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।**
**तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः॥**[1]

## (ङ) समवेतसमवायः–

शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः। आत्मनो मानसप्रत्यक्षे महत्परिमाणस्य कारणत्वात् प्राक् ''पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्''[2] इति आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वादित्यनेन दर्शिता किन्तु कार्यकारणभाव-योर्मध्ये महत्परिमाणस्य निवेशनस्य प्रयोजनानुपलम्भात् महत्परिमाणमनिवेश्यैव कार्यकारणभावं वदति–आत्मवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति केवलमनः संयोगः कारणम्। आत्मसमवेतज्ञानादिप्रत्यक्षं प्रति मनः संयुक्तसमवायः कारणम्, आत्मसमवेतसमवेतज्ञानत्वादिप्रत्यक्षं प्रति मनः संयुक्तसमवेतसमवायः कारणं भवति।

## (च) विशेषणविशेष्यभावः सन्निकर्षः–

अभाव प्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः।[3] विशेषणभावः विशेष्य-भावश्चेति-विशेषणविशेष्यभावः। इन्द्रियसम्बद्धविशेषणत्वमिन्द्रियसम्बद्धविशेष्यत्वमिति। यथा-''भूतले घटाभावः'' इत्यत्र भूतलं विशेषणम्, घटाभावो विशेष्यम्। षट्सु सन्निकर्षेषु विशेषणता बहुविधा भवति। यथा-द्रव्यवृत्यभावप्रत्यक्षे इन्द्रियसंयुक्त-विशेषणता, द्रव्यसमवेतरूपादिवृत्तेर्घटाभावस्य प्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता, द्रव्यसमवेतसमवेतरूपत्वादिवृत्तेर्घटाभावस्य प्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता, शब्दे रूपाभावप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतविशेषणता, शब्दवृत्तिर्यो रूपाभावस्तत्र यः क्रियाभावः तत्प्रत्यक्षे श्रोत्रसमवेतविशेषणविशेषणता इति बहवः सन्निकर्षाः भवन्ति।

---

1. कारिकावली-का0 सं0 11
2. कारिका0 का0 15
3. तर्कसंग्रहः।

**(2) अलौकिकसन्निकर्षः–**

अलौकिकप्रत्यक्षस्य त्रयो भेदाः भवन्ति-(क) सामान्यलक्षणः (ख) ज्ञानलक्षणः (ग) योगजश्चेति। तथाचोक्तं कारिकायाम्–

**"अलौकिकस्तु व्यापारः त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा।।[1]**

**(क) सामान्यलक्षणः**

सामान्यं जातिः घटादिव्यक्तिश्च, तदेव लक्षणं स्वरूपमात्मा यस्येति व्युत्पत्या जात्यात्मको व्यक्त्यात्मकश्च सन्निकर्षः प्रथमः।

एकस्य वस्तुनः प्रत्यक्षानन्तरं तत्सजातीयवस्तुनः यः प्रत्यक्षो जायते ज्ञानं वा भवति सा सामान्यलक्षणाप्रत्यासत्तिः। यथा–अयं गौः, अयं गौः इत्यादि प्रतीत्या सकलगोषु एका गोत्वजातिः स्वीक्रियते। अत्र अयं घटः इत्याकारकज्ञाने घटत्व विशेषणं तदेव निर्विकल्पकं ज्ञानम्। अयं घटः इत्याकारकं सविकल्पकं ज्ञानम्। अस्य प्रत्यक्षस्य कारणीभूतः सम्बन्धः संयोगः लौकिकः। उक्त ज्ञानं घटघटत्वयोः विषयीकरोति। तत्र घटः विशेष्यविधया घटत्वञ्च विशेषणविधया प्रविष्टमस्ति। अनेन कारणेन इन्द्रियसम्बद्धं विशेष्यं यस्य तत् इन्द्रियसम्बद्धं विशेष्यकं ज्ञानं भवति सैव सामान्यलक्षणा प्रत्यासत्तिः। अर्थात् अयं घटः इत्याकारकज्ञाने प्रकारीभूतं सामान्यं घटत्वम्। अनेन घटत्वरूपसामान्यलक्षणसन्निकर्षेण "घटः" इति सकलघटविषयक अलौकिकप्रत्यक्षो भवति।

अथ समानानां भावः सामान्यम्। तच्च क्वचिन्नित्यं धूमत्वादिः क्वच्चिानित्यं घटादिः। यत्रैको घटः संयोगेन भूतले, समवायेन कपाले ज्ञातः तदनन्तरं सर्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति तत्रेदं बोध्यम्-परन्तु सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बन्धेन अधिकरणानां प्रत्यासत्तिः। किन्तु तत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं, तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात्, सामान्यस्य तदानीमभावात् किञ्च इन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्वात्तादृशज्ञानं कुतो न जायते, तस्मात् सामान्यविषयकं ज्ञानं प्रत्यासत्तिः न तु सामान्यमित्याह–

---

1. कारिकावली, का० 63

**आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते।।**
**तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्षते।। इति।।**[1]

**(ख) ज्ञानलक्षणः–**

सामान्यलक्षणप्रत्यासत्तेरपि सामान्यज्ञाने पर्यवसानात् ज्ञानलक्षणात्मक द्वितीय प्रत्यासत्या सह अभेदमेव इति जिज्ञासायां शङ्कते-ज्ञानलक्षणाप्रत्यासत्तिर्यदि ज्ञानरूपा, सामान्यलक्षणापिज्ञानरूपा तदा तयोर्भेदो न स्यात्। अत आह–

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः।**[2]

यदि सामान्यलक्षणासन्निकर्षो न स्वीक्रियेत तदा सकलधूमेषु सकलवह्निषु च अन्य सन्निकर्षाभावेन–धूमत्वेन सकलधूमानां इत्यलौकिकं ज्ञानं, तदवच्छिन्नत्वेन सकलवह्नीनां इत्यलौकिकं ज्ञानं च कथं भवेत्? अतस्तदर्थं "सर्वे धूमाः सर्वे वह्निः" इति प्रत्यक्षज्ञानार्थम्, कारणीभूता सामान्यलक्षणाप्रत्यासत्तिः स्वीकर्तव्या।

प्रत्येकेन्द्रियस्य पृथक् नियतविषयश्च भवति। चक्षुरिन्द्रियस्य विषयः रूपम्, श्रोत्रस्य शब्दः, घ्राणस्य गन्धः, रसनायाः रसः, त्वगिन्द्रियस्य विषयः स्पर्शः विद्यते। सामान्यतया एकस्मिन् इन्द्रिये अन्येन्द्रियस्य विषयस्य ग्रहणक्षमता न भवति। किन्तु ज्ञानलक्षणप्रत्यासत्या स्वविषयभिन्नविषयस्यापि ग्रहणं भवति। अयमेव ज्ञानलक्षणप्रत्यक्षः। नव्यनैयायिकानां मते इदं ज्ञानं साधारणसन्निकर्षेण न सम्भवति अतः अलौकिकसन्निकर्षः स्वीकार्यः। प्रायः ज्ञानलक्षणसन्निकर्षस्य खण्डनं भवति यतोऽहि अयं वस्तुतः अनुमानमेव। साहचर्यस्य ज्ञानमनुमानद्वारैव भवति किन्तु अनुमानस्य प्रक्रिया आशुघटितत्त्वात् प्रत्यक्षवदेव प्रतिभाति।

**(ग) योगजसन्निकर्षः–**

इन्द्रियाणां शक्तिः सामान्यमेव भवति। तेन दूरस्थस्य सूक्ष्म पदार्थस्य ज्ञानं न सम्भवति। जैनदर्शनस्य केवलज्ञानं बौद्धदर्शनस्य बोधिः, सांख्यदर्शनस्य कैवल्यं, वेदान्तदर्शनस्य साक्षात्कारः अपि वस्तुतः योगजप्रत्यक्षस्य विभिन्न रूप एव।

योगजप्रत्यक्षस्य द्वौ भेदौ–युक्तयोगी, युञ्जानयोगी च।

तथा चोक्तं कारिकावल्याम्–

---

1. कारिकावली, का0 64
2. भाषापरिच्छेद–का0 65

**योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः।**
**युक्तस्य सर्वदाभानं चिन्तासहकृतोऽपरः॥**[1]

योगात् जातो योगजः अर्थात् योगाभ्यास जनितो धर्मविशेषः। चित्तवृत्तिनिरोध एव योगः। महर्षिपतञ्जलिना प्रोक्तम्–"योगश्चित्तवृत्तिनिरोधः"[2] स च द्वेधा–सम्प्रज्ञातयोगः, असम्प्रज्ञातयोगश्च। तत्र असम्प्रज्ञात योगः विवेकसाक्षात्कार-मात्रानुवर्तमानो भवति, न हि तदानीं विवेकख्यात्यतिरिक्ताश्चित्तवृत्तिधर्माधर्मसंस्कारादयो वर्तन्ते किन्तु लीना एव।

अत्र योगजपदस्य योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थकरणात् धर्मविशेषः उत्कृष्टपुण्यं सन्निकर्षो लभ्यते। योगः समाधिः तदर्थं यः समाधिसाधनभूतेषु यमनियमासनप्राणायामप्रत्याहारेषु अभ्यासः, ईश्वरप्रणिधाने वाऽभ्यासः क्रमशः तज्जनितो यः धर्मविशेषः ईश्वरानुग्रहसम्बलितज्ञानविशारदीभावश्च। अत्र श्रुतिरपि समर्थयति–

"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति।[3]
"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा।
ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः॥[4]
"ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति।"[5]

तथा च यमनियमाद्यभ्यासजनितपुण्यात्मकसन्निकर्षेण धारणाध्यान समाध्यात्मक-संयमापराभिधानचिन्तासहकृतेन युञ्जानयोगिनः कालान्तरीण देशान्तरीणसूक्ष्मविप्रकृष्ट पदार्थविषयकाऽलौकिकसाक्षात्कारं कुर्वन्ति। एवञ्च ईश्वरप्रणिधानलभ्येश्वरानुग्रहान्वित-ज्ञानवैशारद्येन सार्वज्ञकल्पेन सन्निकर्षेण युक्तयोगिनः सार्वदिकस्फुरणात्मकविवेक-साक्षात्कारं कुर्वन्ति।

योगजप्रत्यक्षसन्दर्भे इयमापत्तिरस्ति यत् प्राचीननैयायिकैरभिहितं यत्प्रत्यक्षलक्षणं तल्लक्षणमत्र न संघटते। अत्र अस्तित्त्व स्वीकारे योगिनः सर्वज्ञाः ईश्वरकल्पाश्च स्युः। अतः नव्यन्यायस्वीकृतमपि इदं प्रत्यक्षं न सर्वसम्मतम्। इति।

1. कारिका0 का0 65
2. यो0 सू0 1/2
3. कठवल्ली, अ01 व-2, मं0 12
4. मु0 3/1/8
5. मु0 उ0 3/2/5

# हेत्वाभासविवेचनम्

## (क) हेतुपरिभाषा

अनुमानवाक्यस्याधारभूतः हेतुः भवति। अतः तस्य महत्वं स्पष्टमेव। एतन्महत्वसम्बन्धे यद्यपि ऐकमत्यं तथापि तत्स्वरूपस्य भेदस्य च विषये विभिन्नेषु दर्शनेषु वैमत्यमस्ति।

महर्षिः गौतमः उदाहरणसादृश्यस्याधारे साध्यप्रतिपादनहेतुं साधर्म्यहेतुः। उदाहरणसादृश्यात् साध्यप्रतिपादकवाक्यं वैधर्म्यहेतुरवोचत।[1] अस्य व्याख्यां कुर्वता भगवता वात्स्यायनेनोक्तं यत्–उदाहरणेन सामान्यात् साध्यस्य धर्मस्य साधनम्–प्रज्ञापनं हेतुः–साध्ये प्रतिसंधाय धर्मम् उदाहरणे च प्रतिसंधाय तस्य साधनतावचनं हेतुः।[2] तथा च सूत्रम्–"उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः"[3] उदाहरणं यथा–शब्दः अनित्यः उत्पत्तिधर्मकत्वात् घटवत्। अत्र उत्पत्तिधर्मकः हेतुः अनित्यत्वधर्म–प्रतिपादकत्वात् साधर्म्यहेतुः। यया रीत्या उदाहरणसाधर्म्यात् हेतुः साध्यं साधयति तथैव उदाहरणवैधर्म्यादपिहेतुः साध्यं साधयति। यथा–शब्दः अनित्यः उत्पत्तिधर्मकत्वात् यः नित्यः भवतिः सः न उत्पत्तिधर्मकः यथा–आत्मा। अत्र उत्पत्तिधर्मकः हेतुः वैधर्म्यहेतुः।

अत्र उद्योतकरस्याक्षेपः यत् उदाहरणभेदात् न हेतुभेदः। भाष्यकारप्रस्तुत उदाहरणे प्रयोगभेदः दृश्यते न तु अर्थभेदः। आत्मघटाभ्यां सह एकैव हेतुः प्रयुक्तः विद्यते। अतः उद्योतकराणां मते वीतहेतुरवीतहेतुभेदेन हेतोः भेदद्वयं भवति। वीत हेतुना वस्तुनः यथार्थस्वरूपस्य ज्ञानं भवति अवीतहेतुना च परपक्षनिरसनं भवति। अवीतहेतोः उदाहरणं यथा–जीवच्छरीरम् आत्माविहीनं नास्ति, अप्राणाद्ययुक्तत्वात्। यः अप्राणादि युक्तः सः आत्माविहीनः यश्च प्राणादिविशिष्टः सः न आत्माहीनः। वाचस्पतिमिश्राणामपि एवमेवाशयः यत् वैधर्म्यमात्रेण हेतौ न गमकता तदर्थं हेतौ व्यभिचारशून्यत्वमावश्यकम्।

गङ्गेशोपाध्यायः हेतोः परिभाषा इत्थं प्रकारेण वदति–हेतुत्वं च अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयकशाब्दधीजनक–

---

1. न्या0वा0ता0टी0 1/1/34
2. वात्स्यायनभाष्यम्, 1/1/34
3. न्या0 सू0 1/1/34

हेतुविभक्तिमच्छब्दत्वम्।[1]

## (ख) हेतुरूपाणां परम्परा

(1) **एकलक्षण परम्परा**–जैनतार्किकाः हेतोः स्वरूपमेकलक्षणं वदन्ति। तच्च-अन्यथानुपपत्तिरूपम्।

(2) **द्विलक्षणपरम्परा**–अक्षपादगौतमः, वात्स्यायनश्च साधर्म्यवैधर्म्याभ्यां हेतोः द्वे रूपे स्वीकरोति।

(3) **त्रिलक्षणपरम्परा**–

अस्याः परम्परायाः अपि बीजं न्यायसूत्रे भाष्ये चोपलभ्यते, किन्तु स्पष्टतया निर्देशस्तु उद्योतकरेण विहितम्।[2] प्रशस्तपादाचार्यमतेऽपि तदेव लिङ्गं भवति यदनुमेयसम्बद्धं भवति, अन्विते प्रसिद्धं भवति, अनुमेयाभावे च न तिष्ठति।[3]

सांख्याचार्यः माठरः अपि हेतोः त्रिविधत्वं स्वीकरोति, बौद्धाः अपि त्रिविधत्वं हेतोः स्वीकुर्वन्ति।[4]

(4) **चतुर्लक्षणपरम्परा**–उद्योतकरवाचस्पतिमिश्रयोः विचारेणेदं ज्ञायते यत् न्यायदर्शने चतुर्लक्षणपरम्परापि प्रचलिता आसीत्।

(5) **पञ्चलक्षणपरम्परा**–जयन्तभट्टस्तावत् हेतोः पञ्चलक्षणानिस्वीकरोति।[5]

(क) पक्षधर्मत्वम्, (ख) सपक्षधर्मत्त्वम्, (ग) विपक्षाद्व्यावृत्तिः, (घ) अबाधितविषयत्वम्, (ङ) असत्प्रतिपक्षत्वञ्च। एषु एकस्याप्यभावे निम्नलिखित हेत्वाभासो भवति।

(1) पक्षधर्मतायाः अभावे-असिद्धः।

(2) विपक्षाद्व्यावृत्तेरभावे-विरुद्धः।

(3) सपक्षसत्वस्याभावे-अनैकान्तिकः।

---

1. त० चिन्ता० प० 1535
2. अथवा त्रिविधमिति लिङ्गस्य प्रसिद्धं सदसन्दिग्धतामाह। प्रसिद्धमितिपक्षे व्यापकं सदिति सजातीये। असन्दिग्धमिति सजातीयाविनाभावि। न्या०वा० 1/1/5
3. अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्।
4. हेतुस्त्रिरूपः किं पुनस्त्रैरूपम्? पक्षधर्मत्वं पृ0–100 विपक्षेचासत्वमिति–न्या0प्र0
5. च शब्दात्प्रत्यक्षगमाविरुद्धं चेत्येवं चतुर्लक्षणं पञ्चलक्षणमनुमानमिति व्या0वा0 1/1/5 तत्र चतुर्लक्षणं द्वयम्। एकं पञ्चलक्षणमिति–न्या0वा0ता0टी0 1/1/5

(4) अबाधितविषयत्वस्याभावे-कालात्ययापदिष्टः।

(5) असत्प्रतिपक्षत्वस्याभावे-प्रकरणसमः।[1]

(6) **षड्लक्षणपरम्परा**–हेतुबिन्दुग्रन्थे धर्मकीर्तिः हेतोः षड्लक्षणानां निर्देशः करोति। यथा–(क) पक्षधर्मत्वम्, (ख) सपक्षसत्वम्, (ग) विपक्षासत्वम्, (घ) अबाधितविषयत्वम्, (ङ) विवक्षितैकसंख्यत्वम्, (च) ज्ञातत्त्वञ्च।[2]

(7) **सप्तलक्षणपरम्परा**–न्यायविनिश्चयविवरणे जैनतार्किकः वादिराजः हेतोः सप्तलक्षणपरम्परायाः उल्लेखं कृतवान्। षड्लक्षणपम्परायां अन्यथानुपपन्नत्वं संयोज्य हेतोः सप्तलक्षणपरम्परा ज्ञातव्या।[3]

## (ग) हेतुभेदाः–

बौद्धाचार्याणां मते हेतोः त्रयो भेदाः सन्ति। (क) स्वभावहेतुः, (ख) कार्यहेतुः, (ग) अनुपलब्धिहेतुश्च। ध्यातव्यमिदं यत् बौद्धमते पदार्थो द्विविधः–उपलब्धिलक्षणप्राप्तः, अनुपलब्धिलक्षणप्राप्तश्च। अनुपलब्धिलक्षणमपि त्रिविधम्–देशविप्रकृष्टम्–यथा–स्वर्गलोकः, कालविप्रकृष्टम् यथा–युधिष्ठिरः, कृष्णः, स्वभावविप्रकृष्टम्–यथा–परमाणुः।

### न्यायपरम्परायां हेतुभेदः–

महर्षिणा गौतमेन साधर्म्यवैधर्म्याभ्यां हेतुद्वैविध्यं प्रतिपादितम्। वात्स्यायनेन एतद्भेदद्वयं समर्थितम्। उद्योतकरस्तावत् अन्वयव्यतिरेकि, केवलान्वयी केवलव्यतिरेकिभेदेन हेतोः त्रैविध्यं सम्पादयति। तदेव स्पष्टयति श्रीमदन्नम्भट्टपादः–लिङ्गं त्रिविधम्–अन्वयव्यतिरेकि, केवलान्वयि केवलव्यतिरेकि चेति।[4] तथा च–अन्वयप्रयोज्यव्याप्तिमद्व्यतिरेकप्रयोज्यव्याप्तिमदन्वयव्यतिरेकि। यथा–वह्नौ साध्ये धूमवत्त्वम्।

अन्वयमात्रव्याप्तिकं केवलान्वयि।[5] यथा–घटोऽभिधेयः प्रमेयत्वात्–पटवत्। यो योऽभिधेयः, स स प्रमेयः। किन्तु यो नाभिधेयः स न प्रमेय इति वक्तुं न

1. न्यायमञ्जरी।
2. हेतुबिन्दु पृ0 68
3. जैनकतर्कशास्त्र में अनुमान विचार–पृ0 225
4. तर्कसंग्रहः।
5. तदेव।

शक्यते। सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च। केवलान्वयि हेतुः चतुरूपोपन्नः सन् स्वसाध्यं साधयति। (क) पक्षसत्वम्, (ख) सपक्षसत्वम्, (ग) अबाधितविषयत्वम्, (घ) असत्प्रतिपक्षत्वञ्च। इति चतुर्लक्षणयुक्तः सन् स्वसाध्यं साधयति।

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि।[1] यथा-पृथिवी इतरेभ्यो भिद्यते गन्धवत्वात्। अत्र हेतुसम्बद्धव्याप्तेः सम्पादनार्थं सपक्षीय दृष्टान्तः नोपलभ्यते। अत्र मात्र सपक्षसत्वस्याभावः विद्यते।

अधुना हेतून्निरूप्य हेत्वाभासान् निरूप्यते। प्रायः हेतोः द्वैविध्यं सद्धेतवः असद्धेतवश्च। सद्धेतवस्तावत् व्याप्त्यादिविशिष्टहेतवः। ते च केवलान्वयिकेवल-व्यतिरेक्यन्वयव्यतिरेकिभेदेन त्रिधा। तत्र अन्वयव्यतिरेकि हेतुः पञ्चरूपोपपन्नः सन् स्वसाध्यं साधयितुं क्षमः, पञ्चरूपाणि-पक्षसत्वम्, सपक्षसत्वम्, विपक्षासत्वम्, अबाधितत्त्वम्, असत्प्रतिपक्षितत्त्वात्मकानि। तानि धर्माणि विद्यन्ते। केवलान्वयिहेतुस्तु चतुरूपोपपन्न एव स्वसाध्यं साध्यति, तस्य विपक्षाप्रसिद्धेः, विपक्षाऽसत्वमप्यप्रसिद्धमतः घटोऽभिधेयः प्रमेयत्वादित्यत्र प्रमेयत्वहेतोर्विपक्षविरहात् केवलव्यतिरेकिहेतुरपि चतुरूपोपपन्न एव स्वसाध्यं साधयति, तस्य सपक्षाऽप्रसिद्धेः। एतत् पञ्चरूपाणां मध्ये एकेन द्वाभ्यां त्रिभिर्वोपपन्नत्वेन ये हेतुवदाभासन्ते ते हेत्वाभासाः कथ्यन्ते। ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधितश्चेति पञ्चसंख्या[2]। दोषा अपि व्यभिचारविरोधसत्प्रतिपक्षासिद्धिबाधाः पञ्च। यद्विषयकं ज्ञानमनुमिति प्रतिबन्धकं तत्त्वं दोषत्वमिति। उक्तञ्च कारिकावल्याम्-

**अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।**
**कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा।[3]**

सूत्रकृता भगवता गौतमेन सत्प्रतिपक्षासिद्धबाधितस्थाने क्रमशः प्रकरणसम-साध्यसम-कालातीत इति स्वीकृत्य पञ्च हेत्वाभासाः स्वीकृताः। तथा च सूत्रम्-"सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासाः" इति।[4]

हेत्वाभासशब्दस्य व्युत्पत्तिः द्वाभ्यां प्रकाराभ्यां भवति। (क) हेतुवदाभासन्ते इति हेत्वाभासाः। (ख) हेतौ प्रतीतिविषयः धर्मः, हेतुदोषा इत्यर्थः। वात्स्यायनः

---

1. तदेव।
2. तदेव।
3. कारिकावली-का.सं.-7
4. न्या0 सू0 1/2/4

प्रशस्तपादः, व्योमशिवाचार्यादयः प्रथमां व्युत्पत्तिं स्वीकुर्वन्ति। गंगेशोपाध्यायप्रभृतयः नव्यनैयायिकाः द्वितीयां व्युत्पत्तिमवगम्यन्ते। तर्कदीपिकायामन्नंभट्टेन प्रोक्तं यत्-अनुमितिप्रतिबन्धकीभूतयथार्थज्ञानविषयत्वं हेत्वाभासत्वम्। नीलकण्ठस्तावत् हेत्वाभासं लक्षयति यत् अनुमिति तत्कारणीभूतप्रतिबन्धकत्वं तत्त्वम्।

अनुमाने हेतोः महत्त्वं स्वतः सिद्धमेव। सद्धेतुना एवानुमानं जायते, किन्तु कः सद्धेतुः कश्चासद्धेतुरिति प्रथमतया ज्ञानमावश्यकम्। शास्त्रार्थे तत्त्वनिर्णयविजय-प्राप्त्यर्थमसद्धेतोः ज्ञानं परमावश्यकम्। असद्धेतव एव हेत्वाभासाः।[1]

धर्मकीर्तिमतानुसारेण हेतुलक्षणरहिताः किन्तु हेतुवत् प्रतीयन्ते, ते हेत्वाभासाः।[2] अविनाभावाभावे कोऽपि हेतुः न सद्धेतुः अविनाभाववान् यः हेतुः भवति तत्र पक्षधर्मत्वाभावे असिद्धहेत्वाभासः, सपक्षसत्वाभावे विरुद्धहेत्वाभासः, विपक्षासत्वाभावे च अनैकान्तिकहेत्वाभासो भवति।[3]

महामहोपाध्यायगङ्गेशमतेन हेत्वाभासस्य लक्षणमित्थं विद्यते अनुमितिकारणीभूता-भावप्रतियोगियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति।[4] यथा-धूमवान् वह्नेः।

### (घ) हेत्वाभासभेदाः-

न्यायमते पञ्च हेत्वाभासाः भवन्ति। वैशेषिकाः बौद्धाश्च हेत्वाभासस्य त्रैविध्यं स्वीकुर्वन्ति। प्रशस्तपादाचार्यः एकत्र चत्वारः हेत्वाभासाः इति स्वीकृतवान् किन्तु अन्यत्र कश्यपमतमुल्लेखं कुर्वता त्रयः हेत्वाभासाः इति समर्थितवान्। शिवादित्यः सप्तपदार्थग्रन्थे षड्हेत्वाभासानां व्यवस्थां प्रदत्तवान्। भासर्वज्ञं विहाय अन्यैः नैयायिकैः पञ्च हेत्वाभासाः स्वीकृताः। अनध्यवसितेन सह भासर्वज्ञः षड्हेत्वाभासान् स्वीचकार।

माठरवृत्तौ असिद्धः अनैकान्तिकः, विरुद्धः एवञ्च तस्य चतुर्दश उपभेदानां वर्णनमस्ति। अन्ये सांख्यग्रन्थे हेत्वाभासस्योल्लेखं नास्ति। वेदान्तस्य खण्डन-खण्डखाद्यग्रन्थे न्यायसम्मतहेत्वाभासस्य पञ्चभेदानां खण्डनं विद्यते। वेदान्तपरिभाषा-यामेतस्योल्लेखः नैवास्ति। विभिन्न दार्शनिकानां मते हेत्वाभासस्य संख्या इत्थमस्ति-

---

1 हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते। त० चि०।

2. प्रमा० वा० 2/1

3. प्र० वा० 3/14

4. सामान्यनिरुक्तिप्रकरणम्।

**(1) नैयायिकाः–**

| | 1 | 2 | 3 | 4 | 5 |
|---|---|---|---|---|---|
| (क) गौतमवात्स्यायनौ | सव्यभिचारः | विरुद्धः | प्रकरणसमः | साध्यसमः | कालातीतः |
| (ख) उद्योतकरः | सव्यभिचारः | विरुद्धः | सत्प्रतिपक्षः | साध्यसमः | कालातीतः |
| (ग) वाचस्पतिः | सव्यभिचारः | विरुद्धः | सत्प्रतिपक्षः | साध्यसमः | कालातीतः |
| (घ) जयन्तः | सव्यभिचारः | विरुद्धः | सत्प्रतिपक्षः | साध्यसमः | कालातीतः |
| (ङ) गङ्गेशः | सव्यभिचारः | विरुद्धः | सत्प्रतिपक्षः | असिद्धः | बाधितः |
| (च) केशवमिश्रः | अनैकान्तिकः | विरुद्धः | प्रकरणसमः | असिद्धः | कालात्यया-पदिष्टः |
| (छ) उत्तरकालीन नैयायिकाः | सव्यभिचारः अनैकान्तिको वा | विरुद्धः | सत्प्रतिपक्षः | असिद्धः | बाधितः |

**(2) वैशेषिकाः**

| | | | | | |
|---|---|---|---|---|---|
| (क) कणादः | संदिग्धः | अप्रसिद्धः | – | असत् | – |
| (ख) प्रशस्तपादः | अनध्यवसितः | अप्रसिद्धः | – | असत् | – |
| (ग) काश्यपः | संदिग्धः | विरुद्धः | – | असत् | – |
| (घ) शंकरमिश्रः | संदिग्धः | विरुद्धः | – | असत् | – |
| (ङ) वल्लभाचार्यः | सव्यभिचारः | विरुद्धः | – | असत् | – |
| (च) श्रीधरशिवादित्यौ | अनैकान्तिकः | विरुद्धः | प्रकरणसमः | असिद्धः | कालात्यया-पदिष्टः |

**(3) बौद्धाः**

| | | | | | |
|---|---|---|---|---|---|
| (क) वसुबन्धुः | अनैकान्तिकः | विरुद्धः | – | असिद्धः | – |
| (ख) दिङ्नागः | अनैकान्तिकः | विरुद्धः | – | असिद्धः | – |
| (ग) धर्मकीर्तिः | अनैकान्तिकः | विरुद्धः | – | असिद्धः | – |
| (घ) असङ्गः | अनैकान्तिकः | विरुद्धः | – | असिद्धः | – |
| (ङ) असङ्गः | अनैकान्तिकः | विरुद्धः | – | साध्यसमः | – |

**(4) मीमांसकाः**

| | | | | | |
|---|---|---|---|---|---|
| (क) भाट्टः | अनैकान्तिकः | – | – | असिद्धः | बाधः |
| (ख) प्रभाकरः | अनैकान्तिकः | – | – | असिद्धः | बाधः |
| (ग) माठरः | साधारणः | – | – | – | – |

| | | | | | |
|---|---|---|---|---|---|
| (5) सांख्याः | अनैकान्तिकः | विरुद्धः | - | असिद्धः | - |
| (6) वेदान्तमते | - | - | - | - | - |
| (7) जैनः | - | - | - | - | - |
| (क) सिद्धसेन दिवाकरः | -अनैकान्तिकः | विरुद्धः | - | असिद्धः | - |
| (ख) हेमचन्द्रः प्रभाचन्द्रः | - | - | अकिञ्चित्करः | - | - |
| (ग) अकलंकः | - | - | - | - | - |

## हेत्वाभासानां स्वरूपम्

### (1) सव्यभिचारः (अनैकान्तिकः)

सव्यभिचारोऽनैकान्तिकः। स च त्रिविधः। साधारणासाधारणाऽनुपसंहारि-भेदात्। तथाचोक्तं कारिकावल्याम्–

**"आद्यः साधारणस्तु स्यादसाधारणकोऽपरः।**
**तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत्॥[1]**

तथा च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम्। आदिपदेन असाधारणानुपसंहारिणोः परिग्रहः। हेतुसाध्ययोर्मध्ये अपेक्षितसाहचर्यः यदि अनियमितः तदा हेतुः सव्यभिचारो भवति। अस्य हेतुदोषस्य अपरं नाम अनैकान्तिकः नियत अस्तित्त्वस्य अभाव इत्यर्थः। अर्थात् हेतुः कदाचित् साध्येन सह कदाचिच्च साध्याभावेन सह तिष्ठति। वात्स्यायनः अमुमेव स्पष्टयति यत्-पक्ष-सपक्षातिरिक्तः विपक्षेऽपि यो हेतुः तिष्ठति सः सव्यभिचारः। यथा-शब्दो नित्यः अस्पर्शत्वात्।

गङ्गेशमते यः साध्यस्थले साध्याभावस्थले च तिष्ठति एवञ्च साध्य सम्बन्धे सन्देहनिवारणेऽसमर्थः सः सव्यभिचारः अनैकान्तिको वा हेत्वाभासः। कणादः अनयैव दृष्ट्या एनं सन्दिग्धहेत्वाभासः कथयामास। केशवमिश्रमतेन साध्यस्य संशयहेतुः अनैकान्तिको भवति।

### (क) साधारणः

साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः।[2] यथा-पर्वतो वह्निमान् प्रमेयत्वात्। अत्र हेतुः पक्षे पर्वते, सपक्षे महानसे, विपक्षे ह्रदे च विद्यते। अतः प्रमेयत्वहेतुः न हेतुः अपितु हेत्वाभास एव।

---

1. भाषापरिच्छेदः का0 72
2. तर्कसंग्रहः-अ0 ख0।

गङ्गेशेनोक्तं यत् यो हेतुः साध्याधिकरणे साध्याभावाधिकरणे च वृत्तिः भवति सः साधारणोऽनैकान्तिकः हेत्वाभासः।[1]

**(ख) असाधारणः**

सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः।[2] यथा-शब्दः अनित्यः शब्दत्वात्। तथा चोक्तं भाषापरिच्छेदे-

**यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः।**
**यस्तूभयस्माद् व्यावृत्तः स चासाधारणो मतः।।[3]**

यो हेतुः सपक्षात् विपक्षाच्च व्यावृत्तः स असाधारणव्यभिचारी। अयम्भावः-निश्चितसाध्यवद्वृत्तित्वाभाववत्वे सति निश्चितसाध्याभाववद् वृत्तित्वाभाववान् यः स असाधारणः।

अत्र शब्दः पक्षः। प्रागभावप्रतियोगित्वात्मकमनित्यत्वं साध्यम्, शब्दत्वं हेतुः। तत्र यदा शब्दः अनित्यो न वा इति संशयः तदा शब्दो सपक्षः नैव विपक्षो वा भवति निश्चितसाध्यवत्वाभावात् निश्चितसाध्याभाववत्वाभावाच्च, किन्तु सपक्षो घटादिः, विपक्षः परमाण्वादिः तद् घटपरमाण्वाद्यवृत्तित्वञ्च शब्दत्वात्मक हेतोर्भवति तत् असाधारणव्यभिचारी।

**(ग) अनुपसंहारी**

अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी।[4] यथा-सर्वमनित्यं प्रमेयत्वात्। अत्र सर्वस्यापि पक्षत्वाद्दृष्टान्तो नास्ति। कारिकावल्यामुक्तं श्रीविश्वनाथेन-

**तथैवानुपंसहारी केवलान्वयिपक्षकः।**
**सर्वं तुच्छं प्रमेयत्वादिति तत्रान्तिमो भवेत्।।[5]**

अन्वयव्याप्तिज्ञानस्य सामग्री अन्वयसहचारः, व्यतिरेकव्याप्तिज्ञानस्य सामग्री व्यतिरेकसहचारः, स च सपक्षाप्रसिद्धेः विपक्षाप्रसिद्धेश्च नास्ति। यस्य धूमहेतोः सपक्षः विपक्षश्च प्रसिद्धः, तस्य महानसात्मकसपक्षविशेष्यकनिश्चयविषयसाध्यकत्वं

---

1. तत्त्व चि0 पृ0 172
2. तर्कसंग्रहे।
3. कारिका0 का0 73
4. तर्कसंग्रहे-अनु0 ख0।
5. कारिका का0 74

जलह्रदात्मकविपक्षविशेष्यक निश्चयविषय साध्याभावकत्वं च प्रसिद्धयति, अनुपसंहारिणः प्रमेयत्वहेतोः सपक्षो विपक्षश्च न प्रसिद्धः, अतस्तत्र किञ्चित् सपक्षविशेष्यकनिश्चयाऽविषयसाध्यकत्वस्य किञ्चिद्विपक्षविशेष्यक निश्चयाऽविषय-साध्याभावकत्वस्य च सत्वेन लक्षणसमन्वयः। अत्र कुत्रापि साध्यनिश्चयस्य साध्याभावनिश्चयस्य चाप्रसिद्धेः प्रमेयत्वहेतौ "प्रमेयत्वं अनित्यत्वाभाववद् वृत्तिर्न वा" इत्याकारक व्याप्तिसंशयजननद्वारा व्याप्तिज्ञानप्रतिबन्धकोऽयं दोषः इति।

उद्योतकरेण अनैकान्तिकस्य षोडश उपभेदाः प्रदर्शिताः। भासर्वज्ञानुसारेण तस्य अष्टौ भेदाः सन्ति। दिङ्नागमते एतत्षड्संख्याकः। कुमारिलः अनैकान्तिकस्य मुख्यत्वं प्रतिपाद्य तस्य सव्यभिचारः, विरुद्धाव्यभिचारि, असाधारण भेदेन त्रयो भेदाः वर्णयति। केशवमिश्रमते अनैकान्तिको द्विविधः-साधारणोऽनैकान्तिकः यथा-शब्दो नित्यः प्रमेयत्वात्। असाधारणोऽनैकान्तिकः यथा-पृथिवी नित्या गन्धवत्वात्। विश्वनाथमते तु साधारणासाधारणानुपसंहारिभेदेन अनैकान्तिकस्य त्रयो भेदाः एव सन्ति।

## (2) विरुद्धः

साध्याभावव्याप्तो हेतुर्विरुद्धः।[1] कारिकावल्यां विश्वनाथोऽवादीत्-

**यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः।**[2]

यथा-शब्दः नित्यः कृतकत्वात्। अत्र नित्यत्वं साध्यं कृतकत्वञ्च हेतुः। कृतकत्वं हि नित्यत्वाभावेनाऽनित्यत्वेन व्याप्तम्। अतः सः न हेतुः अपितु हेत्वाभासः।

विरुद्धस्य परिभाषा-नैयायिकैः काले-काले परिष्कृता।

गौतममते "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः"[3] यः सिद्धान्तोऽभ्युपेतस्त-द्विरोधी हेतुर्विरुद्धः। साध्याभावव्याप्यो हेतुर्विरुद्धः। यथा - वह्निमान् जलात् इत्यत्र जलं वह्न्यभावव्याप्यत्वात् वह्निविरुद्धम्। विशेषविवक्षायां चात्र सिद्धान्तपदेन साध्यं ग्राह्यं तथा च साध्यविरोधी विरुद्धः इति लभ्यते। वात्स्यायनस्यापि प्रायः अयमेवाशयः। जयन्तभट्टमते यो हि हेतुः साध्यस्य न साधकः अपितु साध्यविरोधी स विरुद्धः।

---

1. तर्कसंग्रहः।
2. भाषपरिच्छेदः-का0 74
3. न्या0 सू0 1/2/6

गङ्गेशः वदति यत् यः हेतुः सपक्षे न तिष्ठति स विरुद्धः।[1] उक्तलक्षणानां स्वीकारे विरुद्धासाधारणयोरभेदापत्तिः। अतः केशवमिश्रपरिष्कृतलक्षणमेव सुतरां निर्विवादम्। कणादः विरुद्धहेत्वाभासमप्रसिद्धशब्देन अवोचत।

विरुद्धस्यभेदाः– (क) दिङ्नागमते अस्य चत्वारो भेदाः–

(1) धर्मस्वरूपविपरीतसाधनम्, (2) धर्मविशेषविपरीतसाधनम्, (3) धर्मिस्वरूपविपरीतसाधनम्, (4) धर्मिविशेषविपरीतसाधनम्।

(ख) भासर्वज्ञमते अयमष्टौ संख्याकः (1) पक्षविपक्षव्यापकः, (2) विपक्षैकदेशवृत्तिपक्षव्यापकः, (3) पक्षविपक्षैकदेशवृत्तिः, (4) पक्षैकदेशवृत्ति-विपक्षव्यापकः, (5) विपक्षपक्षव्यापकः, (6) विपक्षैकदेशपक्षवृत्तिः, (7) पक्षव्यापकविपक्षैकदेशवृत्तिः, (8) विपक्षव्यापकपक्षैकदेशवृत्तिश्च।

भासर्वज्ञं विहायान्ये नैयायिकाः विरुद्धस्य एकैव भेदः स्वीकुर्वन्ति।

**(3) सत्प्रतिपक्षः (प्रकरणसमः)**

यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः।[2] यथा– शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्। शब्दोऽनित्यः कार्यत्वात् घटवत् इति। साध्यस्याभावस्तत्साधकं प्रतिपक्षो हेतुर्यस्य सः शब्दः पक्षः, नित्यत्वं स्वरूपेण साध्यम्, श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वरूपश्रावणत्वं स्वरूपेण हेतुः। अनित्यत्वं स्वरूपेण साध्यम्, कार्यत्वं स्वरूपेण हेतुः। अत्र प्रथमं साध्यं नित्यत्वम्, तदभावः अनित्यत्वं तत्साधकं हेत्वन्तरं कार्यत्वरूपं वर्तते अतः श्रावणत्वं सत्प्रतिपक्षितम्। एवं द्वितीयं साध्यमनित्यत्वं तदभावो नित्यत्वं तत्साधकं हेत्वन्तरं श्रावणत्वरूपं विद्यते। अतः कार्यत्वं सत्प्रतिपक्षितम्।

अत्र हेत्वन्तरमित्यनुपादाने शब्दो नित्यः शब्दत्वादिति विरुद्धस्थले यस्य कृतकत्वहेतोः साध्याभावसाधकत्वं वर्तते तत्र अतिव्याप्तिः तद्वारणाय हेत्वन्तरपदोपादानम्।

कारिकावल्यां विश्वनाथेन प्रोक्तम्–

**विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता।**
**श्रावणत्वादितो नित्योऽनित्यस्तु कार्यतादितः।**[3] महर्षिणा गौतमेन सूत्रितं

1. त० चि०, कारिकावली–74
2. तर्कसंग्रहे।
3. कारिका० का० 77।

सत्प्रतिपक्षलक्षणात्मकं सूत्रम्-''यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः।[1] यस्माद्धेतोः साध्यसाधनार्थं प्रयुक्तात् प्रकरणस्य पक्षप्रतिपक्षयोः अर्थात् अयं पक्षः साध्यवान्, साध्याभाववान् वा इति जिज्ञासा जायते सः हेतुनिर्णयार्थं प्रयुक्तः सन् प्रकरणसमः (सत्प्रतिपक्षः) उच्यते। तथा च निर्णयार्थ प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात् किं तु धर्मिणः साध्यवत्वं तदभाववत्वं वा इति चिन्तां प्रवर्तयति स प्रकरणसमः।

**(4) असिद्धः (साध्यसमः)**

महर्षि गौतमः असिद्धलक्षणस्य सूत्रमवतारयति-''साध्याविशिष्टः साध्यत्वात् साध्यसमः।''[2] साध्यवत् साधनीयत्वात् साध्याविशिष्टः साध्यसदृशः निश्चयाविषयीभूतो हेतुः साध्यसम उच्यते। यथा-छाया द्रव्यं गतिमत्वात्, अत्र छायायां गतिमत्वं निश्चितं नास्ति इति साध्यसमः। यत्र-यत्र गतिमत्वं तत्र-तत्र द्रव्यत्वं यथा-शरीरादौ। अत्र छायायां गतिमत्वं हेतुः सिद्धं नास्ति, अतः साध्येन अविशिष्टः साधनीयत्वादेव साध्यसमोऽस्ति। साध्यसम एवासिद्धः। स चासिद्धस्त्रिविधः। (क) आश्रयासिद्धः, (ख) स्वरूपासिद्धः, (ग) व्याप्यत्वासिद्धश्च।

भासर्वज्ञमते सः हेतुरसिद्धः भवति यस्य पक्षसत्वमनिश्चितं भवति। दीधितिकारमते अनैकन्तिकभिन्नः यथार्थज्ञानविषयः सन् यो हेतुः परामर्शबाधकः सः असिद्धहेत्वाभासः। केशवमिश्रस्तावद्गर्जति-''लिङ्गत्वेनासिद्धो हेतुरसिद्धः।

**असिद्धस्य उपभेदाः-**

प्रशस्तपादाचार्यमते असिद्धः चतुर्विधः (क) उभयासिद्धः, (ख) अन्यतरासिद्धः, (ग) तद्भावासिद्धः, (घ) अनुमेयासिद्धश्च।

भावसर्वज्ञमते अस्य चतुर्दश उपभेदाः सन्ति, यथा-(क) स्वरूपासिद्धः, (ख) व्यधिकरणासिद्धः, (ग) विशेष्यासिद्धः (घ) विशेषणासिद्धः (ङ) भागासिद्धः, (च) आश्रयासिद्धः, (छ) आश्रयैकदेशासिद्धः (ज) व्यर्थविशेष्यासिद्धः, (झ) व्यर्थविशेषणासिद्धः, (ञ) संदिग्धासिद्धः, (ट) संदिग्धविशेष्यासिद्धः, (ठ) संदिग्धविशेषणासिद्धः, (ड) विरुद्धविशेष्यासिद्धः, (ढ) विरुद्ध विशेषणासिद्धश्च।

स्वरूपासिद्धः आश्रयासिद्धभेदेनासिद्धस्य द्वैविध्यं प्रतिपादयति कुमारिलः।

---

1. गौ0 सू0 1/2/7।
2. गौ0 सू0 1/2/8।

केशवमिश्रप्रतिपादितासिद्धस्य वर्णनं क्रियते। तत्र विश्वनाथः, केशवमिश्रः, अन्नंभट्टश्च गङ्गेशमनुकुर्वन्ति। कारिकावल्यां विश्वनाथः वदति–

**आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ।**
**व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा।**[1]

**(क) आश्रयासिद्धः–**

परामर्शवाक्यार्थं पक्षः, पक्षधर्मता, व्याप्तिश्च आवश्यकम्। यस्य हेतोः पक्ष एवाप्रसिद्धः सः आश्रयासिद्धनामकः हेत्वाभासः। यथा–गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत्। अत्र पक्षे अरविन्दे गगनवृत्तित्वं पक्षतावाच्छेदकं नास्ति, अतः पक्षे पक्षतावच्छेदकाभाव एव दोषः। उक्तञ्च कारिकायाम्–

**"पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः"**[2] इति।

**(ख) स्वरूपासिद्धः–**

**"ह्रदो द्रव्यं धूमवत्वादत्रासिद्धिरथापरा"**[3] इति कारिकानुसारेण यत्र पक्षे हेत्वभावः स स्वरूपासिद्धः। यथा–ह्रदो द्रव्यं धूमत्वात् इत्यस्मिननुमानवाक्ये धूम हेतुः ह्रदे नास्ति। स्वरूपासिद्धिदोषस्य प्रकृतपक्षे प्रकृतहेतुमत्ता ज्ञानप्रतिबन्धकत्वम्। सोऽयं स्वरूपासिद्धः शुद्धासिद्धभागासिद्धविशेषणासिद्धविशेष्या सिद्धभेदेन चतुर्विधः भवति। एतल्लक्षणं हि–विशिष्टपक्षविशिष्टसाधनग्रहाविरोधिनो ज्ञानस्य विषयता तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकं स्वरूपासिद्धिः।

**(ग) व्याप्यत्वासिद्धः**

सोपाधिको हेतुर्व्याप्यत्वासिद्धः।[4] उपाधिश्च–साध्यव्यापकत्वे सति साधनाव्यापकत्वम्। साध्यव्यापकत्वं नाम साध्यसमानाधिकरणाऽत्यन्ताभावाऽप्रतियोगित्वम्। साधनाव्यापकत्वञ्च–साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वम्। यथा–पर्वतो धूमवान् वह्निमत्वात्। अत्र आर्द्रेन्धनसंयोगः उपाधिः। सोऽयमुपाधिस्त्रिविधः केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्च। प्रथमः–क्रत्वन्तर्वर्तिनी हिंसा अधर्मजनिका हिंसात्वात् क्रतुबाह्यहिंसावत् इत्यत्र निषिद्धत्वमुपाधिः। द्वितीयो यथा–वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्, अत्र

---

1. कारिकावली, का0 75
2. तदेव–76
3. तदेव।
4. तर्कसंग्रहः।

उद्भूतरूपवत्वमुपाधि:। तृतीयो यथा–ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वमुपाधि:।

**(5) बाधित: (कालातीत:)**

यस्य साध्याभाव: प्रमाणान्तरेण पक्षे निश्चित: स: बाधित:।[1] अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमिति प्रतिबन्धकत्वम्। इतरेषां परामर्शप्रतिवन्धकत्वम्।

गौतमेन उक्तं यत् "कालात्ययापदिष्ट: कालातीत:"[2] इति यस्य हेतो: एकदेश: कालात्ययेन युक्तो भवति स: कालातीत:। यथा–नित्य: शब्द: संयोगव्यङ्ग्यत्वात् इत्यत्र भेरीदण्डादिसंयोगानन्तरं शब्दग्रहणं भवतीति शब्द ग्रहणकाले संयोगव्यङ्ग्यहेतोरेकदेश: संयोग: स्वरूपेण न सम्भवति। अत: संयोगव्यङ्ग्यत्वादिति हेतु: कालात्ययापदिष्टत्वात् कालातीत:। यथा च पर्वतो वह्निमान् केनचित् सम्बन्धेन वह्न्युत्पादकव्यापारविशिष्टत्वात् इत्यत्र पर्वतग्रहणकाले साध्यसाधनकाले वा हेत्वेकदेशे वह्न्युत्पादकव्यापारो नास्ति तदनन्तरमेव वह्निसंभवादिति वह्न्युत्पादकव्यापारविशिष्टत्वात् इति हेतुरत्र कालातीत:।

गङ्गेशमते पक्षे साध्याभावनिश्चय: बाध: एतद्दोष विशिष्टहेतुश्च बाधित इति।[3] एतेषां मते अस्य दशभेदा: सन्ति (क) धर्मिग्राहकमानबाधित:, (ख) साध्यप्रतियोगिग्राहकमानबाधित:, (ग) साध्यग्राहकमानवाधित:, (घ) हेतुग्राहक-प्रमाणबाधितश्च।

एषु प्रथमत्रयाणामपि त्रयो भेदा: चतुर्थस्तु एकैवप्रकारक इति।

## ज्ञानस्य स्वत:प्रामाण्यं परतो वा इति चिन्तनम्

अथ प्रमाणेषु निरूपितेषु तद्गतप्रमितिकरणत्वघटकप्रमागतप्रमात्वस्य स्वतोग्राह्यत्वं परतोग्राह्यत्वं वेति विचार्यते। अत्र स्वतोग्राह्यत्वं नाम ज्ञानग्राहकसामग्रीजन्यग्रहविषय इत्यर्थ:, परतोग्राह्यत्वञ्च–ज्ञाततालिङ्गकानुमितिसामग्रीभिन्नानुमित्यादि सामग्रीजन्य-विषयत्वम्। मीमांसका: प्रमात्वं स्वतोग्राह्यं, नैयायिकाश्च–प्रमात्वं परतोग्राह्यं स्वीकुर्वन्ति। गुरुमिश्रभट्टास्त्रय: मीमांसका:। तत्र गुरुमते ज्ञाने प्रामाण्यं व्यवसायात्मकज्ञानादेव ग्राह्यम्। तन्मते सर्वस्मिन्नेव ज्ञाने मितिमातृमेयैतत्त्रयं भासते। मिति:–ज्ञानम्,

---

1. तर्कसंग्रह:।
2. न्या.सू.1.1.9
3. तर्कसंग्रह:।

माता-ज्ञानाश्रय, मेयः-विषयः। अयं घटो घटविषयकज्ञानवानहमिति प्रथममेव समूहालम्बनं व्यवसायज्ञानमुत्पद्यते, अतएव व्यवसायस्य स्वप्रकाशात्मकतया स्वेनैव स्वगतप्रामाण्यं गृह्यते, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतायास्तैरनङ्गीकारात् अनुपस्थितस्यापि प्रामाण्यस्य भानसंभवात्।

मिश्रमते ज्ञाने प्रामाण्यं स्वस्मात्-अनुव्यवसायात्मकज्ञानात् ग्राह्यम्, तन्मते अयं घट इत्याकारकव्यवसायज्ञानानन्तरं घटत्वेन घटमहं जानामीत्यनुव्यवसायात्मकं लौकिकमानसं ज्ञानविषयकज्ञानमुत्पद्यते, तेनाऽनुव्यवसायेन व्यसायज्ञानगतं प्रामाण्यं गृह्यते।

भट्टमते च ज्ञाने प्रामाण्यं ज्ञाततालिङ्गकानुमित्या गृह्यते। भट्टमते सर्वमेवज्ञानमतीन्द्रियम्, तन्मते घटस्य प्राथमिकं यद् व्यवसायात्मकं ज्ञानम्, तस्य ग्राहिका अनुमितिः स्वीकृता, तयानुमित्या प्रामाण्यं गृह्यते यथा-घटः घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः-घटत्वप्रकारकज्ञाततावत्वात्, यन्नैवं तन्नैवं यथा पटः।

एतन्मतत्रयसाधारणं दूषणं नैयायिकैरुद्भाव्यते-यदि ज्ञानस्य प्रामाण्यं स्वतोग्राह्यं स्यात् तदाऽनभ्यासदशोत्पन्नज्ञाने "इदं ज्ञानं प्रमा न वा" इत्याकारकः सर्वजनानुभवसिद्धः प्रामाण्यसंशयो न स्यात्। यतस्तत्र यदि ज्ञानं स्वेन ज्ञातं तदा न स्वतोग्राह्यत्वसिद्धिः, यदि तु ज्ञानमेव न ज्ञातं तदा धर्मिज्ञानाभावात् कथं संशयः? अतो ज्ञाने प्रामाण्यं न स्वतोग्राह्यम्।

नैयायिकमते ज्ञानप्रामाण्यं परतो अनुमानादिना ग्राह्यम्। यथा-जलप्रत्यक्षानन्तरं तदानयनप्रवृत्तौ सत्यां जललाभे सति पूर्वमुत्पन्नं जलप्रत्यक्षज्ञानं प्रमा, सफलप्रवृत्तिजनकत्वात्, यत्र सफलप्रवृत्ति जनकत्वं नास्ति, तत्र प्रमात्वं नास्ति, यथा मरुमरीचिकाजलज्ञाने इत्यनुमानेन प्रायशः सर्वत्र ज्ञाने प्रमात्वं निश्चीयते तस्मात् ज्ञानगतं प्रामाण्यं परतो ग्राह्यम्। तत्र विप्रतिपत्तिरियम्-"ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा"[1] इति। अत्र विधिकोटिः स्वतस्त्वं मीमांसकानां, निषेधकोटिश्च परतस्त्वं नैयायिकानाम्।

तत्त्वपदेनात्र यद्धर्मघटितज्ञानप्रामाण्यं पक्षस्तद्धर्मघटितज्ञानं ग्राह्यम् तादृश ज्ञानाप्रामाण्याऽग्राहिका यावती तादृशज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयं न वा इति। तादृशो ग्रहः गुरुमते व्यवसायः, स च "अयं घटः" घटत्वेन घटमहं

1. त० चि० म०-प्रामाण्यवादः-प्रथमा विप्रतिपत्तिः।

जानामीत्याकारकसमूहालम्बनात्मको घटत्वधर्मघटितो यदा "अयं घट:" घटत्वेन घटमहं जानामीत्याकारकसमूहालम्बनज्ञानप्रामाण्यं पक्ष: तादृश समूहालम्बनज्ञानाऽ-प्रामाण्याऽग्राहिका यावती तादृश समूहालम्बनज्ञानग्राहिका सामग्री चक्षु: संयोगादिरूपा, तज्जन्या अयं घट: घटत्वेन घटमहं जानामीति समूहालम्बनात्मकव्यवसायविषयत्वं तादृशज्ञानप्रामाण्ये पक्षेऽस्तीति साध्यसमन्वय:।[1]

मिश्रमते तादृशो ग्रहोऽनुव्यवसाय:, स च अयं घट: इति व्यवसायात्मक-ज्ञानाऽव्यवहितोत्तर जायमानो घटत्वेन घटमहं जानामीत्याकारकमानसज्ञानात्मक:। एतन्मते अयं घट इति ज्ञानप्रामाण्यं यदि पक्षस्तदा अयं घट इति व्यवसायात्मक-ज्ञानग्राहिका सामंग्री आत्ममन: संयोगादिरूपा तज्जन्यो घटत्वेन घटमहं जानामीत्यनुव्यवसायात्मकग्रह: तद्विषयत्वं "अयं घट:" इत्याकारकव्यवसायात्मक-ज्ञानप्रामाण्ये वर्तते।

भट्टमते च सर्वमेव ज्ञानमतीन्द्रियम्, अत: घटत्ववति घटत्वप्रकारकत्व-विशिष्टमतीन्द्रियं घटज्ञानं तत्प्रामाण्यं पक्ष:। तादृशाऽतीन्द्रियज्ञानाऽप्रामाण्याऽग्राहिका यावती तादृशाऽतीन्द्रियज्ञानग्राहिका परामर्शादिघटितासामग्री तज्जन्यो ग्रह: इयं ज्ञातता घटत्ववति घटत्वप्रकारकज्ञानजन्ये "त्याकारकाऽनुमित्यात्मक:, तद्विषयत्वं पक्षे तादृशाऽतीन्द्रियज्ञानप्रामाण्येऽस्तीति साध्यसमन्वय:।

इदानीं तादृश प्रमात्वस्य नैयायिकमतसिद्धपरतोग्राह्यत्वव्यस्थापनाय मीमांसकमतसिद्धस्वतो ग्राह्यत्वस्य खण्डनं क्रियते-

**प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तित:।**[2]

ज्ञाननिष्ठं यत् तद्वद्विशेष्यकत्वावच्छिन्नं तत्प्रकारकत्वरूपप्रमात्वं तन्न स्वतो ग्राह्यम्, किन्तु अनुमानादिना परत एव ग्राह्यम्। विभिन्नदर्शनानां दार्शनिकानाञ्च मते ज्ञानगतं प्रामाण्यं भिन्न-भिन्नरूपेण गृह्यते।[3]

तत्र ज्ञानानामप्रामाण्यं स्वत: प्रामाण्यं परत इति सौगतानां राद्धान्त उपक्षिप्त:। प्रयत्नेनान्विष्यन्तोऽपि वयं नास्य वादस्य मूलं सौगतन्यायग्रन्थेषूपालभामहे। धर्मकीर्ते:

1. तर्कसंग्रहसर्वस्वम्।
2. कारिकावली-का0 136
3. प्रमाणत्वाप्रमाणत्वे स्वत: सांख्या: समाश्रिता:।
   नैयायिकास्ते परत: सौगताश्चरमं स्वत:।।
   प्रथमं परतस्त्वाहु: प्रामाण्यं वेदवादिन:।
   प्रमाणत्त्वं स्वत: प्राहु: परतश्चाप्रमाणताम्। स0 द0 सं0 पृ0 279

प्रमाणवार्तिकव्याख्यातारौ शान्तरक्षितकमलशीलौ च सर्वथाऽन्यादृशं मतं प्रतिपादयतः। न हि न्यायप्रस्थाने बौद्धाः ज्ञानस्य स्वाभाविकप्रामाण्यमभ्युपगच्छन्ति। तेषां मतं न खल्वेकान्तः स्वतः परतः पक्षयोर्निक्षेप्तुं शक्यम्, किन्तु विभज्यैव ऊहनीयम्। तथा हि- अर्थ-क्रियाज्ञानरूपं संवादज्ञानं स्वसंवेदनं तार्किकानुमतानुव्यवसायस्थानीयम्, अनुमानमाभ्यासिकप्रत्यक्षज्ञानं च स्वतः प्रमाणमितरत्परत इति सौगताः सङ्गिरन्ते।[1] एतदेव मतमार्हतैः स्वसिद्धान्तत्त्वेन प्रत्यपादि। प्राचीननैयायिकप्रस्थानधुरन्धरेण वाचस्पतिमिश्रेण तात्पर्यटीकायामयमेव पक्षः स्वसिद्धान्तत्त्वेनाङ्गीकृतः।[2] स्वसंवेदनं तु नैयायिकानामसम्मतम्। अतस्तत्स्थानेऽनुव्यवसाय एव प्रकटीकृतः। अन्यत्तु अविशिष्टम्। उदयनाचार्येण न्यायकुसुमाञ्जलौ[3] महता संरम्भेणप्रामाण्यमप्रामाण्यं चोभयमुत्पत्तौ ज्ञप्तौ च परत एव सिद्धमिति। गङ्गेशोपाध्यायेन औदयनमिवमतं सूक्ष्मेक्षिकया व्युत्पादितम्। न्यायप्रस्थाने वाचस्पतेर्मतं न केनापि नैयायिकेनाङ्गीकृतं दृश्यते। संक्षेपेण एते पक्षाः संभाव्यन्ते (1) उभे अपि प्रामाण्याप्रामाण्ये स्वत एव, (2) उभे अपि परतः, (3) प्रामाण्यं परतः, अप्रामाण्यं तु स्वत एवेति तृतीयः, (4) प्रामाण्यं स्वतः, अप्रामाण्यं परत इति चतुर्थः, (5) पञ्चमस्तु पक्षो बौद्धादिसम्प्रतिपन्नः। एतेष्वाद्यः पक्षो न युक्तिमनुरुणद्धि। तथाहि–एकस्यां ज्ञानव्यक्तौ परस्परविरुद्धं प्रामाण्यमप्रामाण्यं च न सम्भवदुक्तिकम्, तयोः परस्परपरिहारेणैवा-वस्थानात्। व्यक्तिभेदेन तयोरवस्थानङ्गीकारे नियामकाभावेन ''अन्यानपेक्षत्वे किं क्वेति न निरूप्यते।''।[4] अस्य च पक्षस्य युक्तिसम्पत् श्लोकवार्तिककारेण प्रदर्शिता। तस्याश्चानुपादेयत्वमपि- ''स्वतस्तावद् द्वयं नास्ति विरोधात्''[5] इति प्रतिपादितं सत्कार्यवादिनां सांख्यानामयं पक्ष इति सुचरितमिश्रेण प्रतिपादितं स्वव्याख्यायाम्। नह्यसतः प्रामाण्यस्य अप्रामाण्यस्य वा उत्पत्तिः संभावनेत्येतद्वयं ज्ञानस्य स्वाभाविकमिति हृदयम्। द्वितीयश्च पक्षो नैयायिकाभ्युपगतः परस्तात्प्रतिपादयिष्यते। तृतीयः पक्षोऽपि न सामञ्जस्यमियति। स्वभावतोऽप्रमाणभूतस्य न कथमपि प्रामाण्यं शक्योत्पादम्, स्वभावस्यानपायित्वात्। परतस्तस्य प्रामाण्ये उत्पद्यमाने द्वितीयस्यापि स्वतः प्रामाण्याप्रामाण्यानुयोगे दोषस्य दुष्परिहरत्वात्। तथाहि–यदप्रमाणभूतं तत् स्वाङ्गमेव

1. श्लोक वा0 श्लोक 37
2. तदेव-श्लोक 35
3. न्यायकुसुमाञ्जलिः-च.स्त.।
4. श्लोक वा0 श्लोक 47
5. श्लोक वा0 श्लोक 65

धारयितुमसमर्थे कथं परस्य प्रामाण्यमुत्पादयेत्। परतस्तस्य प्रामाण्ये उपजनितेऽनवस्थामपरिहरणीयं स्यात्। चतुर्थस्तु पक्षः स्वतः प्रामाण्यवादिनाम्। जन्यज्ञानस्योत्पत्तौ प्रामाण्यं तु स्वकारणादेवासाध्यते। अत्र चेयं स्वतस्त्वनिरुक्तिः-विज्ञान सामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वं नाम। दोषस्त्वागन्तुकः।[1] तत्प्रयोज्यं ज्ञानस्याप्रमात्वं दोषरहिता स्वाभाविकी विज्ञानसामग्री प्रमां जनयति। कारणदोषाभावे ज्ञानस्य प्रमात्वमौत्सर्गिकम्। तथा चोक्तं भट्टपादैः–

**स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।**
**नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते।**[2] इति।

न च दोषाभावस्यापि प्रमाकारणत्वेन न ज्ञानसामग्रीमात्रजन्यत्वं प्रमाया इति वाच्यम्, दोषाभावस्तु विरोध्यप्रमाप्रतिबन्धकत्वेनोपक्षीणसामर्थ्येनान्यथा सिद्धकारणतां विभृयात्, दोषस्याप्रमाहेतुत्वे तदभावस्य प्रतिबन्धकाभावविधया अन्यथासिद्धत्वम्। अत एव ज्ञानकारणगुणानामपि प्रमाहेतुत्वं नैयायिकैर्नापादनीयम्, गुणानां दोषाभावसम्पादनेनैवान्यथा सिद्धत्वात्। तथा चोक्तं भट्टपादैः–

**तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः।**
**अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः।।**[3] इति।

दोषाभावादप्रामाण्यद्वयस्य मिथ्यात्वसंशयत्वलक्षणस्यासत्वमेव जायते। तेन ज्ञानसामग्रीमात्रप्रयुक्तत्त्वलक्षणप्रमास्वभावरूप उत्सर्गो नापोदितो भवतीति भट्टवार्तिकार्थः।

अत्र प्रसङ्गेन सौगतानामपि सम्प्रतिपत्तिरुल्लेखमर्हति। ज्ञानस्य मेयबोधात्मिका शक्तिः स्वकारणादेवोपजायते। एतदेव च प्रामाण्यस्योत्पत्तौ स्वतस्त्वम्। तथा चोक्तम्–

**अथ शक्तिः स्वहेतुभ्यः प्रमाणानां प्रजायते।**[4]
**तदत्र न विवादो नः को ह्यनंशस्य वस्तुनः।**
**स्वहेतोरुपजातस्य शक्तिं पश्चात्प्रकल्पयेत्।।**[5] इति

यदेव ज्ञानकारणं तदेव प्रमाणकरणमित्यत्र मीमांसकादिभिः सौगतस्यैकवाक्यता।

1. तत्त्वसंग्रहः-2827
2. तत्रैव-2828
3. न्या० रत्ना० पृ० 55
4. न्याय. रत्ना.।
5. तदेव।

नैयायिकास्तु कारणगतगुणानामेव ज्ञाने प्रमात्वप्रयोजकत्वमभिमन्यन्ते। तत्र च को वा गुणः को वा दोषाभावरूप एवेति नेषत्करं विवेचनं संभवति। गुणैर्दोषाभावः सम्पाद्यते। दोषस्तु प्रतिबन्धकः। तदपनयनेन गुणस्य नान्यथासिद्धत्वं शङ्कनीयम्। दोषाभावः प्रतिबन्धकाभाव एव। स च कार्यमात्रं प्रति हेतुः।[1] तस्माद् गुणं वा दोषाभावं वान्तर्भाव्यैव ज्ञानसामग्र्या प्रमाहेतुत्वम्, न तु तदनपेक्ष्यैवेति ज्ञानसामग्र्यतिरिक्तगुणदोषान्यतरापेक्षायां न प्रमाया उत्पत्तौ स्वतस्त्वमिति नैयायिकानामाशयः। अनयोः कतरः पक्षः समीचीन इति न सर्ववादिसम्प्रतिपत्या शक्यनिर्णयः। कुमारिलस्तु एवं स्वाशयमाविष्करोति-गुणकृतं ज्ञानस्य प्रामाण्यं दोषकृतं चाप्रामाण्यमिति मते गुणदोषविवर्जितकारणजन्यं ज्ञानं न प्रमाणं न वाऽप्रमाणमिति निःस्वभावमेव प्रसज्येत। "सर्वं हि सज्ज्ञानं राशिद्वये शक्यमन्तर्भावयितुम्-प्रमाणमप्रमाणं वेति। तदुभयरहितं ज्ञानं किमात्मकं स्यादिति"[2] न च गुणदोषयोरन्यतरेणावश्यं भवितव्यं ज्ञानसामग्र्यामिति वाच्यम्, तथा सति ज्ञानसामग्र्यविनाभावी गुण उत्पत्तौपरतः प्रामाण्यपक्षमपहस्तयेत्। दोषस्यापि तथात्वेऽप्रामाण्यस्याप्युत्पत्तौ परतस्त्वं दुरुपपादम्। यद्येवं सति तयोर्ज्ञानसामग्रीबहिर्भूतत्त्वमभ्युपगम्यते तदा गुणदोषवर्जितकारणेन जन्यं ज्ञानं नापह्नोतुं शक्यम्। अतस्तदवस्थ एव निःस्वभावत्वदोषः, नव्यनैयायिकानां मते नेदमनिष्टापादनमुपपन्नम्, प्रमाणाप्रमाणव्यतिरिक्ततृतीयराशिसंभवात्। तथा चोक्तम्-

तत्प्रमा नाऽप्रमा नापि भ्रमः स्यान्निर्विकल्पकम्।[3]

अयं तु विशेषो मीमांसकमतस्य निर्विकल्पकप्रत्यक्षस्यापि प्रमाणाप्रमाणान्यतर-कोटावन्तर्भावः। बौद्धानामद्वैतवेदान्तिनां च निर्विकल्पकस्यैव प्रामाण्याभ्युपगमात् सविकल्पकस्याप्रमात्वप्रतिज्ञानात् तदुभयबहिष्कृतस्य खपुष्पायमाणत्वात्। प्रतिबन्धकाभावस्य कारणत्वं वा कारणतावच्छेदकत्वेन दण्डत्वादिकघटेऽन्थासिद्धत्वं वेति स्वतः परतः प्रामाण्यवादिनां स्वस्वमताभिनिवेशेन विवदमानानां को वा विनिगमको भवेदृते स्वानुभवात्।

अथ ज्ञप्तिपक्षं विचारयितुं प्रक्रमामहे। नैयायिकानां मते प्रामाण्यस्य ज्ञप्तिरुत्पत्तिवत्परसाध्यैव। सर्वत्र च ज्ञाने प्रामाण्यग्रहणं समर्थप्रवृत्तिजनकत्वलिङ्गेनानु-मानेनैव सम्पाद्यते। ज्ञप्तौ स्वतस्त्वनिरुक्तिः-"ज्ञानप्रामाण्यं तदप्रमाण्याग्राहकयावज्ज्ञान-ग्राहकसामग्रीग्राह्यम्"[4] इति गङ्गेशोपाध्यायेनोपन्यस्ता। यदि ज्ञानग्राहकेणानुव्यवसायेन

1. भाषापरिच्छेदः-कि.टी.।
2. न्या.द. में अनुमान-उमेशचन्द्र मिश्र।
3. कारिकावली-भा.सं.135
4. त.चि.-प्रथमा विप्रतिपत्तिः।

साक्षिणाऽनुमानेन वा तद्गतं प्रामाण्यमप्यवश्यं ग्राह्यं भवेत्तदा स्वग्राहकसामग्रीग्राह्यत्वरूपं स्वतः प्रामाण्यं ज्ञानमात्रस्य भवेदेव। ज्ञानं ज्ञातं सत् प्रमाणत्वेन ज्ञायत एवेति स्वतस्त्ववादिनां सामान्यतः प्रतिज्ञा। अत्रोदयनः एवं प्रत्यवतिष्ठते-"प्रामाण्यं परतो ज्ञायतेऽनभ्यासदशायां सांशयिकत्वात्, अप्रामाण्यवत्। यदि तु स्वतो ज्ञायेत कदाचिदपि प्रामाण्यसंशयो न स्यात्, ज्ञानत्वसंशयवत्, निश्चिते तदनवकाशात्" इति। अनभ्यासदशोत्पन्नज्ञानप्रामाण्यं न स्वाश्रयग्राहकसामग्रीमात्रग्राह्यमित्युदयनस्य पक्षः। न्यायमते ज्ञानमनुव्यवसायेन गृह्यते। तेनापि यदि तत्प्रामाण्यमपि गृहीतं स्यान्न कदापि तद्विषये संशयः प्रादुर्भवेत्। संशयश्चानुभवसिद्ध एवानभ्यासदशोत्पन्ने ज्ञाने। तथा हि-इदं रजतमिति ज्ञाने रजतत्वं प्रकारः पुरोवर्त्ति धर्मी च ज्ञानग्राहकेणानुव्यवसायेन गृह्यत इत्यत्र न विवादः, किन्तु विशेष्यस्य यद्रजतत्त्ववैशिष्ट्यं तदनुव्यवसायस्य विषयो न वेति विप्रतिपत्तिः। संशयदर्शनाद्रजतत्त्वप्रकारकज्ञानस्य रजतत्त्ववद्विशेष्यकत्वे नानुव्यवसायस्य सामर्थ्यमिति नैयायिकानामाशयः। स्वतस्त्ववादिनस्तु व्यवसायविषयभूतं धर्मधर्मिवैशिष्ट्यमनुव्यवसायस्य तद्ग्राहकविषयो विशेष्यवदित्यवगच्छन्ति। अत्र रजतत्त्वादिवैशिष्ट्यमनुव्यवसायस्य न कदापि विषय आहोस्विद् व्यवसायविषयतया तद्विषयकत्वेऽपि न स्वातन्त्र्येण तद्विषयकत्वं बहिरर्थे मनसः स्वातन्त्र्याभावात्। अस्मिन् विकल्पद्वये नाद्यः कल्पः स्वतस्त्ववादिनां सम्प्रतिपन्नः, विषयनिरूप्यं हि ज्ञानमिति विषयमविषयीकृत्य तज्ज्ञानस्य ग्रहणमसंभवतीत्यनुव्यवसायेन व्यवसाये गृह्यमाणे तद्विषयस्यापि ग्रहणमवर्जनीयम्। किञ्च, धर्मधर्मितद्वैशिष्ट्यानां व्यवसायेन विषयीकृतानां व्यवसायविषयकानुव्यवसायेनापि ग्रहणे न काप्यनुपपत्तिः। धर्मधर्मिरूपांशद्वयस्यैव ग्रहणं न तु वैशिष्ट्यस्येति नैयायिकानां सिद्धान्तोऽनुग्राहकतर्काभावाद्बाधकसत्वाच्च नाङ्गीकर्तव्यः। तथाहि- रजतं जानामीत्यनुव्यवसाये रजतरजतत्त्वयोः स्वरूपेण सम्बद्धतयैवभाने पुरोवर्तिनं रजतत्त्वं च जानामीति समूहालम्बनज्ञानाद्विशेष्यविशेषणभावाग्रहणस्य तुल्यत्वान्न किमपि विषयतो वैलक्षण्यं स्यात्।

बौद्धानां तु पञ्चम एव पक्ष इति। ते खलु स्वसंवेदनस्यार्थक्रियाज्ञानस्यानुमानस्याभ्यासदशोत्पन्नज्ञानस्य च स्वतः प्रामाण्यमङ्गीकुर्वन्ति। यच्च संदेहविपर्ययविषयीभूतं ज्ञानं तत्तु परतः प्रामाण्यम्। न चानवस्थाप्रसङ्गो वस्तुसंवादस्य स्वतः प्रामाण्यात्, प्रत्ययान्तरानपेक्षणात्तत्रैव प्रामाण्यस्य परिच्छित्तेः। उक्तञ्च-

---

1. मी0 श्लोक वा0 परि।

अतश्च प्रथमं ज्ञानं तत्संवादमपेक्षते।
संवादेनापि संवादः पुनर्मुक्तस्तथैव न॥
भ्रान्तिहेतोरसद्भावात् स्वतस्तस्य प्रमाणता।
प्रथमस्य तथाभावे प्रद्वेषो भ्रान्तिसंभवात्॥ इति।

अयं च विभज्य स्वतःप्रामाण्यवादो मीमांसकपक्षान्नातीव भिद्यते। कुमारिलस्यापि संशयविपर्ययशङ्कानास्कन्दितं विज्ञानमेव प्रमाणम्। यत्रापि दूरत्वादिदोषवशादप्रामाण्यशङ्का तत्रापि प्रत्यासत्तिगमनादिना तस्या निरासे विज्ञानं स्वत एव प्रमाणं भवति। न च प्रयत्नेनान्विष्यापि यदि बाधो नोपलभ्यते तदा न दोषशङ्कया ज्ञानस्य प्रामाण्यविरतिः।

दोषज्ञाने त्वनुत्पन्ने न शङ्क्या निष्प्रमाणता।[1]
एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।
प्रार्थ्यते तावदेवैकं स्वतः प्रामाण्यमश्नुते॥[2]

कुमारिलः संवादस्य प्रामाण्यग्राहकत्वं नानुमन्यते। तथाहि–यदि सजातीयेन संवादस्तदा प्रथमज्ञानान्नोत्तरस्य कोऽप्यतिशयः। विजातीयेन तु संवादो निष्फलः। अथ दूराद् दृष्टस्यार्थस्य संवादार्थे तत्समीपप्रत्यासत्त्या निर्णयो दृढतरो भवतीति चेन्न, "अप्रतिमविशेषप्रमित्सया तत्र प्रत्यासत्तिर्न पुनः प्रमितस्य संवादायेति।"[3] न च विजातीयेन संगतिः पूर्वज्ञानस्य प्रामाण्यं बोधयितुं क्षमते। नहि गन्धज्ञानेन रूपज्ञानस्य प्रामाण्यमवधार्यते तथाहि–जलविषयं लोचनज्ञानं रूपमात्रग्राहि। स्नानाद्यर्थक्रियाज्ञानं तु स्पर्शमात्रविषयं कथं रूपज्ञानस्य प्रामाण्यं शोधयेदित्याशङ्कायामाह–यद्यप्यवयविद्रव्यं न बौद्धमते अस्ति, तथाप्येकसन्तानवर्तिनो विषयद्वयस्याविनाभावादन्यालम्बनमपि ज्ञानमन्यविषयस्य ज्ञानस्य प्रामाण्यं साधयिष्यति। न हि तौ रूपस्पर्शौ विनिमार्गेण वर्तेते "एकसामग्र्यधीनत्वात्"[4] न च क्षणिकत्वात्सर्वभावानां पूर्वज्ञानपरिगृहीतस्य रूपस्याविनाभावो स्पर्शेनोत्तरज्ञानेन विषयीकृत इति कथमविनाभावप्रणालिकयापि संवादः। सन्तानैक्याध्यवसायाद्रूपादिक्षणानामैक्याध्यवसायेन संवादः सर्वलोकसिद्ध इति न काप्यनुपपत्तिरुत्प्रेक्षणीया।

---

1. मी० श्लोक वा० 61
2. तदेव।
3. न्या० र० पृ० 68
4. तत्त्वसंग्रहे।

इदमत्रावधेयं यत्प्रमाणप्रमेयव्यवहारो लोकव्यवहारानुरोधेन संवृत्यैवावकल्पते। उक्तं च दिङ्नागेन-"तथा चानुमानानुमेयव्यवहारोऽयं सर्वो बुद्धिपरिकल्पितो बुद्ध्यारूढेन धर्मधर्मिभेदेनेति।[1] अर्थक्रियासंवादस्तु न पारमार्थिकप्रामाण्यस्य गमकः। उक्तं च खण्डनखण्डखाद्ये-सामान्यविवक्षायां संवादस्य भ्रान्तावपि संभवात्। रजतज्ञान-विषयस्यापि पुरोवर्तित्वाद्याकारेणार्थक्रियाकारित्वमस्ति। प्रतीयमानरूपेणार्थक्रियाकारित्वं विवक्षितमिति चेन्न दुरवधारणत्वात्। यथा रजतं विनापीदं रजतमिति भ्रान्तिज्ञानं संभवति, एवमर्थक्रिया व्यतिरेकेणापि तद्दर्शनसंभवान्न तन्मात्रे पूर्वज्ञानस्य तथात्वावगतिः। अर्थक्रियाप्रमितिरभिधित्सितेति चेत्, साध्या विशिष्टो हेतुः, प्रमितेरेव निरूपणीयत्वात्। एतेन प्राप्त्यादियोग्यताऽविसंवादार्थ इत्यपि निरस्तम्। दुराबाध इव चायं धर्मकीर्तेः पन्था इत्यवहितेन भाव्यमिहेति।[2] प्रवृत्तियोग्यतायाः सफलप्रवृत्तिनिर्णेयत्वा-त्तदभावेऽनिश्चय एव। मन्दबुद्धिमोहमात्रप्रयोजनतया प्रणीतमिदं लक्षणं धर्मकीर्तिनेति विवृतं विद्यासागर्याम्।[3] अबाधितानुभूतिः प्रमेत्यपि न सम्यक्। तदानीं बाधविरहस्यातिप्रसंजकत्वात्। भ्रान्तपुरुषस्य बाधाभावेऽपि पुरुषान्तरस्य तत्संभवात्। सर्वजनबाधविरहस्यासर्वज्ञेनानिरूपणीयत्वात्।

अर्थक्रियासमर्थः परमार्थसदिति धर्मकीर्तिनोक्तम्। तदपि न क्षोदक्षमम्। कार्यकारणभावस्य दुरवधारणत्वात्। न चान्वयव्यतिरेकाभ्यां तन्निर्णयः। अन्वयव्यतिरेकज्ञानमेव दुर्निरूपम्। केनान्वयव्यतिरेकौ गृहीतौ? न प्रत्येकं बीजाङ्-कुरज्ञानाभ्यां स्वस्वविषयमात्रग्रहणव्यापृत्वात्। न च क्रमेण ग्रहणं कार्यकारणभावस्य। क्रमोऽप्यशक्यग्रहः। कार्यकाले कारणं नास्ति। कारणकाले कार्यं न संजातम्। ज्ञानस्य स्वज्ञानेन वर्तमानतामात्रग्रहणम्। अङ्कुरराहित्यं पूर्वत्वं बीजस्येति चेत्, अन्येषामपि तद्दर्शनात्। तस्मान्नाध्यक्षात्कार्यकारणताग्रहः। अतः खल्वनुमानादपि न संभवति, अनुभवप्रामाण्याधीनप्रामाण्यकत्वात्तस्य। तावता कार्यकारणभावस्य प्रत्यक्षत्वं दुर्घटम्, अतस्तत्समुत्थितस्मरणेनापि नासौ शक्यनिर्णयः। एतत्सर्वमनुपपत्त्यादिकमनुसन्धाय धर्मकीर्तिनोक्तम्-"संवृत्यास्तु यथा तथा"[4] विवृतं च मनोरथनन्दिना "सांवृतमपि कार्यकारणभावमाश्रित्य साध्यसाधनादिव्यवहारसंवादसंप्रत्ययात् समाप्तो लोकव्यवहारः।

---

1. प्रमाणवार्त्तिकम्।
2. तदेव, पृ० 442
3. तदेव।
4. आचार्यधर्मकीर्तिः।

सांव्यावहारिकं च प्रमाणं तावतैव सुस्थम्''[1] इति। अद्वैतवेदान्तिनामपि व्यावहारिकोऽयं प्रमाणप्रमेयव्यवहारः। अनेनैवाशयेनोक्तं केनाप्यभियुक्तेनसौगताज्ञानानामप्रामाण्यं स्वाभाविकं मन्यत इति। उदयनेनाप्यात्मतत्त्वविवेके ''किमार्द्रकवणिजो वहित्रचिन्तये''[2] इति व्यावहारिकत्वमेव प्रामाण्यस्यासूत्रितमित्यलम्।

1. मनोरथनन्दिः।
2. आत्मतत्त्वविवेकः।

# तृतीयोऽध्यायः

## सांख्ययोगाभिमतापवर्गस्वरूपम्

अधुना दर्शनेषु दर्शनकारेषु च मध्ये स्वस्वाभिमतप्रमाणैः यस्य यत्साधयितुं शक्यमात्मैक्यम्, आत्मनानात्वं वा, आत्मनोरैक्यं भेदो वा, आत्मनः स्वाभाविकं भोक्तृत्वमभोक्तृत्वं वा तदनुसारेण तेन मोक्षस्वरूपमङ्गीक्रियते। तत्र सांख्ययोग दर्शने कीदृशं मोक्षस्वरूपमभिमतं तदिदानीं निरूप्यते।

यद्यपि न सर्वे प्राणिनः मुमुक्षवो भवन्ति तथापि ये तेषु मुमुक्षवस्तेषां मोक्षसाधनं जिज्ञासमानानां सामान्यतो विचारः ईदृशः स्यात्-दुःखप्रहाणार्थं यतमानैश्च कैश्चिद्दुःखस्य सोढुमशक्यत्व औषधोपचारैर्मोहमुत्पाद्य दुःखसंदेवनं प्रतिबध्यते। अन्यैश्च दुःखसाधनमन्विष्य तत्परिहारोपायश्चिन्त्यते। तत्र औषधसेवनादिना दुःखसंवेदनाभावेऽपि न सर्वथा दुःखनिवृतितस्तत्र जायते इति तदपेक्षया दुःखसाधनी-भूतवस्तुपरिहार एव ज्यायान्। यावच्च दुःखसाधनं न ज्ञायते तावत्कालपर्य्यन्तं तत्परिहारोऽपि न संभवति अतः मुमुक्षुभिः दुःखसाधनमवश्यं ज्ञातव्यं भवति।

दुःखानि च लोके प्राणिभिः नानाविधानि अनुभूयन्ते। अप्रियवस्तुसम्बद्धं दुःखं जायते। तत्रेकस्मिन्नप्रियं वस्तुनि परिहृतं दुःखसाधनीभूतं वस्त्वन्तरं न परिहृतं भवति। अतः यद्वस्तु नानाविधदुःखसाधनं स्यात्तत्सर्वं परिहर्तव्यम्। तत्रैकविधस्यापि दुःखस्येदं साधनमिति न निश्चयेन ज्ञातुं शक्यते किमुत नाना विधानां दुःखानाम्। यतो यदेकस्य दुःखसाधनं तदन्यस्य सुखसाधनं भवति। तथा यदेकस्य दुःखसाधनं तत्तस्यैव कालान्तरे देशान्तरे च सुखसाधनं भवति। तथा च नानाविधानां दुःखानां साधनमिदमेव इति सूक्ष्मतरदृष्ट्यैव विचारणीयं भवति।

तत्र शब्दस्पर्शादिगुणकेषु भौतिकेषु वस्तुषु इन्द्रियसम्बद्धेषु कानिचिद्दुःखं जनयन्ति कानिचित्सुखम्। तत्र सुखसाधनीभूतस्य दुःखसाधनीभूतस्य च वस्तुनः किं कारणं तस्य कारणस्य च किं कारणमित्येव मूलकारणान्वेषणायां यदि तयोर्मूलकारणभिन्नमालोच्यते ततो दुःखोत्पादकं सुखोत्पादकं च स्वरूपं मूलकारणस्यैवेति निश्चयः कर्तुं शक्यते। यदि च तयोरेकमेव कारणमालोच्यते ततो

मूलकारणस्य दुःखोत्पादकं वा न किमपि स्वरूपं, किं तु तस्मात्कार्योत्पादनपरम्परायां मध्ये एव कस्मिन्श्चिद् वस्तुनि केनचिन्निमित्तेन दुःखोत्पादकं सुखोत्पादकं वा स्वरूपमुत्पन्नमिति निश्चयः स्यात्। अतः जगति दृश्यमानानां भूतभौतिकानां वस्तूनां मूलतत्वान्वेषणायां निसर्गत एव मुमुक्षूणां जायते। तथा जगति दृश्यमानेषु अखिलेषु वस्तुषु इमानि दुःखसाधनानि इमानि च सुखसाधनीति द्वैराश्येन तानि व्यवस्थापयितुं न शक्यन्ते। तदुक्तं केनचिद् विदुषा–

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
कामिनीकनकेभ्योऽपि न सुखं शान्तचेतसाम्।।

तथा च सुखं दुःखं वा वस्तुमात्रतन्त्रम्, किन्तु भोक्तृपुरुषतन्त्रमपि भवति। अतश्च सुखोत्पादकं दुःखोत्पादकं च किञ्चिद् विशेषस्वरूपं भोक्तृभूतेषु पुरुषेष्वप्यावश्यकम्। तच्च अनादिकालमारभ्यैव वर्तते उत मध्य एव केनचिन्निमित्तेन उत्पन्नमिति निर्णयार्थं मुमुक्षुणा पुरुषेण भोग्यवस्तुन इव स्वस्यापि मूलस्वरूपमीदृशमित्यवश्यं ज्ञातव्यं भवति। अतश्चेदं सिद्धं भवति यत् जगत्यस्मिन् मुमुक्षूणां तत्वजिज्ञासायां स्वाभाविकी प्रवृतिर्भवति। तत्वज्ञानानन्तरं मुक्तिर्भवतीति प्रायः सर्वेषामेव दार्शनिकानामैकमत्यम्।

सांख्यदर्शने च अनारब्धविपाकानां कर्मणां तत्वज्ञानाग्निना बीजभावे दग्धे सति प्रारब्धविपाकानां कर्मणां तूपभोगेन क्षये सति शरीरविनाशे प्राप्ते प्रधानस्य कृतप्रयोजनत्वात् तं विज्ञपुरुषं प्रतिनिवृत्तौ ऐकान्तिकमवश्यम्भावि, आत्यन्तकमविनाशीत्युभयं दुःखत्रयविनाशरूपं मोक्षं पुरुषः प्राप्नोति। तत्र हि–

धर्मेण गमनमूर्ध्वं गमनमधस्तात् भवत्यधर्मेण।
ज्ञानेन चापवर्गो विपयर्ययादिष्यते बन्धः।।[1]
प्राप्ते-शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति।।[2]
"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।[3]
यद्वा तद्वा तदुच्छित्तिः पुरुषास्तदुच्छितिः पुरुषार्थः।।[4]

---

1. सां0 का0 का–44
2. तदेव, 68
3. सांख्यसूत्रम्–1.1.1
4. तदेव–6.70

एषां त्रिविधदु:खानां याऽत्यन्तनिवृत्ति: स्थूलसूक्ष्मसाधारण्येन नि:शेषतो निवृत्ति: सोऽत्यन्त: परम: पुरुषार्थो मोक्ष इति। जीवन्मुक्तिदशायाञ्च प्रारब्धकर्मफलातिरिक्तानां दु:खानामनागतावस्थानां बीजाख्यानां दाह:, विदेहकैवल्ये तु चित्तेन सह विनाश इत्यवान्तरविशेष इति। कर्मनिमित्तो वा अविवेकादिनिमित्तो वा भवतु प्रकृतिपुरुषयोर्भोग्यभोक्तृभाव:। सर्वथाऽप्यनादितया दुरुच्छेदस्य तस्योच्छेद: परमपुरुषार्थ:।[1]

न दु:खविशेषाणां निवृत्तिरभिमता, किन्तु दु:खसजातीयानाम्। भविष्यतामपि हि निवृत्तिरत्यन्तशब्दार्थ:। धर्मार्थकाममोक्षाणां पुरुषार्थत्वम्, न तु त्रयाणामत्यन्तत्वम्, क्षयित्वाद् विषयजसुखत्वाद्वा। मोक्षस्य तु न तथा, प्रकाशरूपत्वान्नित्यत्वाच्च। अत उक्तम्–"अत्यन्तपुरुषार्थ:" इति। यद्वा तद्वा इति कर्मक्षयाद्वा ज्ञानाद्वा अन्यतो वा इति स्व-स्वामिसम्बन्धोच्छित्या संसारोच्छित्ति: पुरुषार्थ: मोक्ष:।

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।**
**पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृति:।।**[2]

पातञ्जलयोगदर्शने च परमपुरुषार्थरूपमोक्षप्रकार:–

**"तदभावात् संयोगाभावो हानं तद्दृशे: कैवल्यम्"**[3] इति।

"पुरुषार्थशून्यानां गुणानां प्रतिप्रसव: कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति।[4]

तस्यादर्शनस्याभावाद्बुद्धिपुरुषसंयोगाभाव:, आत्यन्तिको बन्धनोपरम इत्यर्थ:। एतद्धानम्, तद्दृशे: कैवल्म्–पुरुषस्यामिश्रीभाव: पुनरसंयोगो गुणैरित्यर्थ:, दु:खकारणनिवृत्तौ दु:खोपरमो हानम्, तदा स्वरूपप्रतिष्ठ: पुरुष:।[5]

कृतभोगापवर्गाणां पुरुषार्थशून्यानां य: प्रतिप्रसव: कार्यकारणात्मनां गुणानां तत्कैवल्यम्, स्वरूपप्रतिष्ठा=पुनर्बुद्धिसत्वानभिसम्बन्धात्, पुरुषस्य चितिशक्तिरेव केवला, तस्या: सदा तथैवावस्थानं कैवल्यमिति।[6]

"हेयम्" इति। तस्यादर्शनस्याभाव:=दर्शनेन नाश: सत्यज्ञानस्यैव जनिष्यमाणता तत: संयोगस्याप्यभावोऽत्यन्ताभाव: साततिकोऽसंयोगो न पुन: संयोग इत्यर्थ:,

1. सा0 प्र0 भाष्यम्
2. सां0 का0 का0 59
3. यो0 सू0–साधनपाद:–25
4. यो0 सू0–कैवल्यपाद:–34
5. व्यासभाष्यम् सू0 3.25
6. तदेव, सू0 34

पुरुषस्य बुद्ध्या सहामिश्रीभावः=महदादेरव्यक्तता प्राप्तिरित्यर्थः, ततश्च दृशेः कैवल्यम्=केवलता द्वैतहीनता।[1]

कृतकृत्यानां गुणानाम्=गुणकार्याणाम्, प्रतिप्रसवः=स्वकारणे शाश्वतः प्रलयः कैवल्यम्। कार्यकारणात्मनां गुणानाम्=महदादिप्रकृतिविकृतीनां त्रिगुणोपादानानाम्, स्वरूपप्रतिष्ठाऽपि चितिशक्तिर्बुद्धिसम्बन्धात् सद्वैताबुद्धिप्रतिष्ठेव प्रतिभासते, बुद्धिप्रतिप्रसवाद् यदाऽद्वैता केवला वेति वाच्या भवति, न पुनर्बुद्ध्युत्थानादकेवलेति च वाच्या स्यात्तदा कैवल्यं पुरुषस्येति।[2]

तदेवं व्यूहद्वयमुक्त्वा तृतीयव्यूहाभिधानाय सूत्रमवतारयति "हेयं दुःखम्" इति। "तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम्।"[3] इति सूत्रं व्याचष्टे–"तस्येति"। अस्ति हि महाप्रलयेऽपि संयोगाभावः, अत उक्तम्–आत्यन्तिक इति। दुःखोपरमो हानमिति पुरुषार्थता दर्शिता शेषमतिरोहितम्।[4]

कैवल्यरूपावधारणपरस्य सूत्रस्यावान्तरसङ्गतिमाह–"गुणाधिकार" इति। "पुरुषाधिशून्यानां गुणानां प्रतिप्रसवः चितिशक्तिरिति। कृतकरणीयतया पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः=स्वकारणे प्रधाने लयः तेषां कार्यकारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्काराः मनसि लीयन्ते, मनोऽस्मितायाम्, अस्मिता लिङ्गे लिङ्गमलिङ्गे इति योऽयं गुणानां कार्यकारणात्मकानां प्रतिसर्गस्तत्कैवल्यम्=यं कञ्चित्पुरुषं प्रति प्रधानस्य मोक्षः, स्वरूपप्रतिष्ठा पुरुषस्य वा मोक्ष इत्याह–"स्वरूपप्रतिष्ठा" इति, अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिर्न चासौ मोक्ष इत्यत आह "पुनः"[5] इति।

तस्या अदर्शनरूपाया अविद्याया अभावाद् अभिभवान् सुवर्णे पृथिव्यभिभूत तैजसभास्वरत्ववदिति, संयोगाभावे तु आत्यन्तिकबन्धनं परमो हानम्, तदेव हानं दृशेरात्मनः कैवल्यम्, गुणैः पुनरसङ्गत्वन्वेति सूत्रार्थः, व्यूहद्वयं संसारोऽविद्या चेति। तृतीयो मोक्षः, हेयञ्च दुःखमिति, यावद् वासनाराहित्यमात्यन्तिकता।[6]

---

1. भास्वती–सू0 25
2. भास्वती–सू0 34
3. पात0 यो0 सू0 2/25
4. तत्ववैशा0 टीका0 सू0 2/25
5. तदेव–कैवल्यपादः–34
6. पात0 रह0 2.25

"विमुक्तश्च विमुच्यते" इति, "स आत्मा कस्मिन् प्रतिष्ठित" इति च श्रुतिस्मृती आश्रित्य मुक्तिस्वरूपं वक्तुं-गुणाधिकारेति, भोगापवर्गौ तदर्थानां क्रम आरम्भः सृष्टिः, तस्य समाप्तौ अत्यन्ताभावे कैवल्यमिति, "पुरुषार्थ एव हेतुर्न केनचित् कार्यते, कारणम्" इत्युक्तिमाश्रित्याह–पुरुषार्थशून्यानामिति, प्रतिप्रसवो बन्ध्यता यस्तदीयात्मादृष्टाऽकृष्टानां गुणानां स एव कैवल्यम्, भोगात्यन्ताभावो महत्त्वाद्युपाधिनिवृत्तौ स्फटिकस्येव स्वच्छतेत्याह–स्वरूपप्रतिष्ठेति। अविद्याकृता बुद्ध्यादौ भोगादिहेतुका चितिच्छायापत्तिलक्षणा तन्निवृत्तौ या चितिरिति सूत्रार्थः, तत्कैवल्यमिति, अविद्योच्छित्तौ पुनर्दुःखात्यन्ताभाव इति।"[1]

तदेव हेयहेयहेतुरूपं व्यूहद्वयं व्याख्याय तृतीयव्यूहस्य सूत्रमवतारयति–हेयमिति। निमित्तमविद्या, "तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम्"[2] तस्या अविद्याया अभावाद् विनाशाद् बुद्धिपुरुषसंयोगनिवृत्तिद्वारा द्रष्टृदृश्यसंयोगनिवृत्तिर्दुःखहान- मित्युच्यते, कार्यकारणयोरभेदोपचारात्। तस्य पुरुषार्थत्वस्योक्तम् "तद्दृशे-कैवल्यम्" इति। तदेव च हानं पुरुषस्य कैवल्यमित्यप्युच्यते इत्यर्थः। इममेव सूत्रार्थं भाष्यकारः प्रकारान्तरेणाह–तस्येति। बुद्धिपुरुषसंयोगशब्देन कार्यकारणाभेदाद्दृश्यसंयोगोऽपि ग्राह्यः प्रलयकालीनवियोगव्यावर्तनायात्यन्तिक इति विशेषणं बन्धोपरमस्य, एतद्धानं गुणैः बुद्धिगुणैः दुःखादिभिः पुनरसंयोगः प्रतिबिम्बरूपेणासम्बन्धः। स एव च दुःखभोगनिवृत्तिरूपः स्वतः पुरुषार्थरूप इति भावः। सूत्रस्य फलितार्थमाह–दुःखेति हानमित्यन्तेन, व्याख्याते कैवल्यशब्दार्थे "तदा द्रष्टुः स्वरूपेऽवस्थानम्"[3]

यदि पुरुषस्य संसारोच्छेदः पृच्छ्यते तदा कुशलस्यास्ति नेतरस्येति प्रश्नवाक्यं विकल्प्य प्रतिवचनं संभवतीत्युत्तरसूत्रमवतारयति–गुणाधिकारेति। गुणाधिकारः परिणामविशेषः, तत्क्रमसमाप्तौ कैवल्यमिति, ततः "कृतार्थानाम्" इत्यादिसूत्रेण तात्पर्यतः प्रोक्तं तस्य कैवल्यस्य स्वरूपमवधार्यते, पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति,[4] कृतकर्तव्यतया पुरुषार्थशून्यानां गुणानां पुरुषोपकरणानां लिङ्गशरीरात्मकानां प्रतिप्रसवः स्वकारणेऽत्यन्तविलयः स बुद्धेः कैवल्यम्। एतदेव च प्रधानस्यापि ज्ञानिपुरुषं प्रति कैवल्यमुच्यते, तेन पुरुषेण सह पुनरसंयोगात्, यत्तु धर्मधर्म्यभेदाच्चितिशक्तिः स्वरूपिणी स्वरूपप्रतिष्ठा

1. तदेव-कैवल्यपादः-34
2. पात0 सू0 2/25
3. पात0 सू0 1/3
4. पात0 सू0 4/34

बुद्धिसत्त्वोपाधिकरूपशून्यता रूपा जपाऽपाये स्फटिकस्वरूपप्रतिष्ठावत् सा पुरुषस्य कैवल्यमित्यर्थः परस्परवियोगो ह्युपाधिः-उपाधिमतोरुभयोरेव केवलता=एकाकिता भवति। ते चोभे एव दुःखभोगनिवृत्याख्यपुरुषार्थसाधने भवत इति द्वे एव कैवल्ये लक्षिते। तयोश्चाद्यं कैवल्यं पुरुषस्योपचरितमित्युक्तं सांख्यकारिकायाम्–

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिरिति।**[1] इति

न तु स्वरूपप्रतिष्ठारूपं कैवल्यं दुःखभोगात्यन्तनिवृत्तिरूपो वा पुरुषार्थः पुरुषस्य तत्र निराकृतः, मोक्षस्यान्यमात्रनिष्ठत्वे पुरुषार्थत्वे मोक्षार्थं प्रवृत्यनुपपत्तेः, पुरुषार्थं हि करणानां प्रवृत्तिरिति, भाष्ये कार्यकारणात्मनामिति कार्यकारणभावापन्नानां महदादिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीरघटकानामित्यर्थः, न तु कार्यमत्र स्थूलशरीरं तत्सत्वेऽपि कैवल्योदयादिति। ननु स्वस्य स्वप्रतिष्ठात्वानुपपत्या कथं स्वप्रतिष्ठत्वम्? तत्राह-स्वरूपेति। पुरुषस्य पुनर्बुद्धिसत्त्वासम्बन्धात् केवला चितिशक्तिरेव स्वरूपप्रतिष्ठेत्यर्थः। तस्यां स्वरूपप्रतिष्ठायां सदैवावस्थानं कैवल्यं द्वितीयमिति शेषः।[2]

कैश्चिदपि आचार्यैरित्थमेवोक्तम्–

**अनात्मनि च देहादौ आत्मबुद्धिस्तु देहिनाम्।**
**अविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते।** इति

तथा च सर्वतो विरज्यमानस्य तस्य पुरुषविशेषस्य क्लेशबीजनिर्दग्धशालिबीजकल्पानि प्रसवसामर्थ्यविधुराणि मनसा सार्धं प्रत्यस्तं गच्छन्ति। तदेतेषु प्रलीनेषु निरूपप्लवविवेकख्यातिपरिपाकवशात् कार्यकारणात्मकानां प्रधाने लयः चितिशक्तिः स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्वादिभिः सम्बन्धविधुरा वा कैवल्यं लभते इति सिद्धम्। अत एव च महर्षिणा पतञ्जलिना सूत्रेण द्वयी मुक्तिरुक्तेति दिक्।

इदानीं मुक्त्यनतरं किं भवतीति जिज्ञासायां भगवत्पादशङ्कराचार्यः प्राह–

**पुनरपि जननं पुनरपि मरणं पुनरपि जननी जठरे शयनम्**[3]

---

1. सां0 का0 का0 62
2. यो0 वार्तिकम्-34
3. चर्पटपञ्जरिका।

न्यायदर्शने च "तदत्यन्तविमोक्षोपवर्गः"[1] सांख्यसूत्रे "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः"[2] इत्यादिसूत्रैः सर्वदुःखानां हि अत्यन्तनिवृत्तिरेव मुक्तिरभिहितास्ति। तथैव जनेषु धारणाऽप्यस्ति यन्मुक्तेर्नरकोऽपि परावर्तते किन्तु इदमित्थमेव नास्ति। अत्रैकः विचारः प्रस्तूयते यत् तत्र अत्यन्तशब्दोऽव्यधिकार्थे विद्यते न तु अनन्तार्थे, यतोऽहि अल्पज्ञो अल्पशक्तिर्जीवोऽनन्तकालावधि ब्रह्मानन्दं भोक्तुं कथमपि समर्थो न स्यात्। अस्य विचारस्य पोषिका मुण्डकोपनिषद् विद्यते। सा हि स्पष्टं मुक्तेः परावर्तनं ब्रूते। तथाहि–

**वेदान्त विज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः।**
**ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे॥**[4]

अत्र मुक्तिस्थितिकालस्य संज्ञास्ति ततो मुक्तिस्थितिकालस्य समाप्तिरेव परान्तकालशब्देन सूच्यते। परान्तकाले मुक्तिस्थितिकालसमाप्तौ परातान्मुक्तेः सर्वे मुच्यन्ते, निर्वृता भवन्ति वा। अत्र परस्मैपदं छान्दसम्। अत्र परामृता इति पाठस्तु, प्रामाणिकः। यतोऽहि नारायणोपनिषदि[27] "परामृतात्" इत्येव पाठस्तथा सूतसंहितायाः सायणमाधवकृतव्याख्यायां मुण्डकोपनिषद एवोधृतोऽयं श्लोकः। तत्रापि परामृतात् इति पञ्चम्यन्तः पाठ एवोपलभ्यते। अतश्च पञ्चम्यन्तपाठस्य प्राबल्यात् परामृतात् इति पाठः प्रामाणिकः, प्रथमान्तपाठः "परामृता" इति पाठः प्रामाणिक इति सुस्पष्टम्। मीमांसकाः अपि तदीयं पाठं समर्थयन्ति। निःश्रेयसमेव तेषां मुक्तिस्तेऽपि ततः परावर्तनं मन्यन्ते। तथाचोक्तं गीतायामपि–

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।**
**एवं त्रयी धर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते।**[5]

अनेन सूच्यते यत् यथा मीमांसकानां मते निःश्रेयसं लब्ध्वाऽपि ततः स्वकृतकर्मणः क्षयात् जीवात्मा परावृत्तिं लभते, तथैव यस्य सिद्धान्ते जीवात्मनः सततं शाश्वतमल्पज्ञत्वं तस्य तु अल्पज्ञस्य मुक्तिरपि सावधिरेव स्यात्। यतोऽहि अल्पज्ञतया अल्पसामर्थ्याच्च नहि सः शाश्वतं ब्रह्मानन्दं भोक्तुं समर्थ इति साधूक्तं महर्षिदयानन्दसरस्वतीमहाभागेन जीवात्मानो मुक्तेः परावर्तन्त इति। "तदत्यन्तविमो-

1. न्या0 सू0 1/1/22
2. सां0 सू0 1/1
3. कैवल्योपनिषद्–1.4
4. नाराय0 उप0 12/3
5. श्रीमद्भगवद्गीता–9/21

क्षोऽपवर्गः" इति न्यायसूत्रे अत्यन्तशब्दोऽत्यधिकार्थ वाचकः न तु अनन्तार्थ इति। महर्षि कपिलोऽपि मुक्तेः पुनरावृत्तिं सूचयति–

**यथा हि जगच्चक्रमनादि कालादविच्छिन्नं प्रचलति तथैवाग्रेऽपि चलिष्यत्येव। नह्यस्य कदापि शाश्वतिको विच्छेदः इदानीमिव सर्वत्र नात्यन्तोच्छेदः॥**

अनेन सूच्यते यत् तेनापि मुक्तेः पुनरावृत्तिरभिहितैवेति।

## सांख्ययोगाभिमतससाधनज्ञाव्यक्तस्वरूपम्

अथ सांख्यनये तत्वत्रयं भवति। तच्चव्यक्ताव्यक्तज्ञश्चेति तत्र व्यक्तम्-बुद्धिः, अहंकारः, मनः, पञ्च ज्ञानेन्द्रियाणि (श्रोत्रं, त्वक्, चक्षुः, रसना, घ्राणम्) पञ्चकर्मेन्द्रियाणि (वाक्, पाणि, पाद, पायु, उपस्थः) पञ्चतन्त्रमात्राणि (शब्दः, स्पर्शः, रूपम्, रसः, गन्धः) पञ्च महाभूतानि (पृथिवी, जलम्, तेजः, वायुः, आकाशम्) त्रयोविंशति संख्याकम्। अव्यक्ता च प्रकृतिरेका। ज्ञपदेन पुरुषः ज्ञेयः। तथा चोक्तं कारिकायाम्–

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं, विपरीतमव्यक्तम्॥**[1]

अयं हि व्यक्ताव्यक्तयोः स्वरूपप्रकारः। पुरुष अर्थात् "ज्ञ' इत्यस्य स्वरूपमित्थमुक्तमीश्वरकृष्णेन–

**दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः।**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञ विज्ञानात्।**[2] एवञ्च
**मूलप्रकतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥**[3]

इदानीं प्रकृतमनुसरामः। व्यक्तं च अव्यक्तं च ज्ञश्च इति व्यक्ताव्यक्तज्ञाः, तेषां विज्ञानं विवेकेन ज्ञानं, व्यक्ताव्यक्तज्ञविज्ञानम्। व्यक्तिपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानम्। तयोश्च पारार्थ्येनात्मा परो ज्ञायते इति ज्ञानक्रमेणाभिधानम्।

प्रथमं तावत्प्रधानभूतं पुरुषं ज्ञाख्यं निरूप्यते। सांख्यशास्त्रस्य प्रवृत्तिः चतुर्धा भवति। कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चित् प्रकृतिविकृती,

1. सां० का०– का० सं० 10
2. सां० का०– का० 2
3. सां० का०– का० 3

कश्चिदनुभयरूपः। प्रकृतिरियं विश्वस्योपादानकारणं किन्तु इयं न कस्यापि कारणस्य कार्यभूता। किञ्चित् तत्वानि कार्यभूतान्येव। तानि केनचित् कारणेन उत्पन्नानि भवन्ति किन्तु अन्योत्पादने असमर्थानि भवन्ति यथा विकृतिः। केचन तत्वानि कार्यकारणोभयात्मकानि भवन्ति। स्वयमुत्पद्यन्ते अन्यान् उत्पादयन्ति च। ते च प्रकृतिविकृतितत्वे। कश्चिच्च तत्वं कार्यकारणोभयविधसम्बन्धशून्यं भवति। तच्च न कार्यं न कस्यापि कारणमपि भवति अनुभयात्मकं च तत्तत्वं भवति। तदेव तत्वं पुरुषः। स चैकः नित्यः, अपरिणामी, चेतनः, अकर्ता, निर्गुणः, साक्षी, द्रष्टा, भोक्ता, विपयीत्यादिशब्दैः व्यपदिश्यते। अनुभयत्वं चात्र–अजनकत्वे सति अजन्यत्वम्। तत्वान्तरानुपादानत्वे सति तत्वान्तरानुपादेयत्वं वा।

अत्रेयमाशंका यत् अचेतनं प्रधानं चेतनानधिष्ठितं महदादिकार्ये न व्याप्रियते अतः केनचिच्चेतनेनाधिष्ठात्रा भवितव्यम्। यतोऽहि प्रधानं स्वयमचेनत्वाच्चेतनेन केनचिदप्रेरितत्वाच्च महत्तत्वादिकार्योत्पत्यनुगुणं व्यापारं कर्त्तुं न प्रभवति। लोके तथा क्वाप्यदर्शनात्। न हि असंयोजिताश्वः रथः स्वयं गन्तुं प्रभवति। तथा च प्रधान प्रेरकत्वेनेश्वरोऽङ्गीकर्तव्य इति चेन्न, अचेतनस्यापि प्रधानपुरुषार्थाय प्रवर्तमानं यथा वत्सविवृद्ध्यर्थमचेतनं क्षीरं प्रवर्तते। यथा च जलमचेतनं लोकोपकाराय प्रवर्तते तथा प्रकृतिश्चेतनापि पुरुषविमोक्षाय प्रवर्तते। तदुक्तम्–

> "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
> पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य।।"[2]

यथा अज्ञस्याचेतनस्यापि क्षीरस्य वत्सविवृद्धिरूपप्रयोजनवती प्रवृत्तिर्जायमाना लोके दृश्यते तथा पुरुषविमोक्षोपयोगिनी प्रधानस्य प्रवृत्तिः कल्प्यते।

ननु प्रधानस्य प्रवृत्या कथं पुरुषस्य मोक्ष इति चेत्, दुःखनिवृत्तिर्मोक्षः। दुःखनिवृत्तिश्च प्रकृतिपुरुषविवेकज्ञानाद् भवति। तत्र प्रकृतेरत्यन्तसूक्ष्मत्वेन दुर्ज्ञेयतया ततो विवेकः पुरुषस्यदुरधिगमः। प्रकृतेः प्रकृत्यनन्तरं तु भौतिकं स्थूलकार्यं विशदतया ज्ञायते ततो भेदः पुरुषस्य ज्ञातुं शक्यते। ततस्तत्कारणेभ्यो भूतेभ्यः भेदो ज्ञायते ततस्तत्कारणादित्येवं क्रमेणस्थूलारुन्धतीन्यायेन प्रकृतेः सकाशादभेदः सुग्राह्यो भवति।

परमेश्वरः करुणया प्रवर्तकः इति परमेश्वरास्तित्ववादिनां डिण्डिमः स गर्भस्रावेण गतः। विकल्पानुपपत्तेः।[1] स किं सृष्टेः प्राक्प्रवर्तते, सृष्ट्युत्तरकालं वा।

---

1. सां0 का0–का0 57
2. स0 द0 सं0–माधवाचार्यः।

आद्ये शरीराद्यभावेन दुःखानुत्पत्तौ जीवानां दुःखप्रहाणेच्छानुपपत्तिः। द्वितीये परस्पराश्रयप्रसङ्गः। करुणया सृष्टः स्रष्ट्या कारुण्यमिति। तस्मादचेतनस्यापि चेतनाधिष्ठितस्य प्रधानस्य महदादिरूपेण परिणामः पुरुषार्थप्रयुक्तः प्रधानपुरुषसंयोग-निमित्तः।

स्वस्मिन् विद्यमानः पुरुषः यः प्रकृतेस्तत्परिणामभूतायाः बुद्धेश्च सकाशादभेद-स्तस्याग्रहादज्ञानात्स्वं बुद्धिस्वरूपं मन्यमानो बुद्धिगतं सुखादिकं स्वस्यैवेति जानन्स्तन्निवारणाय मोक्षमपेक्षते। यथा निर्व्यापारस्याप्ययस्कान्तस्य सन्निधानेन लोहस्य व्यापारस्तथा निर्व्यापारस्य पुरुषस्य सन्निधानेन प्रधानव्यापारो युज्यते। प्रकृतिपुरुषसम्बन्धश्च पङ्वन्धवत्परस्परापेक्षानिबन्धनः। प्रकृतिर्हिभोग्यतया भोक्तारं पुरुषमपेक्षते। पुरुषोऽपि भेदाग्रहात् बुद्धिच्छायापत्या तद्गतं दुःखत्रयं वारयमाणः कैवल्यमपेक्षते। तत्कैवल्यं प्रकृतिपुरुषभेदग्रहमूलकमिति तादृशभेदग्रहं विना न युक्तमिति मोक्षसाधनीभूतभेदज्ञानाय भेदप्रतियोगिभूतप्रकृत्यपेक्षा पुरुषस्य इति।

यथा कश्चित् पङ्गुः कश्चिच्चान्धः सहैव पथि गच्छतो दैववशात् चोरादिकृतो-पद्रवात् परित्यक्तसाधौं मन्दमन्दमितस्ततः परिभ्रमन्तौ भयाकुलौ पुनश्च दैववशात् संयुक्तौ। तत्र च अन्धेन पङ्गुः स्कन्धमारोपितः। ततः पङ्गुदर्शितेन पथा अन्धः स्वस्थानं प्राप्नोति पङ्गुरपि स्वस्थानं प्राप्नोति। यथा परस्परापेक्षप्रधानपुरुषनिबन्धनः सर्गः। तथोक्तम्–

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि सम्बन्धस्तत्कृतः सर्गः॥**[1]

अत्र पुरुषः क्रियारहितत्वात् पङ्गुतुल्यः। प्रधानं च अचेतनत्वात् अन्धतुल्यम्। तत्र च पङ्गुसम्बन्धात्मार्गेयथा प्रवर्तते तथा पुरुषसम्बन्धात् प्रधानं प्रवर्तते।

अधुना व्यक्तपदार्थं चिन्त्यते। व्यक्तं तावत् त्रयोविंशति इति पूर्वमेव मया परिगणिता। कारिकायामुक्तमीश्वरकृष्णेन "हेतुमदनित्यमव्यापीत्यादिना। तत्र नवधा हेतुभिः व्यक्तानां सारूप्यं प्रकटितम्। प्रथमं तावत् "हेतुमत्वम्" हेतुः अर्थात् कारणम्। सर्वेषां व्यक्तपदार्थानां कारणं प्रकृतिरस्ति। प्रधानादुत्पन्नत्वात् बुद्धितत्वं हेतुमत्। बुद्धेरुत्पन्नत्वादहंकारः हेतुमान्। अहंकारादुत्पन्नत्वात् पञ्चतन्मात्राणि एकादशेन्द्रियाणि च हेतुमत्। एवञ्च आकाशः, वायुः, तेजः, जलं, पृथिव्यादयः हेतुमन्तः तत्तद् शब्दस्पर्शरूपरसगन्धतन्मात्राभ्यः उत्पन्नत्वात्। द्वितीयं कारणमस्ति-

1. सांख्यकारिका-का.सं.-21

अनित्यत्वम्। अत्र सांख्यसूत्रकारो वदति नाशः कारणलयः। सत्कार्यवादः उत्पत्ति विनाशौ आविर्भावतिरोभावार्थकौ। अव्यापित्वं तृतीयो हेतुः। सर्वं परिणामिनं न व्याप्नोत्यव्यापि। परिणामञ्चात्र अव्यवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पतिः। चतुर्थं सक्रियं परिस्पन्दः। बुद्ध्यादयःउपात्तमुपात्तं देहं त्यजन्ति देहान्तरं चोपादयति इति तेषां परिस्पन्दः। शरीरपृथिव्यादीनां परिस्पन्दः प्रसिद्ध एव। परिस्पन्दस्तावत्प्रवेशनिःसरणरूपाक्रिया। अनेकत्वमिति पञ्चमं सारूप्यम्। प्रतिपुरुषं बुध्यादीनां भेदात् पृथिव्याद्यपि शरीरघटादि भेदेनानेकमेव। आश्रितत्वं षष्ठं सारूप्यम्। व्यक्तपदार्थाः आश्रिताः। आश्रितत्वञ्च स्वकारणनिरूपिताधेयतावत्वम्। व्यक्तपदार्थानां लिङ्गत्वं सप्तमं सारूप्यम्। लिङ्गञ्चानुमापकत्वम्। सावयवत्वमष्टमं सारूप्यम्। अवयवानाम-वयविनां मिथः संश्लेषो मिश्रणम्। अप्राप्तिपूर्विका प्राप्तिः संयोगः तेन सह वर्तत इति सावयवम्। परतन्त्रत्वञ्चान्तिमं सारूप्यम्।

व्यक्तात् विपरीतमव्यक्तम्। अहेतुमनित्यं व्यापि निष्क्रियम्। यद्यपि अव्यक्तस्यास्ति परिणामलक्षणया क्रिया तथापि परिस्पन्दो नास्ति। एकमनाश्रित-मलिङ्गमनवयवं स्वतंत्रमव्यक्तम्।

## सांख्ययोगाभिमतसृष्टेः विचारः

अव्यक्ताख्या मूलप्रकृतिः प्रवृत्तिस्वभावा स्वतंत्रा च सृष्ट्यारम्भे स्वयमेव क्षुब्धा सती जीवविशेषेण नारायणाख्येन संयुज्यते। ततश्च सजातीयैरन्यैः प्रकृत्यं-शैर्न्यूनाधिकभावेन मिलिता सती महत्तत्वमारभते। न च पुरुषस्य प्रकृत्या सह संयोगे असङ्गो ह्ययं पुरुषः[1] इति श्रुतिविरोध इति वाच्यम्। विकारहेतुसङ्गस्यैव सङ्गशब्दार्थत्वात्।

**ब्रह्मण्याधाय कर्मांणि सङ्गं त्यक्वा करोति यः।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा।[2]**

इत्येवमुच्यमानः पद्मपत्रस्य असङ्गतोक्तार्थेनैवोपपद्यते। महत्तत्वञ्च चेतनाचेतनात्मकम्। तत्राचेतनांशस्य मुख्यैवोत्पत्तिः चेतनांशस्य त्वभिव्यक्तिरूपा गौण्येव। एवं सृष्ट्यारम्भे जीवविशेषभूता आदिशक्तिरपि महत्तत्वकारणीभूतविषमा-वस्थगुणत्रयसम्बन्धादभिव्यज्यते। इयमेव प्रकृत्यधिष्ठात्री देवता महालक्ष्मी, अम्बा,

---

1. बृहदारण्यकोप. 4/3/15
2. श्रीमद्भगवद्गीता 5/10

दुर्गेत्यादिशब्दैः पुराणेषूच्यते। जीवगता अखिला विशेषाः प्रधानाद्युपाधिसम्बन्धेन भासमाना औपाधिका एव। ततः पूर्वं निर्विशेषा जीवसमष्टिर्ब्रह्म शब्देनोच्यते। स्वयम्भूतस्तु सविशेषो जीवसमष्टिः। विशेषास्त्वौपाधिका एव। तस्योपाधिर्लिङ्गशरीरम्। लिङ्गशरीरं तु बुध्यहंकारमनोज्ञानेन्द्रियकर्मेन्द्रियपञ्चतन्मात्राणामष्टादशानां समुदायः। सप्तदशानां समुदाय इत्युक्तिस्तु अहंकारस्य बुद्धावन्तर्भावं कल्पयित्वा नेया। प्राणश्च बुद्धेरेव वृत्तिभेदः। उपाधिश्चात्मचैतन्यस्याभिव्यक्तिस्थानम्, वह्नेरिन्धनवत्। इदं च लिङ्गशरीरमादौ स्वयंभुव उपाधिभूतमेकमेव जायते। ततो व्यष्टिजीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदंशभूतानि ततो विभज्यन्ते। पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत्।

अयं च स्वयम्भूः स्वलिङ्गशरीरावयवान्सूक्ष्मानल्पान् स्वांशचेतनासु संयोज्य सर्वान् प्राणिनः सृजति। जीवाश्च वस्तुतो भिन्ना एव। तेषां समष्टिः स्वयम्भूः। अयं च वस्तुतः सन्नेव जीवानां मिथो भेदः शरीराद्युपाधिभिरभिव्यज्यते दीपेन घटादिभिरिव। न तु असन्नेवोपाधिनाभिव्यज्यते। यथा जल उष्णस्पर्शोऽसन्नेव तेजसा स्वकीयस्तत्राभिव्यज्यते तद्वदत्र न मन्तव्यम्। जीवेषु मिथो भेदस्य नैसर्गिकत्वात्। स्वम्भूरेव च स्थूलशरीरोपाधिको नारायण इत्युच्यते। तदुत्पत्तिक्रमश्चेत्थम्—

महत्तत्वादुत्पन्नस्तद्दशमांशोहंकारः। तस्मात्तन्मात्रद्वारोत्पन्नं तद्दशमांशभूतमाकाशम् एवं ततोऽपि न्यूनस्तद्दशमांशो वायुः, तद्दशमांशभूतं तेजः, तद्दशमांशभूतं जलम्, तद्दशमांशभूता पृथिवी। सैव स्थूलशरीरस्य बीजम्। तच्चाण्डरूपेण परिणमते। तत्र मध्ये तद्दशमांशभूतं चतुर्दशभुवनात्मकं स्वायम्भुवः स्थूलशरीरम्। अयमेव स्थूलशरीरोपाधिको नारायण इत्युच्यते। तन्मात्रोत्पत्तेः प्रागिन्द्रियोत्पतिः, इन्द्रियोत्पत्तेः प्राक् तन्मात्रोत्पत्तिरिति वा नात्र क्रमनियमः। तयोः कार्यकारणभावाभावेन क्रमे प्रमाणाभावात्। इन्द्रियाणां मध्येऽमुकमेव प्रथममुत्पद्यते इत्ययमपि नियमो नास्ति। तन्मात्रोत्पत्तौ तु क्रमः अस्ति। तामसाहंकारात् प्रथमं शब्दतन्मात्रमुत्पद्यते। तस्माच्छब्दतन्मात्राहंकारसहितात्स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकमुत्पद्यते। तस्मात् स्पर्शतन्मात्रादहंकारसहितात् रूपतन्मात्रं शब्दस्पर्शरूपगुणकमुत्पद्यते। ततश्च चतुर्गुणं रसतन्मात्रं पञ्चगुणं गन्धतन्मात्रमुत्पद्यते। तन्मात्रेभ्यश्च तादृशगुणकान्येव महाभूतानि उत्पद्यन्ते। प्रधानमहदहंकारपञ्चतन्मात्ररूपं प्रकृत्यष्टकं पञ्च ज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्चेकादशेन्द्रियगणः पञ्चमहाभूतानि चेति चतुर्विंशति तत्वानि। सर्वोऽयं मूलप्रकृतेः प्रधानस्य प्रपञ्चः। पुरुषस्तु पञ्चविंशो न कस्यापि प्रकृतिर्न कस्यापि विकृतिः। तथा च संक्षेपतो द्विविधं तत्वं चिदचिद्रूपं पुरुषप्रधानात्मकम्।

तथा च कारिका–

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥[1]
प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि॥[2]

अत्रेयमाशंका जायते यत् यथा बीजस्य कारणमङ्कुरः तस्याङ्कुरस्य बीजान्तरं कारणं भवेत् तस्यापि बीजस्याङ्कुरानन्तरं कारणं तस्यापि पुनर्बीजान्तरमित्येवं प्राप्ताप्यनवस्था दोषाय न भवति। गत्यन्तराभावात्।

विकृतयश्च प्रकृतयश्च महदहंकारतन्मात्राणि। तदप्युक्तं महदाद्याः प्रकृतिविकृतयः सप्त–

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥[3]

प्रकृतयश्च ता विकृतयश्चेति प्रकृतिविकृतयः सप्तमहदादीनि तत्त्वानि। तत्रान्तःकरणादिपदवेदनीयं महत्तत्वमहंकारस्य प्रकृतिः। मूलप्रकृतेस्तु विकृतिः। प्रकृतिश्च तदेवाहंकारतत्वं तामसं सत्पञ्चतन्मात्राणां सूक्ष्माभिधानम्। तदेव सात्विकं सत्प्रकृतिरेकादशेन्द्रियाणां बुद्धीन्द्रियाणां चक्षुः श्रोत्रघ्राणरसनात्वगाख्यानां कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानां उभयात्मकस्य मनसश्च।

रजसस्तूभयत्र क्रियोत्पादनद्वारेण कारणत्वमस्ति। तदुक्तमीश्वरकृष्णेन–

अभिमानोहंकारस्तस्माद्द्विविधः प्रवर्तते सर्गः।
एकादशकश्च गणस्तन्मात्रपञ्चकं चैव॥[4]
सात्विक एकादशकः प्रवर्तते वैकृतादहंकारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्॥[5]
बुद्धीन्द्रियाणि चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि।

---

1. सां0 का0 का0 21
2. सां0 का0–का0 22
3. सां0 का0–का0 3
4. तदेव–का0 24
5. तदेव–का0 25

वाक्पाणिपादपायूपस्था कर्मेन्द्रियाण्याहुः।[1]
उभयात्मकमत्रमनः संकल्पकमिन्द्रियं च साधर्म्यात्।[2]

विवृतञ्च तत्वकौमुद्यामाचार्यवाचस्पतिभिः।

अहमत्राधिकृतो ममात्रसामर्थ्यं मदर्था इमे विषया अहममुकोऽस्मि इत्यादिरभिमानात्मकोऽसाधारणव्यापारको यस्य सः अहंकारः। तस्मादहंकारात् द्विविधः सर्गः प्रवर्तते। प्रकाशक जडभेदेन द्विविधा सृष्टिर्जायते। यथाहि–एकादशकश्च गण इति पाठे एकादशसंख्या परिणामस्येत्येकादशकः। एकादशशब्दात्तदस्य परिमाणमित्यर्थ "संख्याया अतिशदन्तायाः कन्"[3] इत्यनेन कन् प्रत्ययः। पञ्चज्ञानेन्द्रिय पञ्चकर्मेन्द्रियमनसां प्रकाशकानामेकादशानां गणः एकः। शब्दतन्मात्रादीनां जडानां पञ्चानां गणोऽपरः।

एकोप्यहंकारः सत्वरजस्तमसां गुणानामुद्भवाभिभवाभ्यां भिन्नस्त्रिविधो भवति। तत्रैकः सत्वप्रधानो वैकृतसंज्ञकः। तस्मात् सत्वप्रधान एकादशेन्द्रियगणः उत्पद्यते। भूतादेरहंकारात् पञ्चतन्मात्रोत्पत्तिः। यतः स भूतादिस्तामसस्तमोगुणप्रधानः। रजः प्रधानस्तैजसस्तृतीयः। तस्य कार्यं तु इन्द्रियगणस्तन्मात्रगणश्चेति सात्विकतामसयोः कार्यमेव। यतः सत्वगुणस्तमो गुणश्च समयोऽपि क्रियारहितत्वात् न तावत्कार्यं करोति यावत् तं न रजोगुणश्चालयति।

ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च प्रवर्तकत्वान्मनः स्वयं ज्ञानेन्द्रियं कर्मेन्द्रियं चोभयात्मकम्। इयमेव सांख्यशास्त्रे सृष्टिप्रक्रियेति।

## सांख्ययोगाभिमताविद्यायाः पर्यालोचनम्

अभावार्थकस्य नञ् इत्यव्ययस्य विद्या शब्देन सह "अव्ययं विभक्तिसमीप. .........।[4] इति पाणिनिसूत्रेण अव्ययीभावसमासे विद्यायाः अभाव इत्यर्थः प्रतीयते। अव्ययीभावसमासे पूर्वपदार्थप्राधान्यस्य औत्सर्गिकत्वात्। यथा अमक्षिकमित्यत्र मक्षिकाणामभाव इत्यर्थः। तत्पुरुषसमासे उत्तरपदार्थप्राधान्यस्य औत्सर्गिकत्वात्। यथा राजपुरुष इत्यत्र राजसम्बन्धविशिष्टः पुरुष इत्यर्थः। बहुव्रीहिसमासे तु

1. सां0 का0–का0 26
2. तदेव–का0 27
3. अष्टा0 5/1/22
4. पा0 सू0 2/1/6

अविद्यमाना विद्या यस्यास्तादृशी बुद्धिरित्यर्थः स्यात्। बहुव्रीहिसमासे अन्यपदार्थप्राधान्यस्य औत्सर्गिकत्वात्। न मक्षिका यस्मिन् अमक्षिको देश इतिवत्।

अविद्यायां प्रसज्यप्रतिषेधोत्पत्तौ क्लेशादिकारकत्वानुपपत्तेः। प्राप्तिपूर्वको निषेधो हि प्रसज्यप्रतिषेधः। तथा च अविद्याशब्दादिअविद्यायाः प्रसक्तिपूर्वकं तदभावमात्रं प्रतीयते न तु तत्सहकृतं भावरूपमन्यत्किञ्चित्। विद्यायाः अभावश्च न क्लेशादीञ्जनयति। किन्तु विद्याविपरीतं ज्ञानमेव तज्जनकम्। तादृश ज्ञानरूपोऽर्थश्च अव्ययीभावसमासे सति नाविद्याशब्दात् प्रतीयते।

अथ अविद्याशब्दस्य स्त्रीलिङ्गत्वाभावापत्तेश्च स्यात्। "अव्ययीभावश्च"[1] इति सूत्रेण अव्ययीभावस्य क्लीबत्वविधानात्। अत्र उत्तरपदार्थप्राधान्यमपि न सम्भवति। कस्यचिदभावेन विशिष्टायाः विद्यायाः क्लेशादिपरिपन्थित्वेन तद्बीजत्वानुपपत्तेः। रागद्वेषशोकमोहादिषु अन्यतमस्य कस्यचिदभावेन युक्ता विद्या क्लेशादीन् विनाशयेत् न तु जनयेत्।

ननु नाभावप्रतियोगित्वेन रागादयो विवक्ष्यन्ते किं तु आत्मसाक्षात्कारः। तथा च आत्मसाक्षात्कारस्याभावेन युक्ताया विद्यायाः क्लेशादिबीजत्वमुपपद्यत इति चेन्न, तादृशविद्यायाः विद्यात्वस्यैवाभावात्। तत्पुरुषे हि उत्तरपदार्थस्य प्राधान्यं भवति। तथा च अप्रधानेन पूर्वपदार्थेन अभावेन तथैव स्वप्रतियोगिनः आक्षेपः स्यात्, यथोत्तरपदार्थत्वेन स्वं प्रति प्रधानीभूतायाः विद्यायाः स्वरूपं न विहन्येत। तथा च विद्याविरुद्धानां रागादीनामेव अभावो ग्राह्य इति।

नञोस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्चेति वृत्तिकारवचनानुसारेण अविद्यमानाविद्या यस्याः सा अविद्याबुद्धिरिति समासार्थसिद्धौ तस्याः अविद्यायाः क्लेशादिबीजत्वानुपपत्तेः। नञः परेषामस्त्यर्थवाचिनां पदान्तरेण सह बहुव्रीहिर्भवति। पूर्वपदघटकानामुत्तरपदभूतानामस्त्यर्थानां लोपश्च विकल्पेन भवतीति वृत्तिकार-वचनार्थः। तथा च अविद्याशब्दे बहुव्रीहौ विद्यारहिता बुद्धिः समासार्थः स्यात्। अस्याश्च बुद्धेर्विद्याया अभावमात्रेणक्लेशादिहेतुत्वं न घटते। विद्याया अभावेऽपि यावन्नविपरीताबुद्धिस्तावन्न कथमपि क्लेशादिसम्भवः।

ननु विद्यायाः अभावस्यैव क्लेशादिहेतुत्वमस्तु को दोष इति चेत् तत्राह-विवेकख्यातिपूर्वकसर्ववृत्तिनिरोधसंपन्नायास्तस्यास्तथात्वप्रसङ्गः स्यात्। विद्या च ज्ञानविशेषः असंप्रज्ञातसमाधौ न प्रकृतिपुरुषभेदसाक्षात्कारपूर्वको बुद्धेः

1. अष्टा० 2/4/18

सकलवृत्तिनिरोध इति ज्ञानसामान्यस्यैव अभावे ज्ञानविशेषरूपायाः विद्यायाः अभाव एव इति तदानीं बुद्धेः क्लेशादिहेतुत्वप्रसङ्गः।

अविद्यायाः क्लेशादिहेतुत्वाभावे का हानिरिति प्रश्ने उक्तम् "अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः"[1] अत्र अविद्यानिदानत्वमित्यस्य अविद्यामूलकत्वमर्थः। "अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्"[2] इति पूर्वसूत्रोक्त क्लेशपञ्चकमध्ये उत्तरेषामस्मिता रागद्वेषाभिनिवेशानां चतुर्णां क्लेशानां प्रसुप्ततनुविच्छिन्नोदाररूपेण प्रत्येकं चतुर्विधानामप्यविद्याक्षेत्रं प्रसवभूमिरिति। तत्र प्रसुप्तत्वं प्रबोधसहकार्यभावेन अनभिव्यक्तिः। ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधकाभावात् स्वकार्यं नारभन्ते ते प्रसुप्ताः। यथा बालानां प्रकृतिलयानां च। साधिकारे अचरितार्थे एव चेतसि उपासनया प्रकृतौ लीने सति ब्रह्माण्डाद्बहिः प्रकृत्याख्यावरणे लिङ्गदेहेन सह येऽधिकारवशाच्चित्तस्य पुनरावृत्तिपर्य्यन्तं कैवल्यपदमिव अनुभवन्ति ते प्रकृतिलयाः। तनुत्वं प्रतिपक्षभावनया शिथलीकरणम्। यथा योगिनां चेतसि वासनावशेषतया अवस्थितानां विच्छिन्नत्वं बलवता क्लेशेन अभिभवः। यथा द्वेषावस्थायां रागस्य रागावस्थायां वा द्वेषस्य मिथो विरुद्धयोः यौगपद्यं न सम्भवति। उदारत्वं सहकारि संनिधिवशात् कार्यकारित्वम्। यथा बद्धानां जीवानां तदुक्तम्–"अविद्याक्षेत्रम्"[3] इति। एवं वाचस्पतिमिश्रेणापि व्यासभाष्ये–

प्रसुप्तास्तत्वलीनानां तन्ववस्थाश्च योगिनाम्।
विच्छिन्नोदाररूपाश्च क्लेशाविषयसङ्गिनाम्।।[4]

द्वन्द्ववत् स्वतंत्रपदार्थद्वयानवगमादुभयपदार्थप्रधानत्वं नार्शकितं तस्मात् पक्षत्रयेऽपि क्लेशादिनिदानत्वम् अविद्यायाः प्रसिद्धं हीयते इति चेत्, तदपि न शोभनं विभाति। यपर्युदासशक्तिमाश्रित्य अविद्या शब्देन विद्याविरुद्धस्य विपर्ययज्ञानस्याभिधानमिति वृद्धैरङ्गीकारात्। तदाह–

नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः।
वदत्यब्राह्मणाधर्मावन्यमात्र विरोधिनौ।।[5]

---

1. पात0 यो0 सू0 2/3
2. पा0 यो0 सू0 2/4
3. पा0 यो0 सू0 2/4
4. व्यासभाष्यव्याख्या।
5. सर्व0 द0 सं0 पृ0 360

**वृद्धप्रयोगगम्यो हि शब्दार्थः सर्व एव नः।**
**तेन तत्र प्रयुक्तो यो न तस्मादपनीयते।**[1]

वाचस्पतिमिश्रैरप्युक्तम्[2]—लोकाधीनावधारणो हि शब्दार्थयोः सम्बन्धः। लोके च उत्तरपदार्थप्रधानस्यापि नञ् उत्तरपदाभिधेयोपमर्दकस्य तद्विरुद्धतया तत्र-तत्र उपलब्धेरिहापि तद्विरुद्धे प्रवृत्तिरिति।

यद्यपि तत्पुरुषस्य उत्तरपदार्थस्य प्राधान्यं तथापि नञ् तत्पुरुषे नञोत्तरपदार्थः पर्युदस्यते। तथा तत्र उत्तरपदार्थविरुद्धार्थको नञ् उपलभ्यते। तद्वत् अविद्याशब्देऽपि इति।

## निरीश्वरसेश्वरसांख्यप्रवादपरीक्षणम्

सांख्यदर्शने ईश्वरविषये बहुप्रवादः। कश्चन मतानुसारेण ईश्वरो नास्ति कश्चन मतानुसारेण ईश्वरोऽस्ति कश्चन मतानुसारेण च ईश्वरे उपादानकारणता इति। कापिले सांख्यदर्शने एव "ईश्वरासिद्धेः"[3] इतीश्वरासिद्धिप्रतिपादनपरे सूत्रे विद्यमाने क एवं वक्तुं शक्तः नेश्वरप्रतिषेधपरं कापिलं वच उपलभ्यत इति चेत् न तत्र सूत्रे जगदुपादानभूतस्यैवेश्वरस्यासिद्धत्वप्रतिपादनात्। अतएव तृतीयाध्यायगतं "स हि सर्ववित् सर्वकर्त्ता"[4], "ईदृशेश्वरसिद्धिः[5] सिद्धा" इति सूत्रद्वयं सङ्गच्छते। अन्यथा अनयोः प्रथमतृतीयाध्यायगतयोः प्रसङ्गयोः स्पष्ट एव विरोधः स्यात्। प्रथमाध्याये जगदुपादानभूतस्येश्वरस्यासिद्धिः प्रतिपादिता जगदुपादानभूतः ईश्वरः केनापि प्रमाणेन साधयितुं न शक्यः सांख्यनये। प्रकृतितत्वस्य सत्वरजस्तमोमयस्य तत्र जगदुपादानत्वस्वीकारात्। अत्र पुनस्तृतीयाध्याये सर्वजगदधिष्ठाता सर्वनियन्ता ईश्वरः[6] प्रतिपाद्यते। एवम्भूतस्य जगत्कर्त्तुरीश्वरस्य सिद्धिर्निश्चिता एवेति। अनयैव रीत्या अनयोः प्रसङ्गयोराशंक्यमानो विरोधः परिहर्तुं शक्यः। अतएव पञ्चमाध्याये परमेश्वरस्याधिष्ठातृत्वं प्रतिपाद्य "श्रुतिरपि प्रधानकार्यत्वस्य"[7] इति सूत्रेण प्रकृतेरेव जगदुपादानत्वं प्रत्यपादयत्।

---

1. तदेव।
2. अनित्याशुचिः-पा० यो० सू० 2/5 इति सूत्रव्याख्यायाम्।
3. सां० सू० 1/92
4. तदेव, 3/56
5. तदेव 3/57
6. सां० सू० 3/57
7. सां० सू० 5/12

चेतनाचेतनभेदेन तत्त्वद्वयं स्वीकृतं सांख्यशास्त्रे। चेतनमपि परमात्मा जीवात्मानश्च। तत्र परमात्मा एक एव जगतः केवलमधिष्ठाता तदुत्पत्तिस्थितिप्रलयादिनियामकः। अनन्ताः जीवात्मानो भोक्तारः स्वकर्मफलानामधिष्ठातारश्च स्वदेहादीनाम्। प्रकृतिरचेतना परिणामिनो जगदुपादानभूता सत्वरजस्तमोमयी।

"द्वा सुपर्णा"[1] "तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति"[2] इति ऋगनुरोधेन चेतनवर्गस्य द्वैविध्यं प्रतिपादयति कपिलाचार्यः। न च बद्धमुक्ताभिप्रायेण द्वैविध्यमात्मानमुपपादयितुं शक्यम्। न हि मुक्तोऽनश्नन्नेव सदाभिचाकशीति, यावदप्राप्तो मुक्तावस्थां तावदश्नात्येव भोगान् स्वकृतकर्मानुरूपान्।

आत्मनि चेतने "अधिष्ठानाच्च"[3] इति सूत्रयता कपिलेन सप्तदशसंख्याङ्कितायां सांख्यकारिकायाम्-"अधिष्ठानात्" इति प्रधानाद्यचेतनातिरिक्तात्मसिद्धौ हेतुमुपन्यस्ता आचार्येण ईश्वरकृष्णेन च चेतनस्याधिष्ठातृत्वमुपपादितम्।

"विशेषकार्येष्वपि जीवानाम्"[4] इति कपिलसूत्रानुरोधेन विशेषकार्येषु देहादिष्वेव जीवानामधिष्ठातृत्वं सिद्ध्यति। नहि अल्पज्ञोऽल्पशक्तिर्जीवात्मा सर्वस्य जगतोऽधिष्ठाता सम्भवति, न च अचेतनं प्रकृत्यादिकमनधिष्ठीयमानमङ्गीक्रियते। कश्चास्य जगतोऽधिष्ठाता स्यादिति विचारः।

नहि कश्चिन्मुक्त आत्मा अधिष्ठाता भवितुमर्हति बद्धापेक्षया तस्य शक्तिप्राबल्ये सत्यपि जगदुत्पत्यादौ सामर्थ्यासम्भवात् तस्य मुक्तावस्थायाः प्रागपि च जगतो विद्यमानत्वात्। सकृदेवान्यमुक्तात्मनापि जगदधिष्ठातृत्वप्रसक्तेः, सत्स्वनेकेषु मुक्तात्मसु कस्यैकस्यानेकेषां वा केषाञ्चिदधिष्ठातृत्वं स्यादिति नियामकासम्भवाच्च "अनश्नन्नन्यो अभिचाकशीति"[5] इत्यत्रान्यपदेन परमेश्वर एवाभिप्रेयते नान्यः कश्चिन्मुक्तात्मेति निश्चीयते।

अतएव "ईश्वरासिद्धेः" इत्यादिसूत्रदिशा परमेश्वरस्य जगदुपादानत्वं प्रतिषिध्य "तत्सन्निधानादधिष्ठातृत्वं मणिवत्"[6] इति सूत्रेण कपिलश्चेतनस्य सर्वजगन्नियन्तुः

1. मुण्डकोपनिषद्-3.1.1
2. तदेव।
3. सां0 सू0 -1.142
4. तदेव-1.97
5. मुण्डकोपनिषद्-3.1.1
6. कपिलसूत्रम्-1/96

परमेश्वरस्यैव जगदधिष्ठातृत्वं प्रतिष्ठापयत्। कारिकाव्याख्याने (सप्तदश) च "अधिष्ठानात्" इति हेतुं विवृण्वन् माठरः-"ततः पश्यामोऽसौ परमात्मा अस्ति पुरुषो येनाधिष्ठितं प्रधानं महदहंकारतन्मात्रेन्द्रियभूतान्युत्पादयति"[1] इत्युपपादयत्। अस्यैव हेतुपदस्य व्याख्याने माठरः गौडपादश्च "पुरुषाधिष्ठितं प्रधानं प्रवर्तते"[2] इति बोधयामासतुः। पुरुषपदं हि सांख्ये पारिभाषिकं चेतनमात्रपरम्। नहि चेतनो जीवात्मा मूलप्रकृतेरधिष्ठाता भवितुमर्हति।

चेतनाधिष्ठितप्रधानस्य प्रवृत्तिं व्याचक्षाणं पञ्चशिखः सकलजगदधिष्ठातारं परमात्मानमेवोपपादयति। फलतः कापिलैश्चेतननिरपेक्षा प्रवृत्तिः प्रवर्तत इति मतं नाङ्गीक्रियत एव।

यद्येवं कापिलनये प्रधानस्य चेतननिरपेक्षा प्रवृत्तिनाङ्गीक्रियते तदा "कपिलो निरीश्वरवादी" इति प्रवादः कथमपि बहोः कालात् प्रवर्तितः? नायं प्रवादः सर्वथापि निराधारः कल्पयितुं शक्यते। न केवलमयं प्रवादः अपि शतशो ग्रन्थेषु कपिलस्य निरीश्वरवादित्वमुपपद्यमानमुपलभामहे। यथाहि—

"प्रधानप्रवृत्तिरप्रत्यया पुरुषेणाऽपरिगृह्यमाणादिसर्गे वर्तते"[3] आदि सर्गे सृष्ट्यादौ यदा साम्यावस्थामपहाय प्रधानं विषयतां रोचमानं महदादिसर्गोन्मुखतां भजते, एवम्भूता प्रधानप्रवृत्तिस्तदा अप्रत्यया ज्ञानविहीना भवति। अप्रत्ययेति पदार्थः स्वयमेवाह—पुरुषेणाऽपरिगृह्यमाणा, चेतनेनानुगृह्यमाणा केनचिदप्रेर्यमाणा इति। एतेन सिद्ध्यति यत् प्रधानप्रवृत्तिं प्रति चेतनापेक्षां नाङ्गीकरोति। कपिलस्तु पूर्वोक्तरीत्या जगदुपादानभूतमीश्वरं प्रतिषेधति, जगदधिष्ठातृभूतमीश्वरमङ्गीकरोत्येव।

योगदर्शनं हि ईश्वरस्य सत्ता डिण्डिमघोषेण स्वीकरोति। तथा च सूत्रम्— "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः"[4] इति। अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं विपाकः। तदनुगुणावासना आशयाः। ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्तेति। यथा जयः पराजयो वा यादृश्यु वर्तमानः स्वामिनि व्यपदिश्यते। यो हि अनेन भोगेनापरामृष्टः स पुरुषविशेषः ईश्वरः।

1. माठरवृत्तिः,सू. 1.96
2. तत्रैव।
3. युक्तिदीपिका।
4. पात० यो० सू० 1/24

अत्र सांख्यानामाक्षेपः-प्रधानपुरुषातिरिक्तं तत्त्वं नास्ति। तत्र च ईश्वरो न प्रधानं चेतनत्वाद्यभ्युपगमात्, नापि पुरुषः, सर्वेषां पुरुषाणां चिन्मात्रस्वरूपत्वेन ईश्वरत्वानीश्वरत्वयोः स्वतोऽसम्भवात्, न हि वैशेषिकादिवत् नित्येच्छादिमान् स्वत एवेश्वरः अभ्युपगम्यते। औपाधिकत्वेतूपाधिमुक्त्या पुरुषाख्य जीवानामेवैश्वर्यमस्तु तत्परत्वेनैव श्रुतिस्मृत्युपपत्तेः। अतः प्रधानजीवातिरिक्तः ईश्वरो नास्ति। अतएवोक्तम्–"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः" इति। तथा च ईश्वरस्य पुरुषेऽन्तर्भावस्तदुपाधेः प्रधानः, कुशलाकुशलसाधनत्वात् कुशला- कुशलानि धर्माधर्मां: तयोः क्लेशकर्मणोः फलं विपाकः स च जात्यायुर्भोगाः।

भोगश्चात्र विषयसत्वादिभिः चित्तपोषणे शब्दाद्याकारवृत्तिर्वा, न तु सुखाद्यनुभवः। चित्तभूमौ शेरत इत्याशया वासनास्ताश्च विपाकानुगुणः तत्कारणानि, यतशतच्छरीर-साध्यभोगवासनामुद्बोध्यैव कर्मणा विपाको दीयते।

अत्रेयमाशंका यत् क्लेशाद्यपरामृष्टत्वं सर्वपुरुषसाधारणमित्याशंकायामाह–ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्ता। एकस्यैवान्तः-करणस्य वृत्तिभेदाच्चातुर्विध्यमित्याशयेन पूर्वं चेतस्युक्ता विद्या अत्र मनसि उक्ता इति। ते च अविद्यादयो यद्यपि मनस्येव सन्ति न कुत्रापि पुरुषे तथापि पुरुषे सांसारिके व्यपदिश्यन्ते। व्यपदेशबीजं च स्वामित्वापरनामकं भोक्तृत्वमेव। अनेन विशेषणेन ईश्वरस्य भोगोऽस्तीत्यवधार्यते, सर्वविवेकग्रहणे इत्येव स्वोपाधिसुखसाक्षिता-मात्रम्-सांख्यसूत्रेऽपि "चिदवसानो भोग"[1] इति। गीतायामुपदिष्टं भगवता श्रीकृष्णेन–

उपद्रष्टानुमन्ता च भर्ताभोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः॥[2]

अतएव ईश्वरस्य भोगप्रतिपादिका–"ऋतं पिबन्ताविति श्रुतिः" यथाश्रुतै वोपपद्यते।

अपरामृष्टत्वं परामर्षशून्यता। तत्र परामर्ष शब्दफलं वदति यदि क्लेशादिशून्यः ईश्वरः तर्हि कैवल्यं प्राप्ता बहवो हिरण्यगर्भादयः केवलिनः केवलानां जीवन्मुक्तानामाध्यक्षाः क्लेशादिशून्याः सन्ति, त एव ईश्वरतया सन्तु। अत्र समाधानं हि–ते हि हिरण्यगर्भादयः प्राकृतिकानि बन्धनानि पूर्वस्थितानि छित्त्वैव मुक्ताः न तु क्लेशादिपरामर्षशून्या ईश्वरस्तु सर्वदैव क्लेशात्मकबन्धनत्रयशून्यः श्रुत्यादिसिद्धः।

1. सांख्यसूत्रम्–1.104
2. श्रीमद्भागवद्गीता 13/22

ईश्वरस्य सदा क्लेशादिशून्यत्वे मानम्–

**तत्र यः परमात्मा हि स नित्यः निर्गुणः स्मृतः।**
**कर्मात्मा पुरुषो योऽसौ मोक्षबन्धैः स युज्यते।।**

सांख्यदर्शनं पञ्चविंशति तत्वानि स्वीकरोति। ईश्वरतत्वस्याधिकतया योगदर्शनं सेश्वरसांख्य इति कथ्यते। ईश्वरो हि नित्यः सर्वज्ञः, सर्वव्यापी परमात्मा, सर्वैश्वर्यसम्पन्नः सर्वशक्तिशाली च। सः सर्वदाबन्धनरहितः, ज्ञानराशिः, मुक्तपुरुष भिन्नः ईश्वरः।

## सत्कार्यवादस्य पर्यालोचनम्

असतः सज्जायते इति सौगताः, सतोऽसज्जायते इति नैयायिकाः, वेदान्तिनः सतो विवर्तः कार्यजातं न वस्तुसत्, सांख्यास्तु सतः सज्जायते इति। तथाहि

**आरम्भवादः कणभक्षपक्षः स कापिलः स्यात् परिणामवादः।**
**संघातवादस्तु भदन्तपक्षौ विवर्तवादादिरनेकपक्षः।।**[1]

सांख्यमते च सत्कार्यवादः प्रामाणिकः। तथा च कारिका–

**असद्करणादुपादानग्रहणात् सर्वसंभवाभावात्।**
**शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्।।**[2]

इदानीं प्रथममारम्भवादो निरूप्यते।

"सतोऽसज्जायते इति नैयायिकाः। सतः विद्यमानात् पूर्ववर्तिनो वस्तुनः कारणात् असत् प्रागभावप्रतियोगिकार्यं जायते। आरम्भवादः नैयायिकानां मुख्यः। ते कथयन्ति जीवानामदृष्टेन प्रेरितस्य परमेश्वरस्य इच्छया निमित्तकारणेन परस्परं विभक्ते वायुपरमाणुद्वये क्रिया जायते। ततस्तयोः पूर्वदेशसंयोगनाशपूर्वः परस्परसंयोगो जायते। तेन संयोगेनासमवायिकारणेन परमाणुद्वयेन च समवायिकारणेन द्वयणुकादिदिशा कार्यमवयवावयविभावसम्बन्धेन महावायुर्दोधूयमानो जायते। ततः एवं क्रमेणैव तेजोजलधरादीनां सर्वपदार्थानामुत्पत्या जगदुत्पतिर्भवतीति आरम्भवादो नैयायिकसम्मतः सिद्धयति।

संघातवादः–भगवतः बुद्धदेवस्य संघातवादः। संघातशब्दस्य सिद्धिप्रकारश्चेत्थम्–

---

1. सर्वज्ञात्ममुनिः।
2. सा० का०– का० सं०– 9

हन् धातो: "हलश्च"[1] इति सूत्रेण भावेऽर्थे घञि उपधावृद्धौ "होहन्तेर्ञ्णिन्नेषु"[2] इति हस्य कुत्वेन घकारे "हनस्तोचिण्णलो:"[3] इति तकारे संघात शब्द: सिद्धयति। संघसमूह इत्यर्थ:। अत्र अवयवानां समूह एव पदार्थो गण्यते। नैयायिकवत् अवयवावयविभाव: अत्र सिद्धान्ते नास्ति। बौद्धास्तु चत्वार: प्रसिद्धा:। तदुक्तं गङ्गाधरशास्त्रिणा–

क्षणिकमथ च शून्यं दु:खमेवं चतुर्द्धा
विसदृशिमति च स्वं लक्षणं भावनीयम्।।
गलितविषयरूपोपप्लवत्वाद्विशुद्धोद्भवति।
तदनु मुक्ति: शून्यविज्ञानधारा।।[4]

"इति भगवति बुद्धे शासति स्वोपदेशं निजमतिविविधत्वात्तस्य शिष्याश्चतुर्द्धा। जगृहुरणु तदुक्तेराशयं तेन भिन्ना अपि नहि विवदन्ते प्रोक्तसिद्धान्तसारे।।[5]

तत्र प्रथमो माध्यमिको द्वितीय: योगाचार: तृतीय: सौत्रान्तिक: चतुर्थ: वैभाषिकश्च। इह सर्वं शून्यमिति वैभाषिको वदति। ज्ञानधारां तु सती बाह्यं वस्तु शून्यमिति योगाचाराणां मतम्। आलयविज्ञानं यथा सदैव तिष्ठति तथैव बाह्यवस्तु सदैव तिष्ठतीति सौत्रान्तिको वदति क्षणिकं सदपरोक्षमेव बाह्यमिति वैभाषिकानामाशय:।

इमे चत्वारोऽपि बौद्धा: किमपि स्थिरमेकं तत्त्वं न स्वीकुर्वन्ति। किन्तु रूप-विज्ञान-वेदना-संज्ञा-संस्कारनामान: पञ्चस्कन्धा एवात्मशब्दवाच्या: भवन्ति।

तत्र सविषयाणि पञ्च ज्ञानेन्द्रियाणि, सविषयाणि च कर्मेन्द्रियाणिरूपस्कन्ध:। सुषुप्तिकालीनालयविज्ञानधारा जाग्रतकालीना प्रवृत्तिविज्ञानधारेति उभयीविज्ञानधारैव विज्ञानस्कन्ध:। एतदुभयस्कन्धसंस्कारजन्य: सुखदु:खाद्यनुभव एव वेदनास्कन्ध:। गौरश्व: महिष इति प्रभृति नामोच्चारणजन्यज्ञानसंस्कारराशिरेव संज्ञास्कन्ध:। वेदनास्कन्धजन्यरागद्वेषादयो मानमदगर्वादय: क्लेशा: धर्माधर्मादय: सर्वेपि षड्वर्गकोटि प्रविष्टा: संस्कारस्कन्ध:। इमे पञ्चस्कन्धा एव संघातशब्दवाच्या: बौद्धानामात्मा भवति।

---

1. अष्टा0 3/3/121
2. अष्टा0 7/3/54
3. अष्टा0 7/3/32
4. अलिविलासिसंलाप:।
5. तदेव।

विवर्तवादं वेदान्तिनः स्वीकुर्वन्ति। विवर्तो नाम अतत्त्वतोऽयथार्थतः असत्यरूपेण मिथ्यैव अन्यथा भानम् अन्यतया सत्ता कथ्यते। यथा अन्धकारे रज्जौ सर्पभ्रान्तिर्भवति। तत्र नहि रज्जौ कोऽपि विकारः जायते। व्यक्तिरेव स्वाज्ञानेन तां सर्पं मन्यते। तथैव जगदिदं सच्चिदानन्दरूपस्य ब्रह्मणो विवर्तोऽज्ञानेन ब्रह्मणः मायया सुखदुःखमोहात्मकं विवर्तते, भ्रान्तिरियं मिथ्याप्रतीतिरेवासौ यथा सच्चिदानन्दात्मकं ब्रह्म सुखदुःखमोहात्मकं भासते न हि तत्र ब्रह्मणि कोऽपि विकारः जातः। रज्जुवत् तद्धि तद्वदेव सच्चिदानन्दरूपं स्थिरमस्ति विवर्तप्रभावोऽयं यत् तत्रानेकत्वं विविधत्वं वैचित्र्यं च विभाति। उक्तञ्च विवर्तस्वरूपम्–

**दैवी ह्येषा गुणमयी मम माया दुरत्यया।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।।**[1]

रज्जौ भुजङ्गभानं विवर्तम्, स्वप्ने प्रपञ्चभानं विवर्तम्, समुद्रे आवर्तोद्वर्तनभानं विवर्तम् इति अन्यथातथ्यतया यद्भासते तद्धि सर्वं विवर्तशब्दवाच्यम्।

सांख्याचार्येभ्यो न रोचते उपरोक्तान् मतान्। ते हि परिणामवादिनः। "सतः सज्जायते"[2] इति परिणामवादः कपिलाद्याचार्यसम्मतः। उक्तं हि गीतायाम्–

**नासतो विद्यते भावो नाभावो विद्यते सतः।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः।**[3]

इति गीतानुसारेण सतः विद्यमानादेव प्रधानात् प्रकृतेः सत् विद्यमानमेव महदादि चतुर्विंशतितत्वं परिणमते।

नैयायिकादिमतान् खण्डयता माधवाचार्येण उक्तम्–असतः सज्जायते इति न प्रामाणिकः पक्षः। असतो निरुपाख्यस्य शशविषाणत्वकारणत्वमनुपपत्तेः। तुच्छातुच्छतयोस्तादात्म्यानुपपत्तेश्च। नापि सतोऽसज्जायते। कारकव्यापारात्प्रागसतः शशविषाणवत् सत्ता सम्बन्धलक्षणोत्पत्यनुपपत्तेः। नहि नीलं शिल्पीसहस्रेणापि पीतं कर्तुं शक्यते। नीलपीतयोरिव सदसतोर्विरोधात्। तस्मात् कारकव्यापारात् प्रागपि कार्यं सदेव। अत्रेदं नाशङ्कनीयं यत् घटादिकार्यं प्रागपि सदेव तर्हि किमर्थं कुलालादिकारकव्यापार तत्र सतश्चाभिव्यक्तिरुपपद्येत। सत एव घटादिकार्यस्य

---

1. श्रीमद्भगवद्गीता–7.14
2. सांख्यकारिका–व्याख्या।
3. श्रीमद्भ0 गी0 2/16

कारकव्यापारात् प्रागनभिव्यक्तस्य कारकव्यापारेण केवलमभिव्यक्तिर्भवति। यथा तिलेषु विद्यमानस्यैव तैलस्य तिलपीडनव्यापारः केवलमभिव्यञ्जकत्वात् कारणं भवति। गवामुदरे विद्यमानस्यैव दुग्धस्य गोदोहनव्यापारः केवलमभिव्यञ्जकत्वात् कारणं भवति।

असतः कारणे किमपि निदर्शनं न दृश्यते। अविद्यमानस्य कार्यस्येदं कारणमित्यत्र न कश्चिद्दृष्टान्तोऽस्ति। सांख्यैस्तु घटादि कार्यं प्राक् कारणरूपेण सदेवेति स्वीक्रियते। किञ्च मृदादिके घटादि कार्येण सह संबद्धं सद्घटादिकार्यमुत्पादयति उत असम्बद्धम्। सम्बद्धं चेत्तदानीं संबन्धिनो घटादेः सत्वमवश्यंभावि। असम्बद्धं चेद्यथा मृदादिकं कारणं स्वासम्बद्धमपि घटमुत्पादयति तथा पटादिकमप्युत्पादयेत्। तथाचोक्तं सांख्याचार्यैः–

**असत्वान्नास्ति सम्बन्धः कारणैः सत्वसङ्गिभिः।**
**असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥**

नैयायिकमते उत्पत्तेः पूर्वं घटादिकार्यस्य असत्वमेव।

अथैवमुच्यते असम्बद्धमपि तत्तदेव जनयति यत्र यच्छक्तम्, शक्तिश्च कार्यदर्शनोन्नेयेति। अयम्भावः यत् कार्येण सहासम्बद्धमपि तत्कारणं तदेव कार्यं जनयति यत्कारणं यत्र कार्ये शक्तम्। मृद्रूपं कारणं हि घटोत्पादने एव समर्थं न तु पटोत्पादन इति घटमेवोत्पादयति न पटम्। एतन्मतं न सङ्गच्छते। तिलेषु तैलजननशक्तिरित्यत्र तैलस्यासत्वे सम्बद्धत्वासम्बद्धत्वविकल्पेन तच्छक्तिरिति निरूपणायोगात् कार्यकारणयोरभेदाच्च कारणात् पृथक्कार्यस्यसत्वं न भवति। पटस्तन्तुभ्यो न भिद्यते तद्धर्मत्वात्, न यदेवं न तदेवं यथा गौरश्वः, तद्धर्मश्च पटः। तस्मान्नार्थान्तरम्।

अत्रेयमाशंका यत् यद्येवं स्यात्तर्हि प्रत्येकं त एव प्रावरणकार्यं कुर्युरिति चेन्न, संस्थानभेदेनाविर्भूत पटभावानां प्रावरणार्थक्रियाकारित्वोत्पत्तेः। यथा हि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निःसरन्ति, चाविर्भवन्ति एवं कारणस्य तन्त्वादेः पटादयो विशेषा निःसरन्तः आविर्भवन्तः उत्पद्यन्तः इत्युच्यन्ते। निविशमानास्तिरोभवन्तो विनश्यन्ति इति। न पुनः असतामुत्पत्तिः सतां वा विनाशः। **नासतो विद्यते भावो नाभावो विद्यते सतः**[1] इति भगवद्गीतायाः अभिप्रायोऽयं यत् असतोऽविद्यमानस्य भावः सत्ता न विद्यते, तथा सतो विद्यमानस्याभावोऽविद्यमानता न विद्यते। यत् सत् तत्सर्वदा सदेव यच्चासत् तदसदेवेति।

1. श्रीमदभ0 गी0 2/16

नैयायिकमतं "सतोऽसज्जायते" इति मतं खण्डयता ईश्वरकृष्णेन सत्कार्यवादं स्वीक्रियते। तथाहि–

**असद्करणादुपादानग्रहणात् सर्वसम्भवाभावात्।।**
**शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्।।**[1]

अयम्भावः यत् कार्यं कारणव्यापारात्प्रागपि सदेव। यतोऽहि असतः करणं न केनापि कर्त्तुं शक्यते। करणं क्रिया उत्पत्तिः। तथा उपादान ग्रहणात्। उपादानानि कारणानि। तेषां प्रागसत्त्वे तु तेन सह कारणस्य सम्बन्धो न संभवति। कार्येण सह सम्बद्धमेव कारणं कार्योत्पादकमित्यत्र किं नियामकमित्याशंकायामाह–सर्वसंभवाभावात् इति। कार्येणसहासम्बद्धस्यापि कारणस्य कार्योत्पादकत्वाङ्गीकारे सर्वं कार्यजातं सर्वस्माद्भवेत्। तथा तु न दृश्यते। लोके तु मृत्तिकया एव घटः तन्तुभ्य एव पटः सुवर्णादेव कुण्डलादिकमित्येवं कारणविशेषात्कार्यविशेषोत्पत्तिर्दृश्यते। अथ कार्यविशेषनियमार्थः कारणे कश्चिच्छक्तिविशेषः कल्प्यते। येन च शक्ति-विशिष्टत्वाच्छक्तं कारणं स्वशक्यस्यैव कार्यस्योत्पादकं नान्यस्येति चेत्कार्यस्य प्राक्सत्वं सिद्धत्येवेत्याह–शक्तस्य शक्यकरणात् मृदि कल्प्यमानः शक्तिविशेषो घटसंबद्धश्चेत् घटमेव जनयेन्नान्यथा। घटसम्बन्धश्च घटमन्तरेण न पम्भवतीति घटस्योत्पत्तेः प्राक् सत्वं सिद्धयति। कारणभावाच्च कार्यस्य प्राक्सत्वं सिद्धयति।

सत्कार्यवादस्य द्वे रूपे भवतः। परिणामवादः, विवर्तवादश्च। परिणामवादो यथा–दुग्धेभ्यो दधि। विवर्तवादः वेदान्तिनां मतम्। ते हि जगतः असत्यत्वं मन्यन्ते। ब्रह्म एवैकं सत्, जगच्च स्वप्नवदलीकमेव।

---

1. सां0 का0– का0–9

# चतुर्थोऽध्यायः

## मीमांसाभिमतप्रमेयस्वरूपविनिश्चयनम्

अथेदानीं मीमांसाभिमतप्रमेयविषये कियान्भेद इति समालोचयामः- द्रव्यगुणकर्मसामान्यशक्त्यभावभेदेन पदार्थः षड्विधः। तत्र परिमाणगुणाधारत्वं द्रव्यस्य लक्षणम्। तच्च पृथिवी, सलिलं, तेजः, पवनः, तमः, व्योम, कालः, दिक्, आत्मा, मनः, शब्द इत्येकादशविधम्। तत्र पृथिव्यप्तेजसां प्रत्यक्षत्वे न विवादः। परन्त्वत्र तार्किकैरेतदारम्भकतयाऽनुमेयाः परमाणवोऽङ्गीक्रियन्ते, भाट्टास्तु जालसूर्यमरीचिषु दृश्यमानानणून् विहाय परमाणून् नाऽभ्युपगच्छन्तीति विशेषः।

वायुरनुमेय इति परैरङ्गीक्रियते। एतन्मते स्पार्शनप्रत्यक्षस्सः। अयमेषामभिसन्धिः-कृष्णो घटः, पीतो घटः, श्वेतो घट इतिवत्, "शीतो वायुरुष्णो वायुरनुष्णाशीतो वायु"रिति वायुद्रव्यस्यैकस्य प्रत्यभिज्ञायमानत्वात् त्वगिन्द्रियप्रत्यक्षो वायुरिति। आलोकाभावस्तम इति न्यायमतम्। अत्र प्रतीयमानयोः गुणकर्मणोर्विना बाधकं प्रतिक्षेपायोगात् तदपि स्वयं द्रव्यमित्यमी मन्वते।

आकाशकालदिशोऽप्यत्र प्रत्यक्षाः। यदि दिक्कालाकाशा न प्रत्यक्षाः, तर्हि तेषां स्वरूपमेव हीयेत, प्रत्यक्षव्यतिरेकेण तेषु प्रमाणाभावात्। त्रीण्यपीमानि द्रव्याणि नित्यानि विभूनि च। तत्राऽऽकाशो विभुरपि घटाद्युपाधिवशात् घटाकाशादिव्यपदेशं लभते। कालो विभुरपि "पञ्चदशनिमेषाः काष्ठा" इत्याद्युपाधिवशादौपाधिकं भेदव्यवहारं भजते। एवं दिशोऽपि पूर्वापराद्युपाधिवशाद्भेदव्यवहारः।

चैतन्याश्रय आत्मा। "स मानसीन आत्मा जनाना" मित्यादिश्रुत्या स मानसप्रत्यक्षविषयः। अत्र जीवात्मा परमात्मेत्यात्मानं विभज्य तत्र परमात्मा ईश्वर इति नैयायिकादयो मन्यन्ते। तादृशेश्वरे अनुमानप्रमाणमुपन्यस्यन्ति-क्षित्यङ्कुरादिकं सकर्तृकं, कार्यत्वाद् घटवदिति।[1] एवमनुमिमानाश्च तन्तुवाय इव पटं परमेश्वरो

---

1. न्यायकुसु० पञ्चमस्तबके।

निखिलमपि जगत् सृष्टिसमये द्व्यणुकादिक्रमेण विरचयति, कविरिव काव्यमखिलमपि वेदराशिमारचयति, संहारकाले पुनः बालक इव घटं जगद्विनाशयतीति प्रतिपादयन्ति।

भाट्टाः पुनः- सर्वमिदं सृष्टिप्रलयादिकं पौरुषेयत्वञ्च वेदस्य निवर्तयितुं, अपौरुषेयत्वञ्च तस्य स्थापयितुं तादृशस्य सर्वज्ञपुरुषस्येश्वराभिधानस्य सद्भावाय दुह्यन्त इव तार्किकाणामनुमानं तीव्रेणाऽऽग्रहेण शतधा खण्डयन्ति। अतएव जगति मीमांसकानां निरीश्वरवादप्रथा। तावतस्तु विचार्यमाणे नाऽस्ति कश्चिन्मीमांसकः, यस्तार्किकान् खण्डयन् सकलजगन्नेतारं परमपुरुषमसन्तमभिप्रैति। वार्तिकप्रभृत्यद्य-पर्यन्तं ये ग्रन्थास्समुपलभ्यन्ते तेषु सर्वेष्वपि ईश्वरनमस्कारात्मकं मङ्गलं तैस्तैः कृतमुपलभामहे। वार्तिककारैरपि "विशुद्धज्ञानदेहाये"[1] त्यादिना ग्रन्थादौ महादेवो नमस्कृतः। पद्यमिदं कर्मपरत्वेन व्याचक्षमाणानां मतं "तेषामीश्वरद्रोहिणां प्रतीयमानार्थपरित्यागेनाऽर्थान्तरं कल्पयतामनुपादेयमेव तद्व्याख्यानम्" इत्यादिना युक्तिस्नेहप्रपूरणीकारैः शास्त्रदीपिकाव्याख्यातृभिर्निराकृतम्। अतएव नावमिक-देवताधिकरणस्य कर्माङ्गभूतदेवताया एव विग्रहादिकं नाऽस्ति, उपासनादौ तु तदस्तीत्येव तात्पर्यं वर्णयन्ति।

मनश्चैतन्मते अणुपरिमाणं न परममहत्परिमाणम्। नारायणपण्डितस्तु मनसो विभुत्वं स्वीकृत्य तत्राऽनुमानमेवं प्रदर्शयति-मनो विभु स्पर्शानर्हद्रव्यत्वात् ज्ञाना-समवायिकारणसंयोगाधारत्वाद्वा, आत्मवदिति। एवमनुमानेनाऽस्य विभुत्वे सिद्धेऽपि कर्णशष्कुल्यवच्छिन्नस्यैव गगनस्य यथेन्द्रियभावमातिष्ठन्ते नैयायिकाः, तथा देहावच्छिन्नस्यैव मनस इन्द्रियत्वं स्वीकार्यम्। न चैवं सति चाक्षुषादिप्रत्यक्षावसरे घ्राणादिप्रत्यक्षं स्यादिति शङ्कनीयम्, तत्र चाक्षुषसामग्र्याः प्रतिबन्धकत्वकल्पनेन दोषाभावात्। अतो विभुत्वेऽपि मनसो न काचिदनुपपत्तिरित्याशयः।

शब्दश्च गगनगुण इति परमतम्। कुमारिलमते तु श्रोत्रेन्द्रियग्राह्यश्शब्दत्व-जातिमान् नित्यस्सर्वगतश्शब्दो द्रव्यं मनः। पुनरयं शब्दो वाचकावाचकभेदन द्विविधः। तत्राऽवाचको भेरीप्रहरणजन्यध्वनिव्यङ्ग्यः। वाचकस्तु ताल्वादिव्यापारजन्यध्वनि-व्यङ्ग्यो वर्णात्मकः। वर्णात्मकानां शब्दानां सम्भूयैकत्ववाचिनां समाहारः पदमिति वदन्ति कौमारिलाः। एतादृशपदस्य पदार्थेन सह प्रत्याय्याप्रत्यायकभावलक्षण-स्सम्बन्धोऽपि नित्य एव। तत्सिद्धमेकादशं द्रव्यम्।

1. न्या.वा.-मङ्गलाचरणम्।

**प्राभाकरमते**

द्रव्यं, गुणः, कर्म, जातिः, शक्तिः, सादृश्यम्, संख्या, समवाय इत्यष्टौ पदार्थाः। द्रव्येष्वमी वायोरनुमेयत्वमभ्युपगच्छन्ति। तमो न द्रव्यम्। आलोकदर्शने सति ग्राहकभूतात्मस्वरूपोपलम्भात्सामान्यतो नीलद्रव्यस्मरणे सति स्मृतित्वमग्रहण-तस्तयोर्भेदाग्रहनिबन्धनस्तमो नैल्यव्यवहार इत्यमी वदन्ति।

आकाशादिः पूर्ववन्न प्रत्यक्षविषयम्, किन्त्वनुमेयमेव। एतन्मते चैतन्याश्रय आत्मा अहं प्रत्ययवेद्यः, न पूर्ववन्मानसप्रत्यक्षविषयः। तत्र अहं जानामीति सवार्थवित्तिषु व्यवहारदर्शनादात्मज्ञानयोरप्यप्रकाशमानत्वे तदनुपपत्तेस्तयोः कर्तृतया वित्तितया च प्रतीयमानत्वमभ्युपगच्छन्ति। मनसः पूर्ववदणुत्वम्, शब्दश्चाऽऽकाशगुणः न द्रव्यमिति नैयायिकानामिव नव द्रव्याण्येव प्राभाकराणामभिमतानि।

## गुणाः

**कुमारिलमते–**

रूपरसगन्धस्पर्शसंख्यापरिमाणसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहबुद्धि-सुखदुःखेच्छाद्वेषसंस्कारध्वनिप्राकट्यभेदादेकविंशतिविधो गुणः। तत्र नीलादिरूप-व्यक्तिरेकैव। "एकविंशतिर्गुणाः" इत्यबाधितव्यवहारानुरोधेन "गुणेगुणानङ्गीकारः" इति नियममनाद्रियमाणा इमे संख्याया अद्रव्यवृत्तितामस्यानुमन्वन्ते। नित्योऽपि संयोग एषां सम्मतः।

**प्राभाकरमते–**

गुणाश्च पूर्ववदेव। परन्तु पूर्ववत्संख्याया अमी गुणत्वं नाऽभ्युपगच्छन्ति, अपि तर्हि पदार्थान्तरत्वम्।

संयोगश्च त्रिविधः–अन्यतरकर्मजः, उभयकर्मजः, संयोगजश्चेति। नित्यसंयोगश्च पूर्ववदेभिर्नाऽङ्गीक्रियते।

## ज्ञानम्

**कुमारिलमते–**

बुद्धिर्ज्ञानम्। तदिदमेतन्मतेऽनुमेयम्। अवैदिका निरालम्बनवादिनो योगाचारादय-स्सर्वस्य ज्ञानाकारतां वदन्तो बाह्यार्थानपलपितुं प्रवृत्ताः। तत्प्रतिसमाधातुं ज्ञानस्या-प्रत्यक्षताममी साधयन्ति। ज्ञानमिदं क्वचिदुत्पद्यमानं समयान्तरे बाधितं सद्भ्रातिरूपं

भवति। क्वचित्तु यथावद्ग्राह्यं वस्तु गृहीत्वा कालत्रयेऽप्यबाधितं भवति। तत्राऽऽदिममप्रमाणम्, अन्तिमञ्च प्रमाणमिति व्यवह्रियते। किन्तत्प्रामाण्यमितिचेत्-अगृहीतग्राहित्वे सति अबाधितविषयत्वमेव। गृहीतविषयत्वान्न स्मृतिः प्रमाणम्, बाधितविषयत्वाच्च न भ्रान्तिः प्रमाणम्।

एतत्प्रामाण्यं प्रत्युच्चावचो विवादः-प्रामाण्यमप्रामाण्यञ्चेत्युभयं स्वत इति सांख्याः। अप्रमाण्यं स्वतः प्रामाण्यं परत इति बौद्धाः। उभयमपि परत इति नैयायिकाः। स्वतः प्रामाण्यमुत्पद्यते परतस्त्वप्रामाण्यमिति मीमांसकाः। एवञ्च सति नित्यवेदवाक्यजनितज्ञानस्य चिरमन्वेषणेऽपि पुरुषसम्बन्धिभ्रमप्रमादाशक्तिविप्रलिप्सा-दोषसंस्पर्शाभावादनपवादं स्वतस्सिद्धं प्रामाण्यं स्थिरीकृतं भवति।

ध्वनिस्तु वायुगुणश्शब्दाभिव्यञ्जकः। प्राकट्यं नाम विषयव्यस्थापक-स्सर्वद्रव्यवर्ती सामान्यगुणः।

**प्रभाकरमते–**

ज्ञानविषये महान् भेदः परिदृश्यते। ज्ञानमेतन्मते स्वयं प्रकाशमद्वैतिनामिव। तच्च यथार्थायथार्थभेदेन द्विविधमिति। अयथार्थज्ञानं भ्रमात्मकमिमे नेच्छन्ति।

न कदाचित्काचित् ज्ञानव्यक्तिरयथार्थभूता भवति। भ्रान्तिव्यवहारस्तु भेदाग्रहनिबन्धनः। अस्यायमर्थः-कश्चिच्छुक्तिं प्रत्यक्षमीक्षते। तत्र स्फुरितं रजतसादृश्यं फलाफल्यरूपं शुक्तेराकारं तिरोदधाति। स्मारयति च रजतम्। तदा च शुक्तिरजतयोर्भेदो न गृह्यते इति तदानीन्तनं ज्ञानं भ्रान्तिरित्युच्यते। वस्तुतस्तु न तदानीमेकमेव ज्ञानम्, अपि तु द्वे ज्ञाने। एकं "इदमि"ति प्रत्यक्षात्मकम्, अपरं "रजत" मिति स्मरणात्मकम्। तत्र प्रत्यक्षं शुक्तिविषयकं नाऽयथार्थम्। स्मरणमपि रजतविषयकं नाऽयथार्थमिति कस्येदानीमयथार्थत्वमिति गुरुमतावलम्बिनामभिप्रायः। एतावान्प्रयासः वेदवाक्यजन्य-बोधस्य प्रमाण्यस्वतस्त्वस्याऽऽप्रामाण्यशङ्कालेशविनिर्मोकेन निर्वाहयेति प्रतिभाति।

## कर्म

**कुमारिलमते–**

अविभुद्रव्यमात्रवृत्ति चलनात्मकं संयोगविभागयोर्मूलं कर्म प्रत्यक्षम्। तच्चोत्क्षेपणा-पक्षेपणाकुञ्चनप्रसारणगमनभेदात्पञ्चविधमेव।

**सामान्यम्–**

जातिषु सत्ताया द्रव्यगुणकर्मत्रितयमात्रवृत्तित्वं नैयायिका आचक्षते। मीमांसकाः

पुनर्जातिगतामपि तां मन्यन्त इति विशेषाः।

अनुपलब्धिप्रमाणगम्योऽभावो द्विविधः-संसर्गाभावोऽन्योन्याभावश्च। तत्र संसर्गाभावः प्रागभावप्रध्वंसाभावात्यन्ताभावभेदेन त्रिविधः। अत्राऽयं सङ्ग्रहश्लोकः।

**क्षीरे यो दध्यभावः स इह निगदितः प्रागभावः प्रवीणैः**
**प्रध्वंसाभावमाहुर्दधनि तु पयसोऽभावमाचार्यपादाः।**
**अत्यन्ताभावसंज्ञो भवति हि पवनाद्येषु रूपाद्यभावशो**
**न्याभावमाहुचाऽन्यो स्फुटयति तु घटादौ पटाद्यभावः।।** इति।

प्रभाकरमते-कर्मणोऽनुमेयत्वम्, न पूर्ववत्प्रत्यक्षविषयत्वमिति भेदः।

जातिष्वमी द्रव्यगुणकर्मवृत्तिसत्ताख्यां जातिं नाऽनुमन्यन्ते। ब्राह्मणत्वादिजाति-र्भाट्टानामभिमता, नैते तामङ्गीकुर्वन्तीति विशेषः।

एवं शक्तिः सादृश्यं संख्या समवाय इति चतुर्णां पृथक्पदार्थत्वमनुमन्यन्ते प्राभाकराः।

## मीमांसाभिमतप्रमाणपरीक्षणम्

अधुना मीमांसकाभिमत प्रमाणविषयिणी चर्चा क्रियते। मीमांसकाः (प्राभाकराः) प्रत्यक्षानुमानोपमानशब्दार्थापत्तयः पञ्च प्रमाणानि स्वीकुर्वन्ति। मीमांसकेषु तावत् भाट्टाः षट्प्रमाणानि प्रत्यक्षानुमानोपमानशब्दार्थापत्यनुपलब्धयः स्वीकुर्वन्ति।

न्यायाभिमतप्रत्यक्षानुमानोपमानशब्दप्रमाणान्यैतैरप्यभिमतम्। उपर्युक्तानां प्रमाणानां सविस्तृतं चर्चा मया पूर्वमेव पूर्वप्रकरणे विहिता। अवशिष्टयोः मीमांसासम्मतयोरर्था-पत्त्यनुपलब्ध्योरत्र व्याख्यानं क्रियते। द्वितीयाध्यायस्य प्रथमप्रकरणे वर्णिताः सर्वेऽपि प्रमाणविषयाः मीमांसकानामविरुद्धाः। अतः पुनरावृत्तिभिया द्विरुक्तिदोषभिया चाऽत्र तेषां चर्चा न क्रियते।

तथा च मीमांसकेषु प्रथमं प्रभाकरसम्मतमर्थापत्तिप्रमाणं प्रस्तूयते।

**अर्थापत्तेः स्वरूपम्**

नैयायिकैरर्थापत्तेः पृथक् प्रमाणत्वं न स्वीकृतम् किन्तु मीमांसकमतं खण्डयद्भि-भस्तैः यो विचारः व्यक्तस्स अतीव महत्वपूर्णः। नैयायिकमतेनार्थापत्तिप्रमाणस्यानुमाने एवान्तर्भावो भवति।

अर्थस्यापत्तिर्यस्मादित्यर्थापत्तिः, अर्थस्यापत्तिः अर्थापत्तिरिति द्विविधा व्युत्पत्तिः

भवति। प्रथमव्युत्पत्त्या शब्दप्रमाणवाचकत्वं द्वितीयव्युत्पत्या च विशिष्टप्रमाया:[1] वाचकत्वं भवति तस्य।

धर्मराजाध्वरीन्द्रमते "उपपाद्यज्ञानेन यदुपपादकस्य ज्ञानं तदेवार्थापत्ति:।[2] अर्थापत्तेर्भेदद्वयम्-दृष्टार्थापत्ति: श्रुतार्थापत्तिश्च। शबरमतेऽर्थापत्तिर्नाम-यदर्थकल्पनां विना दृष्टश्रुतयोरनुपपत्ति: स्यात्। यथा-शतवर्षजीवी देवदत्तस्य गृहासत्वेन बहि: सत्वस्य ज्ञानम्।।[3]

कुमारिलभट्टप्रभाकराभ्यां प्रस्तुतव्याख्ययोर्मतभेद:। भट्टस्तावत् भाष्यक्रमं न परिवर्तितवान् किन्तु प्रभाकर: भाष्यस्य क्रमे परिवर्तनं कृतवान्।[4]

**अर्थापत्तेर्भेद:**

कुमारिलमते भाष्ये प्रयुक्तौ दृष्टश्रुतशब्दावर्थापत्तेर्भेदद्वयस्य वाचकौ[5] किन्तु प्रभाकरस्यायमभिप्रायो यत् दृष्टश्रुतशब्दावेकस्यैव प्रमाणस्य नामान्तराविमौ न तु भेदौ। अत: श्रुतार्थापत्तिर्न पृथग्भेद:।[6]

धर्मराजाध्वरीन्द्रोऽर्थापत्ते: पृथग्भेद: श्रुतार्थापत्तिरिति कथयामास। एवञ्च श्रुतार्थापत्तेरभिधानानुपपत्तिरभिहितानुपपत्तिश्च भेद[7] इति प्रोवाच। यथा केनापि

---

1. अर्थस्य वस्तुन: आपत्ति: आपादनं सम्पादने प्रमाज्ञानमर्थापत्ति: प्रमा तर्कभाषा व्याख्या। बदरीनाथशुक्ल पृ0 157, अर्थस्यापत्ति: प्रमाज्ञानं यत: तदर्थापत्तिप्रमाणम् वेदान्तपरिभाषा व्याख्या-आनन्द झा, पृ0 203
2. तत्रोपपाद्यज्ञानेनोपपादकं कल्पनमर्थापत्ति:। तत्रोपपाद्यज्ञानं करणमुपपादकज्ञानं फलम्। येन विना यदनुपपन्नं तत्तत्रोपपाद्यम्, यस्याभावे यस्यानुपपत्ति: तत्तत्रोपपादकम्- रात्रिभोजनकल्पना। दृष्टार्थापत्तिर्यथा-इदं रजतमिति पुरोवर्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिध्यमानत्वं सत्यत्वेनुपपन्नमिति, रजतस्य सद्भिन्नत्वं सत्वात्यन्ताभाववत्वं वा मिथ्यात्वं कल्पयति। वेदान्तपरिभाषा पृ0 205
3. अर्थापत्तिरपि दृष्ट: श्रुतो वाऽर्थोन्यथा नोपपद्यत इत्यर्थकल्पना यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना-शाबरभा0 1/1/5
4. दृष्ट: श्रुतो वाऽर्थोऽर्थकल्पनाऽन्यथा नोपपद्यते। बृहती पृ0 85
5. पीनो दिवा न भुङ्क्ते चेत्येवमादिवच: श्रुतो।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरिष्यते।। श्लोक व0 उ0 अर्था0 51
6. श्रुतग्रहणमिदानीं किमर्थम्? दृष्ट इत्येव वक्तव्यम्। उच्यते-अभिधानान्तरमेव (दृष्टश्रुतो वेति) उपलब्धे: वाचकम्।
7. वे0 प0 (अर्था0)।

वक्त्रा द्वारकर्मकपिधानक्रियाबोधाभिप्रायेण द्वारमित्येवमुक्तम्, तत्र "पिधेहि" इत्याहृत्य शाब्दबोधो जायते। इदमभिधानानुपपत्तिरूपश्रुतार्थापत्तेरुदाहरणम्। एवमेव स्वर्गकामनया "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्योच्चारणेन तत्रापूर्वस्य कल्पना क्रियते। इदमभिहितानुपपत्तिरूपश्रुतार्थापत्तेरुदाहरणम्।

ध्यातव्यमिदं यत् धर्मराजाध्वरीन्द्रमते अत्र अन्वयव्याप्तिरसम्भवः व्यतिरेक्यनुमानञ्च वेदान्तिभिरस्वीकारादर्थापत्तेरन्तर्भावोऽनुमाने न सम्भवति।[1]

यद्यपि कुमारिलधर्मराजाध्वरीन्द्रावर्थापत्तेः पृथक् प्रमाणमङ्गीकुरुतस्तथापि तयोर्मते पारस्परिकविरोधोऽप्यस्ति। धर्मराजाध्वरीन्द्रः दृष्टार्थापत्तावनुपपन्नतायाः कारणं न स्पष्टयति कुमारिलश्च द्वयोस्तथ्ययोः पारस्परिकविरोध एवानुपपत्तेः कारणमिति स्वीकरोति। श्रुतार्थापत्तेः सन्दर्भविषये कुमारिलस्य मतमिदं यदत्र शब्दस्य वाक्यस्य वा कल्पनाऽवश्यकी, धर्मराजाध्वरीन्द्रमते चात्र कदाचित् शब्दस्य कदाचिच्च तथ्यस्य कल्पनाऽवश्यकी भवति।

श्रुतार्थापत्या यत्कार्यं भाट्टमीमांसकाः कुर्वन्ति तत्कार्यं त्वभिधाशक्तिव्यापारेणैव सम्भवति। यथा–"उभयं हविः अर्तिम् ऋच्छेत्" अस्मिन् वाक्ये उभयशब्दस्य परित्यागेन हविविकल्पस्य क्षेत्रं व्यापकं भवति। अतोऽभिधया वृत्त्या एव कार्यसम्भवे तदर्थं श्रुतार्थापत्तेः पृथक् प्रमाणत्वेन कल्पनमनावश्यकमेव। प्रभाकरमतेनान्यथानुपपत्तेरयमर्थः–एकस्य वस्तुनोऽसत्वेऽपरस्यापि वस्तुनोऽसत्वम्। अनुमानार्थापत्योर्भेदस्तु–अनुमानं तावत् व्यापाराधारितं न त्वर्थापत्तिरपि। कार्यात् कारणानुमाने च कार्यमनुपपन्नं भवत्यर्थापत्तौ च कारणमनुपन्नं भवति, कार्यकल्पनया च तस्य समाधानं भवति।

### अर्थापत्तेरुपयोगिता

मीमांसकाद्वैतवेदान्तिनां मतेऽर्थपत्तिप्रमाणेनैतादृशतथ्यस्य ज्ञानं भवति यज्ज्ञानमन्येन प्रमाणेन न सम्भवति। मीमांसकाः वैदिकमन्त्राणां व्याख्यार्थमनुच्चरितशब्दानामर्थज्ञानाय चास्योपयोगित्वं साधयन्ति। मृत्योरनन्तरमात्मनोऽमरत्वकल्पनाप्यर्थापत्यैव कुर्वन्ति मीमांसकाः। अद्वैतवेदान्तिनां मायासिद्धान्तोऽप्यर्थापत्तिप्रमाणाधारितः।

### अनुपलब्धिप्रमाणम्

अनुपलब्धिरपि प्रमाणमिति भाट्टमीमांसकाः। भाट्टाद्वैतवेदान्तिनामयमभिप्रायो

1. न चेयमर्थापत्तिरनुमानेऽन्तर्भवति। अन्वयव्याप्तिविज्ञानेन अन्वयिन्यनन्तर्भावात् व्यतिरेकिणश्च अनुमानत्वं प्रागेव निरस्तम्। वे० परि० पृ० 210

यत् स्थलविशेषे यद्वस्तुनोऽभावतदभावस्य प्रत्यक्षमनुपलब्धिप्रमाणेन भवति। यथा–एकत्र पूर्वं घटः, आसीत् परञ्चेदानीं नास्ति। अतस्तदभावबोधनार्थमनुपलब्धि-प्रमाणस्यावश्यकता। कुमारिलस्य मतमिदं यदभावस्य सन्दर्भेऽन्यानि पञ्च प्रमाणानि न चरितार्थानि भवन्ति। अतस्तद्ज्ञानार्थमनुपलब्धिप्रमाणमवश्यं स्वीकार्यम्।।[1]

धर्मराजाध्वरीन्द्रमते ज्ञानरूपकरणेनानुत्पन्नस्याभावानुभवस्यासाधारण-कारणस्यानुपलब्धिः प्रमाणमित्युच्यते। अनुमानादिजन्यातीन्द्रियाभावः, यथा–अहं पुण्याभाववान् सुखाभाववत्वात्, व्याप्तिज्ञानाधारितः यद्यत्र–यत्र सुखाभावः तत्र तत्र पुण्याभाव इत्यत्रातिव्याप्तिनिवारणार्थं लक्षणे "ज्ञानकरणाजन्यत्वं" विशेषणप्रयुक्तम्। अनुमानं हि व्याप्तिज्ञानजन्यम्, किन्त्वनुपलब्धिप्रमाण एतादृशो नास्ति।[2]

सर्वेषामपि कार्याणां प्रतीश्वरः, कालः, अदृष्टादयः कारणानि भवन्ति अत एतेषां परिहारार्थमनुलब्धिलक्षणे "असाधारण" पदस्य निवेशः। अस्यैवाभाव-स्यातिव्याप्तिनिवारणार्थमनुभवशब्दप्रयोगः। धर्माधर्मवस्तुषु प्रत्यक्षयोग्यता नास्ति अतस्तेषामनुपलब्धिः न योग्यानुपलब्धिः। प्रत्यक्षयोग्यवस्तुन अभावज्ञानमनुपलब्धिप्रमाणेन भवति न तु प्रत्यक्षायोग्यवस्तुन अभावस्यापि।[3] ज्ञानकारणस्य विद्यमानत्वेऽपि ज्ञानयोग्यपदार्थस्याज्ञानं तत्पदार्थस्याभावस्यैव ज्ञानस्य कारणं भवति। अत्यन्तदूरस्थ-वस्तुनोऽपि ज्ञानं न भवति किन्तु न तदभावः स्वीकर्तुं शक्यते यतोऽहि तद्ज्ञानस्य योग्य एव नास्ति। एतेनेदं सिद्ध्यति यत् ज्ञानयोग्यपदार्थानुपलब्धिरेव तद्पदार्थस्याभावं सिद्ध्यति न तु ज्ञानायोग्यपदार्थानुपलब्धिरपि।

भट्टपादानामयमभिप्रायो यत् प्रमाण–ज्ञेयवस्तुस्वभावयोश्च समानत्वेन भाव्यम्। भावात्मकपदार्थानां ज्ञानं प्रत्यक्षादिभावात्मकप्रमाणैरभावात्मकपदार्थानाञ्च ज्ञानम-भावात्मकप्रमाणैः भवति। तन्मतानुसारेण वस्तुसदसद्भेदेन द्विप्रकारकं भवति।

कुमारिलस्योपर्युक्तान् मतान् खण्डयता जयन्तभट्टेन प्रोक्तं यदभावेन कदाचित् भावपदार्थस्यापि ज्ञानं भवति। यथा–वृष्टेरभावः वायु द्वारा आनीतस्य

---

1. प्रमाणपञ्चकं यत्र वस्तुरूपे जायते। वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता। श्लोक वा०।
2. ज्ञानकरणाजन्यभावानुभवासाधारकारणनुपलब्धिरूपं प्रमाणम्,वेदान्तपरिभाषा पृ० 214–15 सं० लखनऊ–2021
3. न चाभावानुमितिस्थलेऽप्यनुलब्ध्यैवाभावो गृह्यतामविशेषात् इति वाच्यम्। धर्माधर्माद्यनुपलब्धिसत्वेऽपि योग्यमनुपलब्धेरभावात्, तस्या एवाभावग्राहकत्वात्। वे० परि० पृ० 216

तुहिणकणस्यानुमापको भवति। प्रमाणसामग्र्यामभावस्यापि सन्निवेशो भवति। अत: प्रमाणप्रमेययो: सत्तापरकएकरूपताया: सिद्धान्तोऽस्वीकरणीय:।[1]

नैयायिका: अनुपलब्धे: प्रमाणान्तरत्वं नाङ्गीकुर्वन्ति। तेषां मते तस्य प्रत्यक्ष एवान्तर्भावात्। अभावप्रत्यक्षेन्द्रियेण भवतीत्यनुभवसिद्धत्वात् इन्द्रियाणामभावप्रत्यक्षे जननीये योग्यानुपलब्धे: सहकारितामात्रेण निर्वाहे योग्यानुपलब्ध्यात्मकस्याऽनुपलम्भस्य न अतिरिक्तप्रमाणत्वम्।[2]

अत्र मीमांसको ब्रूते। चक्षुषाभावप्रत्यक्षो न भवति। इन्द्रियं हि स्वसम्बद्धार्थस्यैव ग्राहकं भवति। अभावेन सह चक्षुरिन्द्रियस्य न कोऽपि सम्बन्ध:। संयोगसमवायौ हि सम्बन्धौ। द्रव्ययो: संयोग:। अभावश्च न द्रव्यम्। अयुतसिद्धयो: समवाय:। चक्षुरभावौ च एकस्यानुपस्थितिदशायामपि तिष्ठत:। नैयायिका एतत्समाधानार्थं विशेष्यविशेषणभावस्य कल्पनां कुर्वन्ति किन्तु मीमांसका: वदन्ति यत् नायं सम्बन्ध:। सम्बन्ध: द्विष्ठ: भवति, किन्तु विशेषणता विशेषणे एव विशेष्यता च विशेष्य एव तिष्ठति। बौद्धदृष्ट्या च विशेषणविशेष्यभावसम्बन्ध: काल्पनिक एव।

## मीमांसाशास्त्रसम्मतापूर्ववैलक्षण्यपरीक्षणम्

वेदविहितकर्मफलविषये मीमांसकेषु मतद्वयमस्ति। प्रसिद्धिरियं तत्र यत् दु:खस्य निवृत्ति: सुखावाप्तिश्च सर्वेषामपि देहधारिणां लक्ष्यम्। कर्मविशेषानुष्ठाने प्राणिनां प्रवृत्तिस्तदैव भवति यदा तेनेष्टाभिलषितपदार्थस्य सिद्धि: स्यात्। अत: कुमारिलदृष्ट्या धार्मिककृत्यानुष्ठाने इष्टसाधनताज्ञानं कारणम्। किन्तु प्रभाकरमते कार्यताज्ञानमेव तत्र हेतु:। वेदविहितकृत्यानामनुष्ठानं कर्त्तव्यबुद्ध्या एव करणीयमिति प्राभाकराणामाशय:। तेनानुष्ठानेन सुखस्यापेक्षा न स्यात्। कुमारिलमते सन्ध्यावन्दनादि-नित्यकर्मणामनुष्ठानात् दुरितक्षयो भवति तदनुष्ठानाभावाच्च प्रत्यवायभाग् भवति पुरुष:। किन्तु प्रभाकरोऽनेन असहमतिं प्रकटीकुर्वन् कथयति यत् नित्यकर्मण: अनुष्ठानं वेदविहितत्वात् कर्त्तव्यमेव। वेदस्य अनुल्लंघनीयाज्ञा विद्यते यत्- "अहरह: सन्ध्यामुपासीत" इति। सिद्धान्तेऽस्मिन् श्रीमद्भगवद्गीताया: कर्मयोगस्य विपुल: प्रभाव:।

---

1. अभावश्च क्वाचिल्लिङ्गमिष्यते भावसंविद:।
दृष्टभावोऽपि वाभूवभ्रमसंयोगस्यानुमापक:।। तस्माद्युक्तमभावस्य नाभावेनैव वेदनम्-न्यायमञ्जरी-1/51
2. न्या0 सि0 मु0 किरणा0 का0 144

वेदप्रतिपाद्यानि चत्वारि कर्माणि भवन्ति–काम्यं, प्रतिषिद्धं, नित्यनैमित्तिकञ्च। विशेषकाम्यस्य करणीयकार्यं यथा–"स्वर्गकामो यजेत" इति काम्यकर्म विद्यते। "न कलञ्जं भक्षयेत्" इति प्रतिषिद्धकर्म अस्ति। अहैतुककरणीयं कर्म सन्ध्यावन्दनादिकं नैमित्तिकं कर्म विद्यते। अनुष्ठानानन्तरं सद्य एव फलनिष्पत्तिः भवति किन्तु कालान्तरे एव। अत्रेयं शंका उदेति यत् फलकाले कर्मणोऽभावे च कथं तत्फलोत्पादकम्? मीमांसका अत्र वदन्ति फलोत्पादनेऽपूर्वः कारणम्। प्रत्येकस्मिन् कर्मण्यपूर्वोत्पादिका शक्तिः भवति। कर्मणोऽपूर्वो जायतेऽपूर्वाच्च फलम्। तथा चोक्तम्–

याागादेव फलं तद्धि शक्तिद्वारेण सिद्ध्यति।
सूक्ष्मशक्त्यात्मकं वा तत् फलमेवोपजायते॥[1]

अतोऽपूर्वः कर्मफलयोर्मध्यदशायाः बोधकः। अनेनैव कारणेन भगवान् शंकराचार्योऽपूर्वं कर्मणः सूक्ष्मोत्तरावस्था फलस्य च पूर्वावस्था मनुते। "न चाप्यनुत्पाद्य किमप्यपूर्वम्, कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति, अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वनामास्ति इति तर्क्यते।[2]

तत्र तावत् विहितक्रियाजन्यं यावत्फलोत्पत्यवस्थाय्यपूर्वं नाम किञ्चिद्वस्तु स्वीकुर्वन्ति मीमांसकाः, गौतमीयाः, काणादाश्च। तदेव इदानीं चिन्त्यते किं तदभ्युपगमो युक्तियुक्तो न वेति? तत्र–

फलाय विहितं कर्म क्षणिकं चिरभाविने।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रतिगम्यते॥[3]

तस्मादस्त्यपूर्वमिति। अत्रापरे प्रत्यवतिष्ठन्ते। प्रमाणाभावान्नापूर्वसिद्धिः। तथाहि–न तावदत्र प्रत्यक्षादिकं प्रवर्तते, रूपाद्यनात्मकत्वेन चक्षुरादिभिरसम्बन्धात्। नाप्यनुमानम्, केनचिल्लिङ्गेन सहादृष्टसङ्गतित्वात्। अपि च स्वतंत्रस्य वापूर्वस्यानुमेयत्वम्? अस्त्यपूर्वमिति, अन्यविशेषणस्य वा? न तावत् स्वतंत्रस्य, सत्तायां हि साध्यमानायां भावधर्मस्य हेतुत्वं स्यात्? अभावधर्मस्य वा? उभयधर्मस्य वा? तत्र भावधर्मस्या-सिद्धत्वम्, अभावधर्मस्य विरुद्धत्वम्, उभयधर्मस्यानैकान्तिकत्वम्। एतदभिप्रेत्यैव प्रत्यक्षसूत्रे वार्त्तिकारा आहुः–

1. तन्त्र. वा0 अ.2410-1,सूत्र-5
2. शाङ्कर भा0 3/2/40।
3. तन्त्रवार्तिकंशाबरभाष्यम्, पृ. 359, आनन्दाश्रमसंस्कृतग्रन्थावलि-97

सत्ता च नानुमानेन कस्यचित् प्रतिपद्यते।
धर्मेणान्यद्विशेष्यं चेत् पक्षोऽसिद्धविशेषणः॥[1]
तस्माददृष्टपूर्वत्वाद् केनचिद्वस्तुना सह।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत्॥[2] इति

तस्माद् यागस्वर्गसाध्यसाधनभाव इव अपूर्वेऽपि न प्रत्यक्षानुमानयोः प्रवृत्तिः, नापि शब्दः, तदनुपलम्भात् यदाह वार्त्तिककारः–

पदवाक्ये न चैतस्य वाचके शृणुमः क्वचित्।
शब्दगम्यत्वमप्यस्य तेन नैवोपपद्यते॥[3]

तत्र पदं तावन्न किञ्चित्साक्षादेतस्य वाचकमस्ति"। यत्वपूर्वमिति पदं तत्–

प्रमाणपञ्चकाज्ञानादपूर्वं षष्ठगोचरः।
तस्मादन्वर्थनामैतन्न वस्तुत्वेन गम्यते॥[4]

इति रीत्यान्वर्थत्वात् सुतरामस्तित्वं बाधते। वाक्यस्य त्ववाचकत्वादेवाप्रामाण्यम्। येऽपि शब्दान्तरादयः श्रुतिलिङ्गादयश्च शब्दप्रकारास्तेऽपि च स्वभावसिद्धे वस्तुनि भेदे विनियोगे वा कारणं न सद्भावे कस्यचिदित्यपूर्वं प्रति अप्रामाण्यम्। विधिप्रतिषेधविषयत्वाच्च समस्तस्य वेदस्य न क्वचिद्वस्तुस्वरूपप्रतिपादनार्थत्वं भवतीति नागमगम्यमपूर्वम्। उपमानगम्यमपि काममनुपलभ्यमानशशविषाणादि सारूप्यादसद्रूपमेवोपमेयं भवेत्। नहि अपूर्वे कल्पिते तेनैव स्वर्गजननादपूर्वोत्पत्तिं प्रत्यन्यथासिद्धस्य यागस्य स्वर्गजनकता सम्भवति। न चापूर्वस्य शक्तिरूपत्वाद अवान्तरव्यापारत्वाद्वा ज्वालादिभिरिव न तेन यागस्यान्यथासिद्धिः, शक्तिव्यापारयोः शक्तिमद्व्यापारवन्निष्ठत्वनियमेन शक्तिमति व्यापारवति च यागे नष्टे शक्ति-व्यापारयोरवस्थानानुपपत्तेः। यदि च फलबलकल्प्यस्यापूर्वस्य आत्मनिष्ठत्वं कल्प्यते।

तदा नोक्तानुपपत्तिः। यथोक्तम्–

यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम्।
तद्विनाशे ततो न स्यात् कर्तृस्था तु न नश्यति॥[5]

1. श्लोकवार्तिकम्–कुमारिलभट्टः।
2. तदेव।
3. तन्त्रवार्तिकम्–पृ.359
4. तन्त्रवार्तिकम्–पृ.सं. 359
5. तन्त्रवार्तिककारः–पृ. 369

शक्तिः कार्यानुमेयत्वात् यद्गतैवोपयुज्यते।
तद्गतैवाभ्युपेतव्या स्वाश्रयान्याश्रयापि वा॥[1]

तदापि–

अर्थापत्त्यापि नैवेतदस्तीत्येवं प्रतीयते।
अन्यथाप्युपपन्नत्वात् फलयागादि संगतेः॥[2]

यदि यागस्य विनाशित्वादन्येन तत्सम्बन्धिना फलं साध्यमानं यागेन साधितं भवति तदा यागध्वंस एव फलजनकत्वं कल्प्यताम्। ध्वंसे यागजन्यत्वं स्थायित्वं च क्लृप्तमेव, केवलं फलजनकत्वं कल्पनीयमिति लाघवम्। अपूर्वकल्पनायां तत् सद्भावस्तस्य स्थायित्वं यागजन्यत्वं स्वर्गजनकत्वमिति बहुतरं कल्पनीय मापतति। किञ्च, विनाशिनि हि कर्मणि चोदिते विनाशस्योपस्थितित्वात् तस्यैव व्यापारत्वं युक्तम्।

यथा वा वार्त्तिककार आह–

यद्वा कर्मविनाशोऽयं फलं नः साधयिष्यति।
भङ्गियागविधानाद्धि तदयत्नेन कल्प्यते॥[3]

न च ध्वंसस्य कारणत्वे कारणभूताभावप्रतियोगित्वेन यागस्य प्रतिबन्धकत्वापत्तिरिति वाच्यम्, यस्मिन्नभावे संसर्गाभावत्वेन कारणता तत्प्रतियोगित्वस्यैव प्रतिबन्धकत्वपदार्थत्वात्। प्रकृते तु ध्वंसत्वेन कारणता न संसर्गाभावत्वेनेत्यदोषः। यत्तु ध्वंसस्याभावरूपत्वादभावस्य केवलस्य कुत्रापि न कारणत्वं दृष्टम्, अतएव वार्त्तिककारा आहुः–"न च लोकेऽपि क्वचिदभावः कारणत्वेन दृष्टः, यदि तु क्वचिदुदाह्रियेत, शक्यं तत्र भावान्तरं दर्शयितुं न त्वत्रापूर्वादृते तादृक् किञ्चिदस्तीति।"[4]

अतएव आचार्या ऊचुः–

स्वकाले यदकुर्वंस्तत्करोत्यन्यदचेतनः।
प्रत्यवायोऽपि तेनैव नाभावेन स जन्यते॥[5]

1. तन्त्रवार्तिकम्–पृ.369
2. तदेव पृ. .360
3. तन्त्रवार्तिकम्–36
4. शाबरभाष्यम्।
5. न्याय कुसु०।

ननु ध्वंसस्यैव व्यापारत्वे तस्याविनाशित्वेन कीर्तनप्रायश्चित्तादिना नाशानुपपत्तेः "धर्मः क्षरति कीर्तनात्", "प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि" इत्यादिशास्त्र-विरोधः। नह्यनयोः शुभाशुभकर्मनाशकत्वम्, तयोराशुतरविनाशित्वेन नाशकारणानपेक्षणात्। अतः कीर्तनप्रायश्चित्तादिनाश्यं यागादिजन्यमपूर्वमावश्यकमिति चेत् न, क्लृप्तध्वंसस्यैव व्यापारत्वेऽवधारिते कीर्त्तनादीनां फलोत्पत्तिप्रतिबन्धकत्वमात्रकल्पनात्। सर्वथा नास्त्यपूर्वमिति प्राप्ते ब्रूमः-फलं तावत् प्रधानकालान्तरभावीति निर्विवादम्। नहि निरतिशयसुखदुःखरूपयोः स्वर्गनरकयोरस्मिन् जन्मनि उपयोगः सम्भवति। ऐहिकस्यापि वृष्टिपश्वादेः साङ्गप्रधानजन्यस्य न प्रधानमात्रानुष्ठानादुत्पत्तिः। अतः कालान्तरभाविफलोत्पत्तिर्न क्षणिकात् कर्मणः व्यापारमन्तरेण सम्भवतीति मध्ये कश्चन व्यापारः कल्पनीयः यः श्रुताविरोधी भवेत्। "धर्मः क्षरति कीर्तनात्", "प्रायश्चित्तेन नश्यन्ति पापानि सुबहून्यपि" इति कीर्तनप्रायश्चित्तादि नाश्यमपूर्वमेव व्यापारत्वेन कल्पनीयं युक्तम्। न ध्वंसः, तस्याविनाशित्वात्। अतो ध्वंसं परित्यज्यापर्वकल्पनायां गौरवेऽपि तस्य फलमुखत्वाददोषत्वम्।

इदानीमपूर्वप्रामाण्यं परीक्ष्यते तावत्। तत्रायमपूर्वो यागजन्यः कर्मजन्यो वा भवतीति विविच्यते।

तत्र श्लोकवार्तिके भट्टेन मीमांसाशास्त्रस्य प्रयोजनमुक्तं यत्–

**अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम्।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्।।**[1] इति।

एतेन ज्ञायते यत् धर्मविचार एव मीमांसादर्शनस्य मुख्यं प्रयोजनमस्ति। अथ को धर्मः? इति जिज्ञासायामर्थसंग्रहे लौगाक्षिभास्करेणोच्यते यत् यागादिरेव धर्मः, तल्लक्षणञ्च वेदप्रतिपाद्यप्रयोजनवदर्थो धर्म इति। कथं यागादिरेव धर्मः, नान्य इति चेदुच्यते यद् भगवती श्रुतिरेव यागादीनां प्राथम्येन धर्मत्वं प्रतिपादयति। तद्यथा-"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।"[2]

एतेन इदमायाति यत् याग एव प्रथमो धर्म इति। अस्यैव धर्मरूपस्य यागस्य वेदप्रतिपाद्यत्वं प्रयोजनवत्वमर्थवत्वञ्च लक्षणमुपपन्नं जायते। "यागादिरेव धर्मः" इत्यत्र आदिपदेन दानहोमादि द्रव्यगुणादयश्च गृह्यन्ते, ते सर्वे यागरूपतया धर्मपदवाच्याः भवन्ति।

1. श्लोकवार्तिकम्, श्लोक सं0 11
2. शु0 य0 सं0-31/16, ऋ0 सं0 10/40/16

"यज्ञो वै श्रेष्ठतमं कर्म"[1] "वेदा हि यज्ञार्थमभिप्रवृत्ता:"[2] "फलयुक्तानि कर्माणि"[3] इत्यादिशास्त्रवचनैर्यागादिरूपकर्मण: श्रेष्ठत्वं तस्य नितरां फलोपेतत्वञ्च प्रतिपाद्यते। भगवता बादरायणेन वेदविहितकर्मणामवश्यं फलकत्वेऽपि तेषां फलप्रदाता ईश्वरो मन्यते, परन्तु महर्षिजैमिनिस्तु कर्मण: फलदाता कर्मैव मनुते। वेदान्तदर्शनानुसारं कर्मत्यागानन्तरमेवात्मज्ञानं जायते, परन्तु मीमांसादर्शनं "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा:" इति प्रत्यक्षतया श्रुत्या सर्वजनैरपि यावज्जीवनं कर्म कर्त्तव्यमेव इत्युपदिशति। गीतायां भगवता श्रीकृष्णेनापि उपदिष्टम्–

**यज्ञदानतप: कर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।।**[4]

मीमांसादर्शनानुसारं वेदविहितानि कर्माणि सामान्यतया नित्य-नैमित्तिक-काम्य-निषिद्धभेदात् चतुर्विधानि विभक्तुं शक्यन्ते। तत्रोक्तचतुर्विधकर्मणोऽनन्तरमेव न फलसम्पत्तिरतोऽपूर्वस्य व्यापारत्वं कल्प्यते।

जैमिनीयन्यायमालायामपि सदसदभावसंशयमुद्भाव्य पूर्वोत्तरपक्षाभ्यां यागजन्या काचिददृष्टशक्तिरेवापूर्वपदार्थ इति सिद्धान्तितम्। तद्यथा–

**अपूर्वसद्भावसंशये सति नास्ति तत्।**
**मानाभावात् फलं यागात् सिद्ध्येच्छास्त्रप्रमाणत:।।**[5]
**क्षणिकस्य विशिष्टस्य स्वर्गहेतुत्वकल्पनम्।**
**विरुद्धमान्तरेणात: श्रेयोऽपूर्वस्य कल्पनम्।।**[6]
**अवान्तर्व्यापृतिर्वा शक्तिर्वा यागजोच्यते।**
**अपूर्वमिति तद्भेद: प्रक्रियातोऽवगम्यताम्।।**[7]

अधिकरणेऽस्मिन् पूर्वपक्षिणा प्रोक्तं यदपूर्वसद्भावे मानाभावात्, नश्वरस्य यागकर्मण: कालान्तरभाविस्वर्गसाधनत्वमनुपपन्नमिति। सिद्धान्तपक्षिणा तदोच्यते

---

1. शत0 ब्रा0 1/7/1/5
2. सूर्यसिद्धान्त:-श्लोक:-2
3. का0 श्रौ0 सू0 1.1.2
4. श्रीमद्0 गी0 18/5
5. जैमि0 न्याय0 मा0 वि0 2/1/2
6. तदेव।
7. तदेव।

यत् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति विधिवाक्ये तृतीयया श्रुत्या यागस्य स्वर्गसाधनत्वं श्रूयते, तच्च यागजन्यापूर्वशक्तिकल्पनद्वारैवोपपन्नञ्जायते।

न च अपूर्वे कल्पिते तस्यैव स्वर्गसाधनत्वाद् यागस्य स्वर्गसाधनत्वश्रुतिर्विरुध्येतेति वाच्यम्। यागावान्तररूपेणापूर्वशक्तेः स्वीकारात्। न हि "कुठारेण छिनत्ति" इत्यस्मिन् वाक्ये उद्यमननिपतनयोरवान्तरव्यापारयोः सत्वे कुठारस्य साधनत्वमपैति। एवञ्च यथा अङ्गारजन्यमौष्ण्यं शान्तेष्वपि अङ्गारेषु जलेऽनुवर्तते, तथैव यागजन्यमपूर्वं नष्टेऽपि यागे यागकर्तुरात्मन्यनुवर्तत एव।

एवं रीत्यापूर्वमिदं दर्शपूर्णमासयागे पूर्वाचार्यैः चतुर्विधं प्रदर्शितम्। तच्च फलापूर्वं, समुदायापूर्वम्, उत्पत्त्यपूर्वम्, अङ्गापूर्वञ्चेति। सम्प्रदायसिद्धयागप्रक्रियायां प्रथमं तावत् फलवाक्येन यागकर्मणः फलसाधनता बोध्यते, यथा—यागेन स्वर्गं भावयेदिति। कथं विनश्वरेण यागेन फलमवाप्तव्यमिति जिज्ञासायामपूर्वं कृत्वा इत्युच्यते। कथमपूर्वमुत्पाद्यत इत्यपेक्षायां यागानुष्ठानप्रकारेण इति वक्तव्यम्। अत एव दर्शपूर्णमासानुष्ठाने पूर्वोक्तानि चतुर्विधान्यपूर्वाण्युत्पद्यन्ते। तत्र येन स्वर्गरूपं फलमधिगम्यते तत्फलापूर्वं कथ्यते, परमापूर्वमित्यस्यैव नामान्तरम्। अपि च अमायां पूर्णिमायाञ्च त्रयाणां यागानां एकैकः समुदायो भवति, तद्भिन्नकालवर्तिसमुदायद्वयजन्यमपूर्वद्वयमुत्पद्यते। एवमेव तयोः समुदाययोरेकैकस्य आरम्भाय एकैकसमुदायवर्तिनां त्रयाणां यागानां भिन्नकालवर्त्तित्वेन संघाताभावात् यागत्रयजन्यानि त्रीणि उत्पत्त्यपूर्वाणि प्रादुर्भवन्ति। तेषां त्रयाणामपि यागानामङ्गोप-कारमन्तरेण निष्पत्त्यभावादङ्गानामनेकक्षणवर्तिनां संघातासंभवात् अनेकानि अङ्गापूर्वाणि उत्पद्यन्ते।

अत्रेदमवधेयं यत् यानि अङ्गानि साक्षात् परम्परया वा प्रधानयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि भवन्ति तानि सन्निपात्योपकारकाणि उच्यन्ते। यथा—व्रीह्यादिद्रव्याणि, तत्संयुक्तावहनप्रोक्षणादीनि, अथ च अग्न्यादिदेवतातत्संयुक्तयाज्यानुवाक्यानुवचनादीनि इति।

एवं रीत्या सत्यपि प्रकारभेदे सर्वाण्यपूर्वाणिपरमापूर्वनिष्पत्तौ साक्षात्परम्परया वा व्यापृतानि भवन्ति, तत्पश्चादेव परमापूर्वं स्वर्गादिरूपं फलमुत्पादयितुं प्रभवन्ति। तथा अनेन क्रमेण सर्वविधानामपूर्वाणां प्रकृतितया यागादिकं कर्म स्वर्गादिफलानां साधनतामुपैति।

अतः परं विचार्यते यत् अपूर्वमिदं मीमांसासम्मतं केन प्रकारेण साधयितुं शक्यत इत्यत्रास्ति प्रामाण्यपरीक्षावसरः। तच्चास्ति अर्थापत्तिप्रमाणम्। अत्र मीमांसकाः

"अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्तरकल्पनमर्थापत्तिरित्यर्थापत्तेर्लक्षणं कुर्वन्ति, तथा अनेनैव अर्थापत्तिप्रमाणेन अपूर्वं प्रमाणयन्ति, अपि च तेऽर्थापत्तेर्दृष्टार्थापत्तिः श्रुतार्थापत्तिरिति भेदद्वयं प्रतिपादयन्ति। तदनुसारं यया दृष्टार्थमुपपन्नतां प्रतिपद्यते सा दृष्टार्थापत्तिः, अथ च यया श्रुतार्थमुपनन्नतां प्रयाति सा श्रुतार्थापत्तिर्भवति। दृष्टार्थापत्यां वस्तुन उपपत्यै अर्थान्तरं कल्प्यते। यथा–"पीनोऽयं देवदत्तः दिवा न भुङ्क्ते" इत्यत्र रात्रौ भुक्तः स्यात् इत्यर्थान्तरस्य कल्पना क्रियते। एवञ्च श्रुतार्थापत्यां वस्तुनमुपपत्यै शब्दान्तरं कल्प्यते, यथा–"पिधेहि" इत्येतत्पदमाकर्ण्य "द्वारम्" इति पदान्तरं कल्प्यते।

एवं रीत्या "ज्योतिष्टोमेन स्वर्गकामो यजेत" दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिषु वाक्येषु श्रुतार्थस्य स्वर्गरूपफलस्योपपत्यै प्रत्यक्षयागादिकारण-व्यतिरिक्तं तज्जन्यमदृष्टमपूर्वं कारणान्तरं कल्प्यते। अपूर्वमिदमदृष्टत्वात् प्रत्यक्षादिप्रमाणानाम् अविषयः। अतएव मीमांसकमूर्धन्येन कुमारिलभट्टेनोक्तम् अपूर्वप्रामाण्ये–

यत्तु प्रत्यक्षादिगम्यत्वमस्य नास्तीति सत्यम्।
श्रुतार्थापत्तिव्यतिरिक्तैर्न गम्यते स त्वदोषैः॥[1]

अपि च न्यायकोशकारेणापि अपूर्वस्य अदृष्टत्वं स्वर्गसाधनत्वञ्चाङ्गीकृतम्। तन्मते–यागादिजन्यः स्वर्गादिजनकोऽदृष्टः कश्चन गुणविशेषोऽपूर्वपदार्थ इति।

## मीमांसाशास्त्रे ईश्वरस्यावधारणा

अनन्तदिङ्मण्डलमेव यद्वपुर्यद्रोमराजिश्च रवीन्दुतारकाः।
यत्प्राणरूपेण तु कर्मराजते विराड्वपुष्कं पुरुषं तमाश्रये॥[2]

यथैक एवाद्वितीयः परमात्मा त्रिभिर्ब्रह्मविष्णुमहेशविराड्रूपैः प्रतिभासते। एवमेवाध्यात्माधिदैवाधिभूतयावत्त्रय सम्बद्धतयाऽपौरुषेयः सदा सत्तावान् वेदोऽपि काण्डत्रयात्मकः। तस्य कर्मोपासनाज्ञानात्मकस्य काण्डत्रयस्य च सम्बन्धेनैव भावमाहात्म्यमधिकाधिकं विज्ञायते। वेदे च कर्मण एव पूर्वप्रतिपाद्यत्वम्। तदुक्तम्–

कर्मणाऽमी भान्तिदेवाः परत्र कर्मणैवेह पप्लवते मातरिश्वा।
अहोरात्रं विदधत् कर्मणैवातन्द्रितः शश्वदुदेति सूर्यः॥[3]

---

1. न्यायश्लोकवार्तिकम्।
2. मीमांसादर्शनम्।
3. मीमांसादर्शनम्।

कर्मैव जगतो मूलं भवति। तत एवोत्पत्तिस्थितिप्रलयाः सम्भवन्ति ब्रह्माण्डानाम्। तदुपजीव्यत्वादेव "एकोऽहं बहुस्यां प्रजायेय" इत्यादयः श्रुतयश्चरितार्थतां लभन्ते। कारणतापि कर्मण एव रूपान्तरम्।

**नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योम परो यत्।**
**किमावरीयः कुह कस्य शर्मन्नम्भः किमासीत् गहनं गभीरम्।।**

एवं विधानां श्रुतीनामपि चारितार्थ्ये कर्मैव कारणत्वभाक्।

ईश्वर एव रजोगुणाधिष्ठातृ ब्रह्म, सत्वगुणाधिष्ठातृ विष्णु तमो गुणधिष्ठातृरुद्र-भावं समासाद्य स्वयं ब्रह्माण्डस्योत्पत्तिं स्थितिं लयं च विदधाति। अत्रापि कर्मण एव प्राधान्यम्। अनन्तकोटिब्रह्माण्डानां सृष्टिस्थितिप्रलयाः कर्मणैव भवन्ति। ब्रह्माण्डस्य स्थितौ कर्मैव धर्मरूपतामासाद्य ब्रह्माण्डं पाति। कर्मणैव जीवानुद्भिजस्वेद-जाण्डजजरायुजयोनिभिः समुन्नमय्य देवैरपि दुरापां मनुष्ययोनिं प्रापयति। अभ्युदयनिः-श्रेयसौ च तदेव वितरति। किञ्च परमपुरुषार्थकारणत्वात् कर्मणो माहात्म्यं वेदेषु सर्वधर्मप्राधान्येन वर्णितम्।

कर्मप्राधान्यमुपगच्छतां विदुषां मतद्वयं दृश्यते। प्रथममतावलम्बिनो विपश्चित ईश्वरास्तित्वोपगमे न किञ्चिदपि प्रयोजनमाकलय्य आदितोऽन्तं यावत् कर्मण एव शक्तिर्नेतरस्येति सिद्धान्तं स्थिरीकृत्य जैनबौद्धादिसिद्धान्तान् प्रवर्तितवन्त इति स्वतः सिद्धम्।

कर्मप्रधानानां विद्वद्वर्याणां यदन्यं मतं तत्सर्ववादिनामेव सम्मतम्। वेदानुकूलं सर्वहितप्रदं सर्वतन्त्रसिद्धान्तसिद्धं पूज्यपादैर्महर्षिभिरेक्यमत्या स्वीकृतम्। तदेव कर्ममीमांसादर्शनेनानेन प्रतिपाद्यते। ततश्च "अथातो धर्म जिज्ञासा"[1] इति प्रथमसूत्र-मारभ्य "तदनुशासनं प्रभुसम्मितं प्रभुसम्मितम्"[2] इत्यन्तं प्रथमपादसमाप्तिः।

"कर्मबीजं संस्कारः"[3] आधिक्यं शब्दरूपयोर्नामरूपात्मकत्वाद्विश्वस्य नामरूपात्मकत्वाद्विश्वस्य"[4] "प्राकृतिकः स्पन्दः क्रिया"[5] "तस्मात् कर्मप्रशस्यं

1. जै0 सू0 1/1/1
2. मीमांसादर्शनम्।
3. मीमांसादर्शनम्।
4. मीमांसादर्शनम्।
5. मीमांसादर्शनम्।

प्रमाणञ्च प्रशस्यं प्रमाणञ्च"[1] इत्यादिभिः सूत्रैः सर्वत्र कर्मण एव प्राधान्यत्वं निदर्शितम्। किं बहुना चतुर्थपादान्तर्गतैः "उभयतः सृष्टिः"[2] इति सूत्रमारभ्य "अत्र काम्यफलं निःश्रेयसञ्च निःश्रेयसञ्च"[3] इत्यन्तं यावत् कर्मण एव रहस्यं समुद्घाटितं मुनिना।

अतश्च भारद्वाजदर्शनमिदं कर्ममीमांसादर्शनमवश्यमध्येयमद्यतनैः स्वतंत्रभारतीयैः कर्मरहस्यं बुभुत्सुभिरिति।

मीमांसकाः साक्षाद्रूपेण ईश्वरं नाभिमन्यन्ते किन्तु कर्मद्वारैव, तदुक्तमाचार्यैः–

**यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो**
**बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः।**
**अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः।**
**सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः॥**[4] इति

तस्यैव सर्वोपरि तिष्ठतः शासकस्यानन्तकोटिब्रह्माण्डनियामकस्य परमात्मनो विधानमेव कर्मशब्दवाच्यम्। भगवद्विधानरूपतया कर्मशृंखलया सर्वेऽपि देवदानवमानवाः नद्धवृषभवत् जडिताः सन्ति। तत्कर्मरूपविधानातिक्रमणे कोऽपि न क्षमः। सर्वैरेव निजशुभाशुभकर्मचक्रमनुसृत्य तत्तत्फलभोगा भुज्यन्ते। यथोक्तं भगवता श्रीकृष्णेनापि–

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥**[5]
**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥**[6]

अत्र कर्मणैव सृष्टि–स्थिति–पालनरहस्यं सूक्ष्मतया विवेचितम्। सम्पूर्णोऽपि सृष्टिप्रपञ्चः कर्मण एव विलासमात्रम्।

यागादिरूप कर्मण एकोऽपूर्व उत्पद्यते। तेनापूर्वेण च स्वर्गादिफलसिद्धिः भवति। स च अपूर्वः किमिति जिज्ञासायामपूर्वः निरूप्यते।

---

1. मीमांसादर्शनम्।
2. मीमांसादर्शनम्।
3. मीमांसादर्शनम्।
4. सुभाषितरत्नभण्डागारम्।
5. श्रीमद्भगवद्गीता 3/14
6. तदेव 3/15

अथ तच्च करणत्वमाशुतरविनाशिनां कर्मणां यागहोमादीनां कालान्तरभाविस्वर्गादिकं प्रति न सम्भवतीति श्रुतकरणत्वनिर्वाहाय यागस्वर्गयोर्मध्ये यागजन्यं फलोत्पत्तिपर्यन्तावस्थाय्यपूर्वाख्यं वस्तु किञ्चित्कल्प्यतेऽग्निहोत्रज्योतिष्टोमादिभिरपूर्वं कृत्वा स्वर्गं सम्पादयेदिति। परैरप्यस्तु दानाध्ययनादिरेव विचित्रो हेतुर्जगद्वैचित्र्यस्येति चेन्न, क्षणिकत्वादपेक्षितस्य कालान्तरभावित्वात्।।

**चिरध्वस्तं फलायाऽलं न कर्मातिशयं विना।** इत्युक्तेः,

आचार्यशङ्करभगवत्पादैरपि–न चाऽनुत्पाद्य किमप्यपूर्वं कर्मविनश्यत् कालान्तरितं फलं दातुं शक्नोति। अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वनामाऽस्तीति तर्क्यते।

न च क्लृप्तैर्यागध्वंसादिभिरेव फलोत्पत्तिरस्तु, किमर्थमतिरिक्ताप्रसिद्धकल्पनेति चेत्, न, ध्वंसस्य फलजनकत्वे तस्य नित्यत्वेन फलपरम्परोत्पत्तिर्न वारयितुं शक्या। न चोत्पन्नस्वर्गध्वंसस्य प्रतिबन्धकत्वं कल्प्यत इति वाच्यम्, गौरवात्। किञ्च गङ्गास्नानादिस्थलेऽनेकेषां जलसंयोगध्वंसानां व्यापारत्वं कल्पनीयं स्यात्। तच्चाऽतिगौरवम्। किञ्च यागध्वंसो न व्यापारः, प्रतियोगिध्वंसयोरेकत्र जनकत्वाभावात्। प्रत्युत प्रतिबन्धकत्वापत्तिः, कारणीभूताभावप्रतियोगित्वात्। अतो "धर्मः क्षरति कीर्त्तना"[1] दित्यादिप्रमाणबलात् नाशयोग्यं किञ्चित्कल्पनीयम्। तदेवाऽपूर्वपदवाच्यम्। तच्च यागादेश्शक्तिरूपं, अवान्तरव्यापाररूपं वा। न चाऽन्यथासिद्धिः। शक्तेश्शक्तिमतो वा व्यापारेण व्यापारिणो वान्यथसिद्धेरभावात्। न च शक्तिमतो व्यापारवतो वा यागादेर्नाशे तस्य कथं कुत्राऽवस्थानमिति शङ्कनीयम्। फलबलकल्प्यस्य तस्य यत्राऽवस्थाने फलोत्पत्तिस्तत्रैव कल्पनाया उचितत्वात्। तदेवाऽपूर्वपदवाच्यम्। यथोक्तम्–

**शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते।**
**तत्रैव साऽभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपि वा।।**[2] इति।

कार्याऽनुमेयं हि तत् यत्र कार्यायाऽलं तत्रैव कल्पयितुं युक्तम्। तदाहितत्वाच्च तच्छक्तिरिति च। न च वैयधिकरण्यं दोषाय। यथाऽङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्तते तथा यागजन्यमपूर्वं नष्टेऽपि यागे कर्त्रात्मन्यनुवर्तताम्, को दोषः? अतश्च सिद्धमपूर्वम्। तच्च यावत्फलोदयं यजमानात्मन्यवतिष्ठते। उत्पाद्य फलं विनङ्क्ष्यतीति।

---

1. जै0 सू0 8/2/26
2. तन्त्रवार्तिकम्, पृ.सं.–369

**अपूर्वभेदः–**

तच्चाऽपूर्वं परमापूर्वसमुदायापूर्वोत्पत्त्यपूर्वाङ्गापूर्वभेदाच्चतुर्धा भिद्यते। साक्षात्फलजनकमपूर्वं परमापूर्वम्। उत्पत्त्यपूर्वसमुदायजन्यमपूर्वं समुदायापूर्वम्। अङ्गेभ्यस्सम्भवन्त्यङ्गापूर्वाणि।

तथाहि–प्रथमं तावत्कर्मणां श्रुतफलसाधनत्वान्यथानुपपत्त्या कल्पितमपूर्वं फलाव्यवहितपूर्ववृत्तित्वात् साक्षात्फलसाधनत्वाच्च फलापूर्वं परमापूर्वमिति चोच्यते। तच्च सर्वाङ्गसहितप्रधानानुष्ठानानन्तरमुत्पद्यते। अङ्गानां क्रियारूपाणां क्षणिकानां प्रधानेन सह मिथस्साहित्यं स्वरूपतो न सम्भवतीत्यपूर्वद्वारैव तद्वक्तव्यम्। तत्रैकप्रधानकर्मणि तेषामुत्पत्तिप्रकारः कथ्यते। अङ्गानि कानिचित् प्रधानानुष्ठानात्पूर्वमनुष्ठीयन्ते। कानिचिच्च तदनन्तरम्। येन च क्रमेण तान्यनुष्ठीयन्ते तेनैव क्रमेणऽपूर्वं जनयन्ति।

तत्र यानि सन्निपत्योपकारकाणि प्रधानानुष्ठानात्पूर्वमनुष्ठीयमानान्यङ्गानि तानि स्वसंस्कार्ये द्रव्यदेवतादौ स्वानुष्ठानानन्तरमेव कञ्चनाऽतिशयमादधति। स च परम्परया प्रधानयागपर्यन्तमनुवर्तमानोऽनुष्ठिते तस्मिन् तज्जन्योत्पत्त्यपूर्व उपकरोति। एवञ्च सन्निपत्योपकारकाणां पूर्वाङ्गानामुत्पत्त्यपूर्वोत्पत्तावुपयोगः। प्रधानानन्तरमनुष्ठमानानां तु तेषामुत्पन्नोत्पत्त्यपूर्वपरिपोषणे उपयोगः। यान्यारादुपकारकाण्यङ्गानि तान्यनुष्ठितमात्रेणैव यजमानात्मनि स्वीयमपूर्वं जनयन्ति। मध्येऽनुष्ठितं प्रधानमपि क्रियारूपत्वात् क्षणिकं सन्नोत्तराङ्गैस्सम्बन्धुमर्हतीत्यनुतिष्ठतमात्रादेव प्रधानादेकमपूर्वमुत्पद्यत इत्यङ्गीकर्तव्यम्। तदेवोत्पत्त्यपूर्वमित्युच्यते। उत्तराङ्गाण्यपि स्वानुष्ठानानन्तरमेव स्वापूर्वं जनयन्ति। तानि चाऽपूर्वाणि यावच्चरमाङ्गानुष्ठानं यजमानात्मनि समवेत्य वर्तन्ते। उत्पन्ने चरमाङ्गापूर्वे मध्यवर्ति उत्पत्त्यपूर्वाख्यं प्रधानजन्यमपूर्वं परमापूर्वोत्पादने प्रयतते। तत्र चोपकुर्वन्ति तानि सर्वाण्यप्यङ्गापूर्वाणि। अङ्गापूर्वोपकृतं प्रधानापूर्वं परमापूर्वमुत्पाद्याङ्गापूर्वैस्सह विनश्यति। परमापूर्वन्तु यावत्फलोदयं यजमानात्मनि तिष्ठति। उत्पाद्य च फलं नश्यति। अत एकस्मात्कर्मणो न पुनः पुनः फलोत्पत्तिप्रसङ्गः। अनेकप्रधानैकैकप्रयोगस्थले त्वेकैकस्मात्प्रधानादेकैकमुत्पत्त्यपूर्वमुत्पद्यते। सर्वाणि तानि मिलित्वा स्वाङ्गापूर्वोपकृतानि परमापूर्वमेकं जनयन्ति।

दर्शपूर्णमासयोस्तु समुदायापूर्वमधिकम्। तत्र पूर्णमासे त्रीणि प्रधानानि सहाऽनुष्ठीयन्ते। एवं दर्शेऽपि। तत्र त्रिभिः प्रधानैर्मिलितैः स्वाङ्गापूर्वोपकृतैरेकं समुदायापूर्वमुत्पाद्यते। दर्शेऽपि तथैव। ताभ्यां द्वाभ्यां समुदायापूर्वाभ्यामेकं परमापूर्वमुत्पाद्यते।

एवं चातुर्मास्येष्वपि वैश्वदेववरुणप्रवाससाकमेधशुनासीरीयाख्येषु चतुर्ष्वप्यपूर्वेषु पृथक् पृथगेकैकं समुदायापूर्वमिति चत्वारि समुदायापूर्वाणि। तेभ्य एकमेव परमापूर्वम्। ततश्च फलमिति। एवञ्चोत्पत्यपूर्वानन्तरं यत्र समुदायबोधकं वचनं तत्रोत्पत्त्यपूर्वेभ्यस्समुदायापूर्वम्। ततः परमापूर्वम्। ततः फलम्। यत्र तु तन्नाऽस्ति तत्रोत्पत्त्यपूर्वादेव परमापूर्वं ततश्च फलमिति सिद्धम्। केचित्तु परमापूर्वाङ्गीकरणे न प्रमाणमस्ति, उत्पत्यपूर्वस्यैव स्वाङ्गापूर्वोपकृतस्य फलजनकत्वमिष्यते कीर्तननाश्यत्वञ्चेति वदन्ति। सर्वथा तावदस्ति तदपूर्वमिति सिद्धम्।

**कर्मभेदस्तत्प्रमाणानि च–**

तच्चाऽपूर्वं यागहोमादिरूपधात्वर्थजन्यमिति। तत्र देवतोद्देश्यकद्रव्यत्यागो यागः। स च "इन्द्रायेदं न मम" इत्यादिस्वस्वत्वनिवृत्तिपूर्वकदेवतासम्बन्धापादनबोधकशब्दोच्चारणपूर्वको मानसिकव्यापारः। स एव चाऽऽहवनीयाद्यग्न्यधिकरणप्रक्षेपाधिको होमः। तत्र यागहोमयोः उद्देशांशः, त्यागांशः, प्रक्षेपांशः इति त्रितयमप्यस्ति, तथाऽपि यागस्थले उद्देशांशत्यागांशौ समप्रधानभूतौ। प्रक्षेपस्त्वङ्गभूतः। होमस्थले तु त्रयाणामप्यंशानां समप्राधान्यम्। यजतिचोदनाचोदितो यागः। यथा–"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"[1] इत्यादिः। जुहोतिचोदनाचोदितश्च होमः। यथा–"अग्निहोत्रं जुहोति"[2] इति विवेक्तव्यम्। स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं दानम्। एतेषां मिथो भेदकप्रमाणानि षट्–शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तररूपाणि।

**शब्दान्तरात्कर्मभेदः–**

तत्राऽपर्यायधातुनिष्पन्नानि एकप्रकरणगतान्याख्यातानि शब्दान्तरमिति शब्दान्तरलक्षणं प्राचीनानाम्। विभिन्नधात्वर्थकत्वं शब्दान्तरत्वमिति नव्याः। "तेन सोमेन यजेत" "हिरण्यमात्रेयाय ददाति"[3] "दाक्षिणानि जुहोती"[4] त्यादीनां एकज्योतिष्टोमप्रकरणपठितानां विभिन्नधात्वर्थावच्छिन्नानामाख्यातानां कर्मभेदकत्वम्। अतस्तानि यागदानहोमरूपाणि कर्माणि परस्परं भिन्नानि। धात्वर्थभेदाद्भावनाभेदः। भावनाभेदाच्चाऽपूर्वभेदः। तद्भेदाच्च फलभेद इति।

---

1. तै0 ब्रा0 2/15/6
2. तै0 सं0 1/5/9/1/
3. ताण्ड्य ब्रा0 6/6/11
4. तै0 सं0 6/6/1/1

**अभ्यासात्कर्मभेदः**

अनन्यपरविधिपुनः श्रवणमभ्यासः। "दध्ना जुहोती"[1] त्यादौ सत्यप्यभ्यासे कर्मभेदाभावादनन्यपरेति विशेषणम्। तेन च कर्मभेदः। "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति"[2] इति हि पञ्चकृत्वो यजतिरभ्यस्तः। स च समिदादिवाक्यविहितानां कर्मणां परस्परं भेदं विनाऽनुपपन्नस्सन् तेषां भेदमापादयति। एकेनैव विधिना विधानसम्भवे विहितस्य पुनर्विधानायोगेन द्वितीयादिवाक्यवैयर्थ्यात्। न च प्रथमवाक्येन कर्मविधानमस्तु, द्वितीयादिवाक्यैस्तदपेक्षितो देवतारूपो गुणो विधीयतामिति वाच्यम्। देवतानां "समिधो अग्न आज्यस्य व्यन्तु" "तनूनपादग्न आज्यस्य वेतु"[3] इति हौत्रकाण्डे प्रयाजीययाज्यानुवाक्यक्रमे पठितै र्याज्यामन्त्रवर्णैरेव प्राप्तिसम्भवेन पुनर्विधिवैयर्थ्यात्। अतस्समिदादिपदानि कर्मनामधेयानि। तदन्यस्य कस्यचिद्विधेयस्याभावादनन्यपरविधिपुनः श्रवणस्य कर्मभेदापादकत्वमेवेत्यभ्यासात्कर्मभेदसिद्धिः।

**सङ्ख्यया कर्मभेदः**

काम्येष्टिकाण्डे "वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामः" इति विहितायास्साङ्ग्रहणीष्टेस्सन्निधौ श्रुते "आमनमस्यामनस्य देवा इति तिस्र आहुतिर्जुहोति" इत्यत्र सङ्ख्यया कर्मभेदः। तत्र हि त्रित्वसंख्याऽऽहुतिविशेषणत्वेन श्रुता। सा च स्वाश्रयस्य कर्मणो भेदं विना निवेष्टुमशक्या। द्वित्वादिसङ्ख्यानां स्वाश्रयप्रतियोगिकस्वाश्रयानुयोगिकभेदवद्वृत्तित्वनियमात्। तादृशी च त्रित्वसंख्या स्वाश्रयस्य कर्मणो भेदमापादयतीति सङ्ख्याऽत्र कर्मभेदः। इदञ्च वृत्तिकारमतेनोदाहरणम्।

भाष्यकारस्तु–अत्राऽऽहुतिविशेषणीभूतया त्रित्वसंख्यया कर्मभेदस्य स्पष्टं प्रतीतेः पूर्वपक्षानुत्थितिं मन्वानः वाजपेयप्रकरणगतं "सप्तदशप्राजापत्यान् पशूनालभेत"[4] इति वाक्यमुदाजहार। तत्र द्रव्यदेवतासम्बन्धानुमितयागगत-सप्तदशत्वसङ्ख्यया कर्मभेदः। तथाहि–

"प्राजापत्या" नित्यत्र प्रजापतिदेवतया प्रथमं द्रव्यस्य सम्बन्धः। ततश्च तस्य बहुत्वेन। प्रजापतिर्देवता अस्येति प्राजापत्यः। प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च

1. शा0 दी0 1/4/2
2. तै0 सं0 2/6/1
3. तै0 ब्रा0 3/5/5/9
4. तै0 ब्रा0 1/3/4

प्राजापत्या इति। एवञ्च द्रव्यदेवतासम्बन्धानां बहुत्वात् यावन्तस्सम्बन्धाः तावन्तो यागास्सिद्ध्यन्ति। प्रकृते च सप्तदशसङ्ख्याविशेषितास्सप्तदश यागाः सम्पद्यन्ते। यदि तु द्रव्यस्य प्रथमं बहुत्वेनाऽन्वयोऽङ्गीक्रियेत ततश्च देवतया, तदाऽनेकद्रव्याणामेको देवतासम्बन्ध इति एक एव यागो लभ्येत। प्रजापतिर्देवता एषामिति प्राजापत्या इति। तच्च न युक्तम्। तद्धितार्थस्य द्रव्यस्य प्रथमं देवतया सहैव सम्बन्धो युक्तस्स्यात् अन्तरङ्गत्वात्। प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्यैव न्यायसिद्धत्वाच्च। न च सम्बन्धानेकत्वेऽपि लाघवादेकयागकल्पनमेवाऽस्त्विति वाच्यम्। लाघवस्य न्यायरूपतया तदपेक्षयैकपशुनिष्पन्नैकादशावदानगणप्रापकस्य चोदकस्य शास्त्रत्वेन तस्य प्राबल्यात् तस्यैव नियामकत्वकल्पनौचित्यात्। अत्र सर्वत्र प्रकृतिभूतोऽग्नीषोमीयपशुयाग एव। तत्रैकैव पशुः। तत्रैव च "एकादशाऽवदानान्यवद्यति"[1] इत्येकादशावदानगण उक्तः। स च परम्परया प्राजापत्यपशुषु प्राप्तः। तत्रैकैकस्मिन् पशौ एकादशावदानगणेऽनुष्ठिते चोदकोऽनुगृहीतो भवति। एवञ्चैकपश्वपादानकैकादशावदानगणसम्पादित एको यागः। एवं सप्तदश यागा इति सिद्धस्सङ्ख्या कर्मभेदः।

**संज्ञया कर्मभेदः**

साङ्गज्योतिष्टोमविध्यन्तरं श्रुते "अथैषज्योतिः"[2] अथैष विश्वज्योतिः, अथैष सर्वज्योतिः[3], एतेन सहस्रदक्षिणेन यजेत" इति वाक्ये ज्योतिरादिभिस्संज्ञाभिः प्रकृतज्योतिष्टोमाद्भिन्ना यागा विधीयन्ते। न च "वसन्ते वसन्ते ज्योतिषा यजेते"[4] तिवत् प्रकृतज्योतिष्टोमस्यैवाऽनुवादोऽस्त्विति वाच्यम्। तत्र ज्योतिष्टोमप्रकरणानुवृत्तेस्तद्ग्रहणम्। प्रकृते त्वथशब्देन प्रकरणनिवृत्तेस्स्पष्टं प्रतीयमानत्वात्। अतः कर्मत्रयं ज्योतिरादिसंज्ञात्रयभिन्नं विधीयते। तस्य च सहस्रदक्षिणस्य फलोद्देशेन प्रयोगैक्यविधिरिति सिद्धः कर्मभेदः। एवञ्च प्रकृतकर्मनाम्नः पर्यायत्वेन तदेकदेशत्वेन श्रूयमाणायाः प्रकरणान्तरगतायाः संज्ञायाः कर्मभेदकतेति फलितम्।

**गुणात्कर्मभेदः–**

पूर्वस्मिन् कर्मण्यसम्भवन्निवेशो गुणोऽपि कर्मभेदावहः। असम्भवश्च त्रेधा–क्वचिदनेकगुणोपादानेन विधौ वाक्यभेदापातात्, क्वचित्प्रबलगुणावरोधात्,

---

1. तै० सं० 6/3/10/3
2. ता० ब्रा० 16/8/1
3. ता० ब्रा० 16/9/1/84
4. आप० श्रौ० 10/2/5

क्वचिच्चैकप्रसरताभङ्गभयात्। तत्राऽऽद्यो यथा–"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्याञ्चाऽच्युतो भवति"[1] इत्यत्राऽग्निदेवतायाः पुरोडाशस्य कपालानां तद्गतसंख्यायाः कालस्य चेत्यनेकेषां गुणानां प्राप्तकर्मोद्देशेन विधाने वाक्यभेदः। अतः पूर्वत्राऽनिविशमानं गुणानेकत्वं स्वविशिष्टकर्मान्तरविधायकं सत् पूर्वस्मात्कर्मणः स्वविशिष्टं कर्म भिनत्ति इति।

द्वितीयस्योदाहरणन्तु–चातुर्मास्येषु वैश्वदेवाख्ये प्रथमे पर्वणि श्रुतं "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिन"[2]मिति।

तृतीयस्योदाहरणन्तु "वषट्कर्तुः प्रथमभक्ष"[3] इति। अनेन वषट्कर्तुः प्राथम्यविशिष्टं भक्षणं पूर्वविहितभक्षणेभ्योऽन्यद्विधीयते। न च प्राप्तवषट्कर्तुर्भक्षोद्देशेन प्राथम्यमात्रं विधीयताम्। सोमे समाख्यया तत्तन्नैमित्तिके च भक्षणे बहूनामृत्विजां प्राप्ते यो वषट्कारमुच्चारयति होत्रादिः ग्रहे चमसे वा स एव सर्वप्रथमं भक्षयेत्, अन्ये तु तदनन्तरमिति वाच्यम्। एकप्रसरताभङ्गापत्तेः। प्राप्तभक्षोद्देशेन प्राथम्यमात्रविधाने उद्देश्यस्य प्रथमप्रतीत्यावश्यकत्वात् भक्षशब्देन प्रथमं स्वार्थः प्रतिपादनीयः। पश्चाच्च प्रथमशब्देन स्वार्थ इति वक्तव्यम्। न चैतत्संभवति। समस्यमानपदयोर्युगपत्प्रसरत्वेन विशिष्टार्थप्रतिपादकत्वात्। निमित्ते प्राथम्यविशिष्टं समाख्यादिभक्षणतो भिन्नं भक्षान्तरं विधीयत इति। अतस्सिद्धस्त्रिविधादपि गुणात् कर्मभेदः।

"दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्र तु न गुणात्कर्मभेदः। तथाहि नाऽत्र होमो विधातुं शक्यते। तस्य "अग्निहोत्रं जुहोती" त्यनेनैव विहितत्वात्। नाऽपि फलम्, दधिपदवैयर्थ्यापत्तेः। अतो नित्यहोमार्थतया पयः प्रभृतिभिर्द्रव्यैर्विकल्पेन प्राप्तस्य दध्न इन्द्रियरूपफलार्थतया पुनर्विधानम्। अतश्चेन्द्रियोद्देशेन दधिरूपे गुणे विहिते सिद्धस्य वस्तुनो व्यापारावेशं विना फलोत्पादासामर्थ्यादन्यथा विधिं विनापि फलोत्पत्तेर्निवारयितुमशक्यत्वेन विधिवैयर्थ्यापत्तेस्तदनुग्रहाय मध्ये कस्यचित् व्यापारस्याऽपेक्षायां स्वसाध्यभोजनदानहोमाद्यनेकव्यापारप्रसक्तावपि प्रकरणेन होमस्यैव प्रापणात् तस्यैवाऽऽश्रयत्वम्। अत एवाऽत्रत्यो जुहोतिः प्रकरणप्राप्तहोमानुवादक एव, न प्रापकः। फलोद्देशेन गुणमात्रविधिपरत्वोपपत्तेश्च नाऽनेकविधानकृतो वाक्यभेदः।

---

1. तै0 सं0 2/6/3
2. मी.शा.भा.–2.2.9
3. आप0 श्रौ0 10/2/5

**प्रकरणान्तरात्कर्मभेदः**

अनुपादेयगुणविशिष्टा पूर्वकर्मानुपस्थितिः प्रकरणान्तरम्। तेनाऽपि कर्मभेदः सिद्ध्यति। तथाहि–अस्ति कुण्डपायिनामयनाख्यस्सत्रविशेषस्सम्वत्सरसाध्यः। तत्सन्निधौ श्रूयते–"उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति।[1] मासं दर्शपूर्णमासाभ्यां यजन्ते" इत्यादिः। तत्र प्रसिद्धान्नित्याग्निहोत्रदर्शपूर्णमासादेर्भिन्नं कर्माऽत्र विधीयते। न च नैयमिकाग्निहोत्रमनूद्यैवाऽत्र मासरूपो गुणो विधीयतामिति वाच्यम्। तेषामतिदूरस्थत्वेनाऽनुपस्थितेः तदुद्देशेन गुणविधानासंभवात्। न च नाम्नस्तदुपस्थापकत्वम्। तस्याऽग्निदेवताककर्ममात्रोपस्थापकत्वेऽपि पूर्वकर्मोपस्थापकत्वे मानाभावात्। न ह्यग्निदेवताकं पूर्व कर्मैवेत्यत्र प्रमाणमस्ति। यत्रोपादेयगुणश्रवणम्, तत्र विधिशक्तेर्गुणे सङ्क्रमात् धात्वर्थस्याऽनुवादापेक्षायां दूरस्थानामपि कर्मणां कथञ्चिदनुवादो युक्तः। यथा–"यदाहवनीये जुह्वति" इत्यत्र। प्रकृते तु मासस्याऽनुपादेयत्वात् तत्र विधिशक्तेरसङ्क्रमात् धात्वर्थ एव सा सङ्क्रामतीति तस्यैव विधेयत्वम्। धातुना च न पूर्वकर्मोपस्थितिः। अतोऽपूर्वमेव कर्मोपसदुत्तरकालिकत्वमासादिविशिष्टं विधीयते। तस्य चाग्निहोत्रपदं गौण्या वृत्या नामधेयम्। अनेकत्र शक्तिकल्पनायां गौरवात्, प्रमाणाभावाच्च। नित्याग्निहोत्रसादृश्यञ्चाऽत्र तदीयधर्मवत्वरूपं गौणीवृत्तिनिमित्तम्। तच्च न प्रमाणान्तरावगतमित्यनेनैव पदेन साध्यसादृश्यविधयाऽवबोध्यते। तेन च तदीयधर्माणामत्राऽतिदेशः। अतस्सिद्धः प्रकरणान्तरात्कर्मभेदः। अत्र कालरूपोऽनुपादेयगुणः कर्मभेदोपयोगी।

एवं देशनिमित्तफलसंस्कार्यरूपाणामप्यनुपादेयगुणानां योगे सति प्रकरणान्तरात्कर्मभेदो द्रष्टव्यः। तत्र देशनिमित्तो भेदः "सरस्वत्या दक्षिणेन तीरेणाऽऽग्नेयोऽष्टाकपालः"[2] इत्यत्र दर्शपौर्णमासिकाग्नेयप्रतियोगिकः, "सत्रायाऽऽगूर्यविश्वजिता यजेत"[3] इत्यत्र सत्रार्थं सङ्कल्पं कृत्वा तदनुतिष्ठतः तदकरणनिमित्तस्य विश्वजिद्यागस्यैकाहकाण्डपठितात् स्वर्गार्थविश्वजितो भेदो निमित्तकृतः, "आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः"[4] इत्यत्र फलरूपानुपादेयगुणकृतः प्रसिद्धाग्नेयाद्भेदः, "औदुम्बरीं प्रोक्षति"[5] इत्यत्र प्रोक्षणस्य प्रसिद्धव्रीहिप्रोक्षणाद्दर्शपौर्णमासिकाद्भेदस्संस्कारकृतश्च द्रष्टव्यः। रुक्कामः तेजस्कामः

1. ता० ब्रा० 25/4/1
2. आप० श्रौ० 23/12/23
3. आप० श्रौ० 14/23/1
4. त० सं० 2/2/3
5. मै० सं० 3/8/8

एवमनुपादपञ्चकयोगात् कर्मभेदः प्रकरणान्तरन्यायेन। अनुपादेयपञ्चकं च पूर्वाचार्यैस्सङ्गृहीतम्। तद्यथा–

**देशः कालो निमित्तं च फलं संस्कार्यमेव च।**
**इति मीमांसकाः प्राहुरनुपादेयपञ्चकम्॥** इति।[1]

एवं शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तररूपैष्षड्भिः प्रमाणैः कर्मभेदो निरूपितः। इमानि शब्दान्तरादीनि प्रमाणानि षडुत्पत्तिविधेस्सहकारिभूतानि।

ननु को नामोत्पत्तिविधिः? उच्यते–कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। द्रव्यदेवतादिसम्बन्धबोधनमन्तरा कर्मस्वरूपमात्रं प्रमाणान्तरानधिगतं येन प्रथममेवावबोध्यते स उत्पत्तिविधिः। यथा "अग्निहोत्रं जुहोति"। अनेन हि वाक्येन प्रमाणान्तरानवगतमग्निहोत्राख्यं कर्म कर्तव्यतया बोध्यते–अग्निहोत्रहोमेनेष्टं भावयेदिति। उत्पत्तिवाक्ये कर्मणः करणत्वेनाऽन्वयः। विधिर्हि पुरुषार्थे पुरुषं प्रवर्त्तयन् स्वस्य प्रवर्तकत्वसिद्ध्यर्थं स्वविषयस्य यागादेरिष्टभाव्यकत्वमाक्षिपतीत्युक्तं विधिनिरूपणावसरे। अत एव क्वचिद्विधिवाक्ये फलपदाश्रवणेऽपि फलसामान्यवाचकेष्टपदाध्याहारेणैव वाक्यार्थसम्पादनम्–इष्टं भावयेदिति। तस्य च स्वर्गादिविशेषरूपत्वेन वाक्यान्तरेणाऽवगतिः। एवं भावनायामिष्टसामान्यस्य स्वर्गादेरिष्टविशेषस्य वा फलत्वेनाऽन्वये तस्य साधनाकाङ्क्षायां धात्वर्थस्तत्र साधनत्वेनाऽन्वयं लभते–यागेनेष्टं भावयेति। एवञ्च उत्पत्तिवाक्ये धात्वर्थस्य करणत्वेनाऽन्वये सति तत्समानाधिकरणस्य नाम्नोऽपि तथैवाऽन्वयः ज्योतिष्टोमेन यागेन स्वर्गं भावयेदिति। अत एव नामधेयेषु सर्वत्र तृतीयाविभक्तिश्रवणमुपपद्यते। यत्तु क्वचिद्द्वितीयाश्रवणं "अग्निहोत्रं जुहोती" त्यादौ तत्र द्वितीयायाः करणत्वे लक्षणा। अन्यथाऽन्वयानुपपत्तेरिति।

## शाब्दीभावनायाः आर्थीभावनायाश्च सम्परीक्षणम्–

भावना नाम भवितुर्भवनानुकूलो भावकव्यापारविशेषः। सा च भावना द्विविधा। शाब्दीभावना आर्थी भावना च।[2] तत्र पुरुषप्रवृत्यनुकूल भावकव्यापारविशेषः शाब्दीभावना। प्रयोजकस्य येन व्यापारेण पुरुषस्य तत्तत्कर्मणि प्रवृतिर्भवति स व्यापारः शाब्दीभावना। व्यापारोऽयं लिङ्स्थानिकः" प्रत्ययस्य वाच्यः अर्थात् लिङ्त्वरूपशक्यतावच्छेदधर्मयुक्तः "त" प्रत्ययस्य अर्थः। लिङ्त्वधर्मः लेट्त्व-लोट्त्वे,

1. कु0 वृ0 2/3/11
2. मीमांसान्यायप्रकाशः।

तव्यत्वादिधर्मस्योपलक्षकः। "यजेत" "यजाते" "यजताम्" "यष्टव्यम्" इत्यादिषु स्थलेषु लिङ्त्वादिः तत्तद्धर्मयुक्तप्रत्ययः शाब्दीभावनायाः अभिधायकः। शाब्दीभावना एव प्रवर्तना। तस्यार्थो हि प्रवृत्यनुकूलो व्यापारः। "अयं मां प्रवर्तयति" "मत्प्रवृत्यनुकूलव्यापारवानयम्" इति नियमेन प्रतीयमानत्वात्।

आनयति, आनिनाय इत्यादि विधिवाक्यं विना प्रवृत्यनुकूल व्यापारो न भवति। अनेन सिद्धं भवति यत् लिङ् लोट्, लेट्, तव्य प्रत्यया एव प्रवृत्यनुकूल-व्यापाराभिधायकाः। येन च शब्देन यस्य बोधो भवति स एव तच्छब्दस्यार्थः। गोशब्दश्रवणानन्तरं गोत्वं प्रतीयते। ग्रन्थकृता अनेन आकृत्यधिकरणन्यायं बोधितम्।[1]

आकृत्यधिकरणे च मीमांसकाः "नाग्रहीतविशेषणाबुद्धिर्विशिष्टमुपसंक्रामति"[2] "विशेष्यं नाभिधागच्छेत् क्षीणशक्तिर्विशेषणे"[3] इति न्यायेन विशेषणे शब्दानां शक्तिरिति मन्यन्ते। अवबोधितञ्च यथा गोशब्दस्य गोत्वमित्यादिना। विध्यर्थविषय-मवलम्ब्य मीमांसकाः अनेकान् मतान् प्रदर्शितवन्तः। अन्वयव्यतिरेकाभ्याम् इदं सिद्ध्यति यत् लिङादिना एव प्रवृत्यनुकूलव्यापारो भवति न तु लडादिनापि। आभ्यामन्वयव्यतिरेकाभ्यामिदं प्रतीयते यत् लिङादीनां शक्तिः प्रवर्तना व्यापारे एवास्ति।

अत एव गामानय, गां नय, गां बधान इत्यादौ नयनानयनबन्धनादिक्रियासु गो व्यक्तेरन्वयो युज्यते। अतः वैशेषिकादिभिर्जातिविशिष्टव्यक्तावेव गवादीनां जातिशब्दानां शक्तिरङ्गीकृतेति चेत्–गामानय इत्यादि वाक्योच्चारणानन्तरं तत्र श्रुतात् गोशब्दात् गोत्वविशिष्टगोव्यक्तेरुपस्थितौ तादृशगोव्यक्तेः आनयनादिक्रियायामन्वयो भवति। तत्र विशिष्टबुद्धौ विशेषणज्ञानं कारणम्। नागृहीत विशेषणबुद्धिर्विशेष्य उपजायते इति न्यायात्। तदुक्तं "विशिष्टग्रहणं नेष्टगृहीतविशेषणम्"।[4]

पुरुषप्रवृत्यनुकूलो व्यापारविशेषः शाब्दीभावना। स एव विध्यर्थः। तत्र शास्त्रकारैः विविधं लिङर्थभूतं विधिस्वरूपं निरूपितं च। तदित्थम्–

(1) विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनारूपाः षडर्था लिङः इति।[5]

---

1. आकृत्यधिकरणम् 1/3/8।
2. तन्त्रसिद्धान्तरत्नावली।
3. तदेव।
4. तन्त्रवार्तिकम्–3/4/13
5. अष्टा0 3/3/161

भगवान् पाणिनिः।

(2) विध्यादिषु चतुर्ष्वनुगतं प्रवर्तनात्वम्, सम्प्रश्नप्रार्थने च लिङर्थ इति।[1]

(3) इष्टसाधनत्वमेव लिङर्थ इति अर्वाचीनाः।[2]

(4) इष्टसाधनत्वं बलवदनिष्टाजनकत्वं कृतिसाध्यत्वं चेति त्रितयमपि लिङर्थः।[3] तत्र पृथक्-पृथक् शक्तित्रयमिति नवीनाः।

(5) कृतिसाध्यत्वमेव लिङर्थ इत्यपि[4] मतम्।

(6) लिङ् घटितवाक्योच्चारयितुरहमेनं प्रवर्तयामीत्यभिप्रायविशेषो लोके वेदेच लिङर्थ इति।[5]

(7) वेदान्ते-वेदे भगवदाज्ञैव लिङर्थ[6] इति। तदनुयायिनस्सेश्वरमीमांसा कृतादयश्च।

(8) इष्टसाधनत्वमेव लिङर्थ इति सुरेश्वराचार्याः, तदनुसारिणश्चित्सुखा-चार्यादयश्च।

(9) इष्टसाधनत्वं कृतिसाध्यत्वमित्युभयं लिङर्थ[7] इत्यपि मतम्।

(10) मीमांसकेषु इष्टसाधनत्वं कृतिसाध्यत्वमित्युभयं लिङर्थ इति मण्डनमिश्राः।

(11) भाट्टेषु-तत्तद्धात्वर्थगतं कार्यत्वं लिङर्थ इति भाट्टेष्वेकं मतम्।

लिङादिशब्दगतस्यार्थप्रकाशनसामर्थ्यस्याभिधायकव्यापारस्य लिङर्थत्व-मित्यप्येकदेशिमतम्। इष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण लिङर्थ इति पार्थसारथि मिश्रप्रभृतयः। इष्टसाधनत्वाद्यतिरिक्तः प्रवर्तनाख्योऽलौकिकः कश्चिद्धर्म विशेषो लिङादिवाच्य इति भट्टसोमेश्वरः खण्डदेवप्रभृतयश्च।

प्राभाकरेषु अपूर्वापरपर्यायः कार्यात्मा नियोगो लिङर्थ इति। तत्र लोके

1. वा0 प0।
2. अर्वाचीनाः वैयाकरणाः
3. न्या0 सि0।
4. रत्नकोशकारमतम्।
5. उदयनाचार्यः।
6. वेदान्तभाष्यम्।
7. वाचस्पतिमिश्रः-भामती।

कार्यत्वेन क्रियायाः वेदे च नियोगस्य लिङर्थत्वमिति विवेकः।

अधुना आर्थीभावना निरूप्यते। अत्र वैयाकरणाः वदन्ति-पचति, पश्यति, यजतीत्यत्र धात्वर्थः पाकाद्यतिरिक्तः न कोऽपि भावनापदार्थः। स्थाल्याः अग्निसंयोगादारभ्य स्थाल्याः ततः परावर्तनपर्यन्तं पच् धात्वर्थ पाक एव द्योत्यते। यदि एतद्व्यापारातिरिक्तमपि कश्चिद्व्यापारः अवशिष्टः भवति तत्तु आख्यातवाच्य अर्थभावनया गम्यते। अतः आर्थीभावना का इति जिज्ञासायां कर्तृव्यापार इति चेन्न यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः।

तत्र प्रत्ययस्य द्वैरूप्यमस्ति लिङ्त्वमाख्यातत्वञ्चेति। लिङ्त्वेन रूपेण शाब्दीभावना आख्यातत्वेन च रूपेणाऽऽर्थीभावनाभिधीयते। तत्र च धात्वर्थः करणम्। स्वर्गादिः फलम्। तथा च "स्वर्गकामो यजेत" इत्यादेरयमर्थः-

स्वर्गफलिका यागकरणिका यत्किञ्चिदितिकर्तव्यताका शब्दभावनाविषयिणी आर्थी भावनेति। इदं चाऽऽर्थीभावनाया मुख्यविशेष्यत्वम्, इतरेषां कारकादीनां शाब्दीभावनायाश्च तत्रैव विशेषणतयाऽन्वयो नवीनमते। प्राचीनमते तु शब्दभावनया एव मुख्यविशेष्यत्वमिति बोध्यम्।

ननु केयमार्थी भावना? यस्यां धात्वर्थः करणमिष्यते। तस्यास्सत्वे धात्वर्थातिरिक्तत्वे वा किं मानमिति चेत्, उच्यते-पुरुषगतः फलानुकूलो व्यापार आर्थी भावना। शाब्दी भावना तु पूर्वं निरूपिता। उभयानुगतं लक्षणं तु भवितुर्भवनानुकूलः प्रयोजकव्यापारविशेष इति। अन्योत्पत्यनुकूलप्रयोजकव्यापारत्वमेव लक्षणम्। भवितुरित्यादि स्वरूपकथनमिति द्रष्टव्यम्। सा चाऽऽख्यातेनोच्यते। तथाहि-पचतीत्यत्र विक्लिप्तिस्तदनुकूलोऽधिश्रयणादिरवस्रावणान्तो व्यापारः तदनुकूलः प्रयत्नश्च भासत इत्यविवादम्। तेषां च भानकारणजिज्ञासायां पचतीत्यतस्तेषां प्रतीतेः "यच्च यस्मात्प्रतीयते तत्तस्य वाच्य"मिति न्यायेन तदेव पदं तेषां वाचकमित्यङ्गीकर्तव्यम्। तत्राऽपि कोंऽशः कस्य वाचक इति जिज्ञासायां प्रकृत्यंशस्य विक्लितिदनुकूलव्यापार-वाचित्वम्, प्रत्ययांशस्य यत्नवाचित्वमित्यास्थीयते। फलव्यापारयोर्धातुरिति वचनात्। फलमात्रस्य धात्वर्थत्वे व्यापारापगमदशायां पाको विद्यत इति प्रयोगापत्तिः। ग्रामो गमनवानिति प्रयोगापत्तिश्च। व्यापारमात्रस्य तत्त्वे त्यजिगम्योर्धात्वोः पर्यायत्वापत्तिः। अतः फलावच्छिन्नो व्यापारो धात्वर्थः। एवञ्च फलावच्छिन्नव्यापारमात्रांशे धातोः पर्यवसानात् तदतिरिक्ततया भासमानो यत्नादिराख्यातार्थ एवेत्यङ्गीकार्यम्।

न च तस्याऽपि व्यापारत्वाविशेषात् व्यापारत्वेन रूपेण सर्वेषामेव व्यापाराणां

धातुना सङ्ग्रहः कुतो न स्यादिति वाच्यम्। पचति पाकं करोति पाकं भावयतीति धात्वर्थात्पाकात्तस्य पृथक् विवरणदर्शनात् तस्याऽपलपितुमशक्यत्वात् करोतिविव्रियमाणस्याऽर्थस्याऽऽख्यातार्थत्वाङ्गीकारात्। एवञ्च फलं तज्जनकीभृताधिश्रयणफूत्कारादिशरीरो व्यापारश्च धातुवाच्यः। तदनुकूलव्यापारसमूहस्सर्वोऽपि तिङर्थः।

यत्त्वत्र कुतूहलवृत्तौ फलमात्रस्य धात्वर्थत्वमङ्गीकृत्य तदितरस्य सर्वस्याऽपि व्यापारस्याऽधिश्रयणफूत्कारादेराख्यातवाच्यत्वमुक्तम्, तन्नाऽऽदर्त्तव्यम्। फलमात्रधात्वर्थपक्षस्य बहुधा ग्रन्थान्तरेषु खण्डिततत्वात्। स प्रयत्न एवाऽऽर्थीभावनेत्युच्यते। अर्थ्यते पुरुषैरिति अर्थः फलम्। तत्सम्बद्धाऽऽर्थी भावना। तल्लक्षणञ्च फलोत्पत्यनुकूलः पुरुषगतो व्यापारविशेष इत्युक्तम्।

आर्थी भावना हि यागदानादिरूपधात्वर्थनिष्पादनद्वारा स्वर्गपश्वादिकं फलं जनयति। अतस्तत्र प्रयोजकव्यापारत्वं घटत एव। अतश्च धात्वर्थानुकूलव्यापारसमूह एवाऽऽख्यातार्थः, आर्थी भावना च लोके। न च कृञा विवरणदर्शनात् करोतेर्यत्नार्थकत्वेनाऽऽख्यातस्याऽपि यत्नार्थकत्वमिति वाच्यम्। करोतेर्भावयतिपर्यायत्वेन यत्नार्थकत्वाभावात्। अत एव रथो गच्छतीत्यादौ रथो गमनं करोतीत्यचेतनेऽपि विवरणं सङ्गच्छते। किञ्च करोतेर्यत्नार्थकत्वे यततेरिव तस्याऽप्यकर्मकत्वापत्तिः। अतः करोतेर्न यत्नार्थकत्वम्, किन्तु भावयतिपर्यायत्वादनुकूलव्यापारवाचित्वमेव। यत्तु क्वचित् पचति पाके यतते इति विवरणं दृश्यते तल्लाक्षणिकम्। एवञ्च विक्लिप्तिरूपफलोद्देश्यकपाकानूकूलव्यापारसमूह एव तिङर्थः। स च सामान्यरूपेणाऽऽख्यातादबोधितोऽपि तत्तद्विशेषरूपेण तैस्तैर्विशेषवाक्यैरवबोध्यते।

एवं "यजेत स्वर्गकाम" इत्यादौ देवतोद्देश्यकद्रव्यत्यागरूपयागादिर्धातुनाऽभिधीयते। तदुपकारकश्च प्रयाजानुयाजादिरङ्गकलापरूपस्सर्वोऽपि व्यापारस्सामान्यरूपेणाऽऽनुकूलव्यापारत्वरूपेणाऽऽख्यातेनाऽभिधीयते। विशेषरूपेण तु तत्तदङ्गविधिभिः प्रयाजादिवाक्यैः। अतस्तत्तदङ्गविधिभिर्विधीयमानः अन्वाधानादिब्राह्मणतर्पणान्तस्सर्वोऽपि व्यापार आख्यातार्थस्यैव प्रपञ्चरूप इति पार्थसारथिः।[1]

नवीनास्तु[2]–न व्यापारसामान्यमाख्यातार्थः। तत्तज्जन्यभेदेन तत्तदुत्पादकभेदेन च व्यापारत्वभेदावश्यंभावादेकशक्यतावच्छेदकत्वानुपपत्तेः विशेषविषयक तत्तच्छक्तिकल्पने चाऽनेकशक्तिकल्पनागौरवात् पचति पाकं करोति इति विवरणबलात्

1. शास्त्रदीपिका पृ0 102
2. मीमांसाकौस्तुभः पृ0 21

लाघवात् यत्नत्वं शक्यतावच्छेदकीकृत्य यत्न एवाऽऽख्यातार्थः। लघुभूतैकशक्यतावच्छेदकसम्भवेऽनेककल्पनस्याऽन्याय्यत्वात्। यत्नत्वस्य जातिरूपत्वेन लघुत्वात्। न च कृञो न यत्नार्थकत्वम्। प्रयत्नाभावे वातरोगादिना स्पन्दमाने चैत्रे "नायं स्पन्दं करोति वातरोगादिनाऽस्य शरीरं स्पन्दते, इति सत्यपि व्यापारे कृञर्थनिषेधदर्शनात् करोतिनेव यतिधातुनाऽपि विवरणदर्शनाच्च कृञो यत्नार्थकत्वावगमात्।

न च कृञो यत्नार्थकत्वे तत्पर्यायत्वापत्त्या यततेरिव कृञोऽप्यकर्मकत्वापत्तिरिति युक्तम्। सकर्मकत्वाकर्मकत्वे ह्याकाङ्क्षाधीने। आकाङ्क्षायाश्शब्दस्वभावाधीनतया अपर्यनुयोज्यत्वात्। यथैव हि घटः, कर्मत्वम्, आनयनम् इत्यत्र नाऽऽकाङ्क्षा किन्तु घटमानयतीत्यत्रैव पर्यायत्वेऽपि सा, तथैव पर्यायत्वेऽपि कृञ एव कर्माकाङ्क्षा, न यततेः। अतएव भाष्यकारोऽपि भावार्थाधिकरणे-तथा यतेत यथा किञ्चित् भवति[1] इति, इन्द्रियकामाधिकरणे च-कतमोऽत्र शब्दः पुरुषप्रयत्नस्य वक्तेति, जुहुयादिति ब्रूमः[2] इति, जुहुयादिति शब्दस्यैवसामर्थ्यं यद्धोमविशिष्टं प्रयत्नमाह[3] इत्यादिना चाऽऽख्यातस्य यत्नार्थकत्वमेव स्पष्टीकरोतीति सिद्धं कृञा यत्नवाचित्वात् तेन यतिना च विवरणादाख्यातस्य यत्नवाचित्वम्। सिद्धे यत्नवाचित्वे पाकं भावयतीत्यादौ भावयतेः करोतिपर्यायत्वं स्वीकृत्य यत्नवाचित्वं लक्षणया स्वीकर्त्तव्यम्। एवं रथो गच्छति, चैत्रो जानाति, इच्छतीत्यादौ अनुकूलव्यापारे गमनाद्याश्रयत्व एव वा लक्षणेति वदन्ति।

यदत्र भाट्टदीपिकाव्याख्याने प्रभावल्यां शम्भुभट्टैः मूलोक्तयत्नाख्यातार्थत्वस्थिरीकरणाय मतान्तरखण्डनपूर्वकं बहुयतितम्, यच्च तस्या एव व्याख्यानान्तरे भाट्टचिन्तामणौ श्रीवाञ्छेश्वरयज्वभिः पार्थसारथिमिश्रमतपरिपोषणाय बहुधा पराक्रान्तम् तदुभयं तत एवाऽवगन्तव्यम्। सर्वथा सिद्धम्-धात्वर्थातिरिक्ता आख्यातवाच्या भावना, तस्याञ्च धात्वर्थान्वय इति।

तत्र यत्र फलबोधकपदान्तराश्रवणं तत्र धात्वर्थस्योद्देश्यत्वमङ्गीकृत्य तस्य भावनायां कर्मत्वेनाऽन्वयः। यथा पचतीत्यादौ पाकं करोतीति। यदा तु कर्मवाचकपदान्तरश्रवणम्, यथा ओदनं पचतीत्यादौ, तत्र धात्वर्थस्य करणत्वेनैवाऽन्वयः-पाकेनौदनं करोतीति। एवं "यजेत स्वर्गकाम" इत्यादिवाक्येषु विधिघटितेषु

1. शा० भा० पृ० 375
2. शा० भा० पृ० 547
3. तदेव।

आख्यातोपात्ताया भावनाया भाव्याकाङ्क्षायां यद्यपि समानपदोपात्तस्य धात्वर्थस्यैव भाव्यत्वेनाऽन्वयो युक्तः-यागं कुर्यादिति, तथापि तस्य द्रव्यव्ययायासादिबहुकष्टसाध्यत्वेन कष्टं कर्मेति न्यायेन स्वयमनिष्टत्वात् अनिष्टे पुरुषाणां प्रेक्षावतां प्रवृत्यनुदयात् तं परित्यज्य स्वयमिष्टरूपमिष्टसाधनरूपं वा वस्त्वन्तरं किञ्चिद्भाव्यत्वेनाऽपेक्षते भावना। यच्च वस्तु स्वर्गादिकमिष्टरूपमिष्टसाधनरूपं वा मानान्तरेणावगतं तदेव भाष्यत्वेन सम्बद्ध्यते-स्वर्गं भावयेदिति तत्र च धात्वर्थः करणम्। यजेत स्वर्गकाम इत्यत्र हि लिङा प्रवर्तनाऽभिधीयते। आख्यातेन चाऽऽर्थी भावना। धातुना यागः। तन्निष्ठकरणत्वं च लक्षणया प्रतिपाद्यते। स्वर्गकामपदं लक्षणया स्वर्गपरम्। प्रथमा च कर्मत्वपरा। अतश्च यागकरणिका स्वर्गभाव्यका भावना प्रवर्तनाविषय इति वाक्यार्थः। यागेन स्वर्गं भावयेदिति यावत्।

यद्यपि यागानुकूलभावनायां न यागः करणं भवितुमर्हति। प्रत्युत भावनाजन्यत्वाद्यागस्य यागकरणत्वमेव भावनायास्सिद्ध्यति तथापि कृते यागे सा फलोपहिता भवति। तादृश्याञ्च तस्यां यागः करणं भवति। अत एव नाऽत्र लोकावगतं मुख्यं करणत्वम्। किन्तु भावनाकरणत्वं भावनाभाव्यनिवर्तकत्वम्। यागो हि भावनाभाव्यं स्वर्गादिकं निष्पादयति। अतः पारिभाषिकमत्र करणत्वमिति। एवं स्वर्गपुत्रपश्वादिकं फलं भावनायां भाव्यत्वेनाऽन्वितमपि यागेनैव जननीयमिति यागः फलं प्रति करणमिति श्रुत्या बोधितं भवति।

## अभ्युदयनिःश्रेयससाधकधर्मविमर्शः

मीमांसाशास्त्रस्य प्रधानविषयत्वेन प्रतिपाद्यो धर्म एव। अत एव जैमिनिना "अथातो धर्म जिज्ञासा"[93] इति प्रथमेन सूत्रेण धर्मस्यैव व्याख्यानं विहितम्। किञ्च द्वादशाध्यायात्मकस्य मीमांसाशास्त्रस्य प्रतिपाद्यविषयः धर्म एव। अत्र प्रथमं मीमांसाभिमतं मोक्षस्वरूपं विविच्यते।

श्रेयो द्विविधम्-अभ्युदयो निःश्रेयसं चेति। तत्र स्वर्गपुत्रपश्वादिजन्यं सुखमभ्युदयः। निःश्रेयसं तु मोक्ष एव। स च प्रपञ्च सम्बन्धविलयरूपः न तु प्रपञ्चविलय एव। मीमांसकमते प्रपञ्चस्य परमार्थत्वाभ्युपगमात्। श्रुतिस्मृत्यादिपर्यालोचनया तस्य सत्यत्वावगमात्। अत एव "यत्र त्वस्य सर्वमात्मैवाभूत्"[94] "आत्मा वा इदं सर्वम्" यत्र हि द्वैतमिव भवति"[95] इत्यादीनि

1. मीमांसासूत्रम् 1/1/1
2. ब्रह्म0 उ0 2/4/14
3. तदेव।

द्वैतनिषेधपराणि वचनान्यौपचारिकतया उक्तानि। यथा हि स्वाप्निकः प्रपञ्चो मृगतृष्णेन्द्रजालादिश्च भ्रान्त्या परिकल्पितः कियन्तश्चन कालं दृष्टिगोचरीभूय पश्चाद्विलीनो भवति, तथाऽयमपि शरीरेन्द्रियविषयादिरूपः प्रपञ्चः कियन्तञ्चन कालमात्मनः उपभोग्यतां भजन् पश्चाद्विनाश्यादनुपभोग्यो भवतीत्यनेनैव सादृश्येन भ्रान्तिरित्युपचारेणोच्यते पुरुषाणां विषयोपभोगेस्वावस्थां निवर्तयितुं तद्वारा मुक्तावभिरुचिमुत्पादयितुञ्च। अतो नाऽनेन प्रपञ्चस्य मिथ्याज्ञानजन्यत्वं बोधयितुं शक्यते येन तस्यात्यन्तिको विलय आशंक्येत किन्तु प्रपञ्चस्य स्वसम्बन्धविलय एव।

त्रेधा हि पुरुषस्य प्रपञ्चेन सह सम्बन्धः-शरीरेण, इन्द्रियेण, विषयैश्च। भोगायतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोग्या शब्दरसादयो विषयाः। भोगो नाम सुखदुःखादिविषयकोऽपरोक्षानुभवः। एतैः पुरुषो बध्यते। स हि बन्धः संसार इत्युच्यते। त्रयाणामेषामात्यन्तिकनिवृत्तिरेव मोक्षः। आत्यन्तिकत्वञ्च पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः। नूतनानामनुत्पत्तिः, ताभ्याञ्च सुखदुःखोच्छेदः। तदुच्छेदश्च धर्माधर्मोच्छेदात्। धर्माधर्मोच्छेदश्च उत्पन्नानां धर्माणां फलोपभोगेनाऽधर्माणां नित्यनैमित्तिककर्मानुष्ठानेन उभयेषाञ्चात्मज्ञानेन च भवति। उत्पाद्येषु तेषां काम्यानामनुष्ठानेन प्रतिषिद्धाकरणेन च अनुपादात् नित्यनैमित्तिकमात्रकरणेन प्रत्यवायपरिहारात् असति शरीराद्यारम्भके हेतौ पूर्वशरीरनिपाते चाशरीरोऽवस्थितो भवति। स एव मुक्त इत्युच्यते। अतः मोक्षार्थिभिस्तथैव वर्तितव्यम्। न ह्यात्मज्ञानमात्रादेतादृशो मोक्षो लब्धुं शक्यते। आत्मज्ञानस्य कर्मप्रवृत्तौ रुच्युत्पादनफलत्वात्। यथोक्तं वार्तिककारैः-

> आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम्।
> कर्मप्रवृत्तियोग्यत्वमात्मज्ञानस्य लक्ष्यते॥

"आत्मा वाऽरे द्रष्टव्यः"[1] "अविनाशी वाऽरेऽयमात्मा" इत्यादिना प्रतिपादित-मात्मज्ञानं हि संयोगपृथक्त्वन्यायेन क्रत्वर्थं पुरुषार्थञ्च। क्रत्वर्थता तावदग्निहोत्रादि-कर्तुरात्मनो नित्यत्वाविनाशित्वादिप्रतिपादनद्वारा पुरुषाणां कर्म, प्रवृत्तिजननमात्रौ-पयिकत्वम् तेन विना पारलौकिकेषु फलेषु तेषां प्रवृत्तिनिवृत्यनुदयात्। पुरुषार्थता तावत् परम्परया मोक्षोपकारकत्वम्। यो हि देहाद्विमुक्तमात्मानमजरममरं दुःखातीतं

1. बृहदारण्यकोपनिषद्-2.4.5

जानाति तस्य देहसम्बन्धविरक्तस्य तत्सम्बद्धेषु कर्मसु उदासीनता जाते पूर्वकृतानां कर्मणां फलभोगेन क्षयात्तन्निमित्ते शरीरे पतितेऽनागतानां तेषामननुष्ठानादेवाऽसत्वाद्देहान्तरानुत्पत्तेः अशरीरेणैवाऽवस्थितो भवति। सैवाऽवस्था मोक्ष इत्युच्यते। तदुक्तं श्लोकवार्तिके–

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया॥[1]
तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये।
उत्तरप्रचयाभावाद्देहो नोत्पद्यते पुनः॥[2]
कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते।
तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते॥[3]
तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते॥[4] इति।

अधुना को नाम धर्म इति विचार्यते। तत्र धर्मस्वरूपज्ञानं विना प्रतिज्ञातो धर्मविचारो न सम्भवति अतः तज्ज्ञानाय धर्मलक्षणमाह सूत्रकारः-"चोदनालक्षणोऽर्थो धर्मः"[5] इति। चुद् सञ्चोदने[6] इति धातोः युचूप्रत्यये कृते निष्पन्नः चोदना शब्दो विधिपरः "चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः"[7] इति वार्तिकोक्तेः। अथवा चोदना शब्दो[8] विध्यर्थवाद- मन्त्रनामधेय साधारणो वेदमात्रपरः। सा लक्ष्यते ज्ञाप्यते अनेनेति लक्षणं प्रमाणं यस्य स चोदनालक्षणः। अर्थः अनर्थसम्बन्धरहितः। एवञ्च वेदबोधितत्वे सति साक्षात्फलद्वारा वा यदनर्थाननुबन्धि इष्टसाधनञ्च तद्धर्मपदवाच्यमिति निर्गलितार्थः उक्तं हि वार्तिककृता–

फलतोऽपि च यत्कर्म नाऽनर्थेनाऽनुबध्यते।
केवलप्रीतिहेतुत्वात् तद्धर्म इति गीयते॥[9]

---

1. श्लोक वा0 पृ0 669
2. श्लोक वा0 पृ0 671
3. श्लोक वा0 पृ0 671
4. श्लोक वा0 पृ0 671
5. जैमिनिसूत्रम्-1.1.1
6. पा.सू.-3.3.107
7. संचोदनं पेरणम्, माधवाचार्यस्तु विवरणप्रमेयसंग्रहे चुद्प्रेरणे इत्येव पठति।
8. श्लोक वा0 पृ0 211
9. श्लोकवार्तिकम्, पृ0 3 वाराणसी संस्करणम्।

अत्र वेदबोधितत्वं वेदातिरिक्तप्रमाणेन स्वातंत्र्येणाऽबोध्यत्वे सति वेदबोधितत्वम्। तेन स्मृतिप्रभृतिबोधितस्यापि धर्मत्वाक्षतिः। स्मृतीनां मन्वादिप्रणीतानां शिष्टाचारस्य च वेदमूलकत्वाङ्गीकारात्। अत्र धर्मपदमधर्मस्याप्युपलक्षकम्। अर्थपदमनर्थस्य। अतश्चानर्थानुबन्धित्वे सति वेदबोधितत्वमधर्मत्वम् इत्यधर्मलक्षणं फलति।

तत्र विहितक्रियाजन्यः अपूर्वपदाभिधेयो लिङाद्यभिहितः कार्यनियोगाद्यपरपर्यायो धर्मः एवं निषिद्धक्रियाजन्यस्तादृश एवाधर्म इति प्राभाकराः। विहितनिषिद्धक्रिया-जन्यावेव पुण्यपापापरपर्यायौ आत्मगुणाविति नैयायिकाः[1] वैशेषिकाश्च। यागाद्यनुष्ठानजन्यः अन्तःकरणवृत्तिविशेष इति सांख्याः।[2] ज्ञानान्तरेण ज्ञानान्तरजनिता वासना इति बौद्धाः।[3] शरीरान्तरारम्भकान् परमाणु विशेषान् पुद्गलशब्दवाच्यान् धर्मशब्देनाऽभिदधति जैनाः।[4] सर्वेष्वप्येषु धर्मशब्दप्रयोगः श्रुतौ न दृष्टः। न चैषां श्रेयस्साधनत्वं सम्भवति। उक्तञ्च वार्तिककृता–

अन्तःकरणवृत्तौ वा वासनायाञ्च चेतसः।
पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि।।[5]
प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम्।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः।।[6]

अपूर्ववासनादिस्वरूपमजानद्भिः अपि लौकिकैः तत्तत्क्रियाकर्त्तर्येव धार्मिकाधार्मिकशब्दप्रयोगात्। यथोक्तं भाष्यकारेण यो हि यागादिकमनुतिष्ठति तं धार्मिकमिति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते। यथा पाचको लावक इति। अतश्च निःश्रेयससाधनत्वादिना विहितनिषिद्धक्रिये यागादि ब्रह्महत्यादिके एव धर्माधर्मपदवाच्ये इति सिद्धम्। इदमेव धर्मस्य लक्षणं, स्वरूपं, साधनञ्च। तत्र च प्रमाणानि विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ। इति।

---

1. श्लोक0 वा0 पृ0 126
2. प्रशस्तपादभाष्यम् पृ0 128, धर्मः पुरुषगुणः। अधर्मोऽप्यात्मगुणः। अत्र प्रवृत्ति साधनौ धर्माधर्मो प्रवृत्तिशब्देनोक्तौ–पराशरमाधवीय–माधवाचार्य वाराणसी संस्करणम्।
3. सा0 का0 का0 23
4. धम्मपद वर्ष 1, पूनासंस्करणम्।
5. न्यायकुमुदचन्द्रः पृ0 811, प्रमेयक–पृ0 248
6. श्लोक वा0 पृ0 105

## मीमांसाभिमतशब्दनित्यत्वपर्य्यालोचनम्–

भारतीयदार्शनिकेषु नैयायिका मन्यन्ते–शब्दोऽनित्यः, तस्य अर्थेन सम्बन्धोऽपि साङ्केतिकः, मीमांसकास्तु–शब्दो नित्यः, शब्दार्थसम्बन्धोऽपि नित्य इत्यभ्युपपन्नाः।

बहूनां विदुषां मतेन भारतीयदर्शनेषु कापिलं मतं प्राचीनतमम्। श्रुतावपि कपिलस्य नाम दृश्यते। "ऋषिप्रसूतं कपिलं तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्"[1] इति। कापिलाः सदसत्ख्यातिवादिनः शब्दस्याभिव्यक्तिमेव मन्यन्ते। तथैव मीमांसका अपि सत एव शब्दस्याभिव्यक्तिं प्रतिपद्यन्ते, सोऽयं गकार इति प्रत्यभिज्ञाकारणात् न यथा नैयायिकास्तस्याभिघातादिजन्यत्वम्।

जैमिनीयं पूर्वमीमांसाशास्त्रं धर्ममीमांसार्थं प्रवृत्तम्। स च धर्मो वेदबोधितः अर्थरूपश्चेति सूत्रभाष्ययोः स्थितम्। "वेदोऽखिलो धर्ममूलम्"[3] इति मनूक्तिः धर्मविषये प्रामाण्यसाधनार्थं वेदानामपौरुषेयत्वं पूर्वमीमांसासूत्राणां प्रथमाध्यायप्रथम-पादस्याष्टमेऽधिकरणे प्रतिष्ठापितम्। वेदाश्च शब्दरूपाः। वेदप्रामाण्यसिध्यर्थं प्रथमाध्यायप्रथमपादस्य षष्ठेऽधिकरणे शब्दस्य नित्यत्वं साधितम्। प्रथमाध्याय-तृतीयपादस्य च दशमाधिकरणे शब्दार्थस्य जातिरूपत्वं दर्शितम्। अत्र जात्यर्थबोधनाय आकृतिशब्दस्य प्रयोगः कृतः। जातिस्तु नित्या। शब्दे नित्ये अर्थे च तथाभूते शब्दार्थयोः सम्बन्धोऽपि नित्य एव स्यात्। अतो धर्मज्ञाननिमित्तपरीक्षावसरे शास्त्रस्यास्य पञ्चमे सूत्रे तदुद्घोषितम्।

तच्च सूत्रम् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम् उपदेशोऽव्यति-रेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वाद्"[4] इति।। चतुर्थे सूत्रे "सत् सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्, अनिमित्तं विद्यमानोपलम्भन-त्वात्"[5] इति प्रत्यक्षलक्षणं कृतम्, प्रत्यक्षप्रमाणस्य च धर्मे प्रामाण्याभावो दर्शितः। सता एव वस्तुना इन्द्रियाणां सम्बन्धे सति यो बोधो जायते, स एव प्रत्यक्षपदवाच्यः। स्वर्गादिरविद्यमानफलो धर्मः। तं कथं प्रत्यक्षं बोधयेत्, तन्मूलं वा अनुमानम्? अत एव वेदस्य धर्मबोधकत्वमित्यौपत्तिकसूत्रम् उपन्यस्तम्।

---

1. श्लोक वा0 पृ0 106
2. श्वेताश्वतरोपनिषद् 5/2/1
3. मनुस्मृति 2/6
4. मीमांसासूत्रम् 1/1/5
5. मीमांसासूत्रम् 1/1/4

अत्र भाष्यम्–

"औत्पत्तिकः" इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धः, नोत्पन्नयोः पश्चात् सम्बन्धः। औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः। तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य।[1] कथम्? उपदेशो हि भवति। उपदेश इति विशिष्टस्य शब्दस्योच्चारणम्, अव्यतिरेकश्च ज्ञानस्य। न हि तदुत्पन्नं ज्ञानं विपर्येति। यच्च नाम ज्ञानं न विपर्येति, न तच्छक्यते वक्तुम्। नैतदेवमिति। "यथा भवति यथा विज्ञायते, न तथा भवति यथैतन्न विज्ञायते तथैतदिति। अन्यदस्य हृदयेऽन्यद् वाचि स्यात्" एवं वदतो विरुद्धमिदं गम्यतेऽस्ति नास्ति वेति। तस्मात् प्रमाणम्, अनपेक्षत्वात्। न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यम्, पुरुषान्तरं वापि। अयं प्रत्ययो ह्यसौ। बादरायणग्रहणं बादरायणस्य इदं मतं कीर्त्यते, वादरायणं पूजयितुम्, नात्मीयं मतं पर्युदसितुमिति।

सूत्रभाष्यव्याख्यावसरे कुमारिलभट्ट आह–

**औत्पत्तिकगिरा दोषः कारणस्य निवार्यते।**
**अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता।**[2]
**चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः।।**[3] इति च।

"सत्यं लोके प्रमाणान्तरभूतानां प्रामाण्यम्, अतन्मूलानां चाप्रामाण्यं दृश्यते। न त्वेवमपि सापेक्षं प्रामाण्यम्, किन्तु स्वत एव[4]। अनाप्तवाक्यस्य त्वप्रामाण्यं न मूलविरहात्, किन्तु दृष्टमूलतया शब्दस्य दुष्टत्वात्, स्वाभाविकस्य प्रामाण्यस्यापवादात्। अपौरुषेये तु वेदे यद्यतयाप्रणीतत्वं नास्ति, तथापि प्रामाण्यस्येतदपेक्षाभावात्, अनाप्तस्पर्शनिमित्तदोषाभावात् चानपोदितं प्रामाण्यं भवति। त्रेधा ह्यत्र पुरुषानुप्रवेशः- पदपदार्थसम्बन्धद्वारेण वाक्यवाक्यार्थसम्बन्धद्वारेण, ग्रन्थस्यैव वा भारतादिवत्पौरुषेयत्वात्। न त्वेतत् त्रयमप्यस्ति, पदपदार्थसम्बन्धस्य नित्यत्वम्, अत्रौत्पत्तिकशब्देनोक्तं वाक्यार्थस्य च पदार्थमूलत्वम्। न च साक्षाद्बाधकमस्तीत्यव्यतिरेकशब्देनोच्यते। अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यमस्तीति "अर्थेऽनुपलब्धे" इत्यनेनोक्तम्।

खण्डदेवकृतभाट्टदीपिकाव्याख्यायां भाट्टचिन्तामणौ वाञ्छेश्वरयज्वा सूत्रार्थमित्थं स्पष्टीकरोति–"शब्दस्यार्थेन सम्बन्धःप्रत्याय्यप्रत्यायकभावलक्षण औत्पत्तिको नित्यः।

---

1. शाबरभाष्यम्।
2. श्लोकवार्तिकम् श्लोकः 11
3. शास्त्रदीपिका।
4. ऋ० सं० 1/32/8

जातेः शब्दार्थत्वस्य वक्ष्यमाणत्वाच्छब्दस्य च नित्यत्वात् सम्बन्धस्यापि नित्यत्वम्।"

ननु पदानि बाह्यार्थकानि, यथा निषेधार्थक उदात्तो "मा" शब्दोऽनुदात्तं च "माम्" इत्यस्यापरं रूपं मेति शब्दः। अतो "मा" शब्दस्यैताभ्यां भिन्नाभ्यामर्थाभ्यां कथं नित्यः सम्बन्धः सम्भवेदिति चेन्न, अत्र द्वा एव शब्दौ, नैकः। विस्पष्टस्तु स्वरभेदः। इत्थं शब्दार्थनित्यत्वं निर्बाधम्। वेदेऽपि "न" शब्दद्वयं वर्तते-एको निषेधार्थो "न" शब्दः, अपरस्तुल्यार्थकः।

नदं न भिन्नम् अमुया शयानं मनो रुहाणा अति यन्त्यापः।
याश्चिद् वृत्रो महिना पर्यतिष्ठत् तासामहिः पत्सुतः शीर्बभूव॥[1]
इत्यत्र "न" शब्द इवार्थकः।

आमासु पूर्षुपरो अप्रमृष्यं नारातयो विनशन् नानृतानि॥[2]

इत्यत्र अपां नपात्-स्तुतौ, नकारो निषेधार्थे द्विः प्रयुक्तः। अत्रापि प्रयोगे भेदो दृश्यते। इवार्थको "न" शब्द उपमानात् परंप्रयुज्यते। निषेधार्थकश्च "न" शब्दो निषेध्यात् प्रागायाति, अतो विस्पष्टः शब्द भेदः।

उक्तञ्च व्याकरणशास्त्रे-

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥[3]

जैमिनीयमते सुस्थिता शब्दार्थनित्यता, यथा श्लोकवार्तिकव्याख्याकृत् कुमारिलशिष्य उम्बेकः प्राह-"शब्दार्थयोर्नित्यः सम्बन्धः, न समयः"[4] इति।

---

1. ऋ0 सं0 1/32/8
2. ऋ0 सं0 2/35/8
3. सि0 कौ0-त0 बो0
4. श्लोक वा0 ता0 टी0 पृ0 185

# पञ्चमोऽध्यायः

## विविधदर्शनदृष्ट्या अविद्यायाः परीक्षणम्

"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या"[1] इति अतस्मिंस्तदिति प्रतिभासोऽविद्या इत्यविद्यासामान्यलक्षणमिदम्। तस्याः एव अवान्तरभेदचतुष्टयमनेन सूत्रेण उच्यते। अनित्ये नित्यत्वप्रतीतिः अशुचौ शुचित्वप्रतीतिः, दुःखे सुखत्वप्रतीतिः। अनात्मनि आत्मत्वप्रतीतिश्च। 'सा च प्रतीतिः अविद्या एव। पापादौ पुण्यादिबुद्धिरपि अविद्यैव। शरीरस्याशुचित्वं शरीरस्य उत्पतिस्थानं मातुरुदरं मूत्राद्युपहतम्। बीजं शरीरस्योपादानकारणं शुक्रं शोणितञ्च।

वस्तुतः आत्मभिन्ने देहादौ देहिनां यात्मबद्धिः सा अविद्यैव। तत्कृत एवायं संसारबन्धः। तस्याः अविद्यायाः नाश एव मोक्षः। तदुक्तम्–

अनात्मनि च देहादौ आत्मबुद्धिस्तु देहिनाम्।
अविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते॥[2]

एवमियमविद्या चतुष्पदा भवति। चत्वारि पदानि स्थानानि यस्या इति चतुष्पदा। एषा चतुष्पदाविद्या अस्य संसारस्य मूलम्।

अद्वैतवेदान्तिनां मते मायाऽविद्ययोः स्वरूपे मतभेदः दृश्यते। सुरेश्वराचार्य मते उभावेतौ भिन्नौ। शुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना त्वविद्या–

सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते॥[3]

विक्षेपशक्तिप्रधाना माया, आवरणशक्तिप्रधाना तु अविद्या। उक्तञ्च–

मायाविक्षिपदज्ञानमोक्षेच्छावशवर्ति वा।
अविद्याच्छादयत्तत्वं स्वातन्त्र्यानुविधायि वा॥[4]

---

1. पा० यो० सू० 2/5
2. सर्वद० सं० पृ० 262
3. पञ्चदशी–1.16
4. तदेव।

विवरणाचार्यमते तु मायाविद्याशब्दौ समानार्थकौ। अनयोरेव भेदाभेदौ आभासप्रतिबिम्बवादयोः प्रयोजकौ। प्रतिबिम्बवादे मायाऽविद्ययोः एकत्वस्वीकारात् एक एव हिरण्यगर्भो जीवः स्वीकृतः। तेन "एकजीववाद" एव सुस्थितः। "आभासवादे तु जीवभेदेनैव अविद्यायाः भेदाङ्गीकारात् अनेकजीववादः उपपादितो भवतीति।

तत्त्वतः अविद्या एका अनादिभूता "मूलाविद्या" नाम्ना विख्याता। अस्याः एकत्वेऽपि जीवानां परस्परभेदस्य व्यावहारिकसत्यवात् अनन्तजीवभेदेन तस्याः आनन्त्यमङ्गीकरणीयम्। यदिदं "तूलाविद्या" नाम्ना अविद्याया अवान्तरभेदकथनं तज्जीवनिष्ठाविद्यायाः शुक्तिघटाद्यवच्छेदभेदेन भेदव्यपदेशमात्रम्। न तु वस्तुतः अविद्यायाः भेदः। यथा व्यष्ट्यभिप्रायेण बहूनां वृक्षाणां "वृक्षा" इत्यनेकत्वव्यवहारः समष्टिविवक्षया "वनमि" ति एकत्वव्यवहारः, तथा बह्वन्तः करणोपाधिभेदेन अनेकजीवनिष्ठाज्ञानानामनेकत्वेऽपि समुदायविवक्षया अज्ञानमित्येकत्वव्यपदेशः।

मिथ्याज्ञानमेव सर्वानर्थमूलमिति प्रायशः सर्वेषां दार्शनिकानां मतम्। जीवानां समस्तदुःखमूलकारणं जन्म तस्य कारणं धर्माधर्मौ। धर्माधर्मयोः कारणं रागद्वेषादिदोषाः। तेषां दोषाणां कारणं मिथ्याज्ञानम्। सिद्धान्तोऽयं मीमांसकं विहाय अन्येषां दार्शनिकानां मते विद्यते। अद्वैतवेदान्तिनः अस्य मिथ्याज्ञानस्यापि मूलभूतां सर्वव्यापिब्रह्मणोऽपि आवरणरूपामघटनघटनापटीयसीमविद्यामुररीकुर्वन्ति। आचार्यशंकरभगवत्पादभिन्ना अन्ये आस्तिकदार्शनिकाः एतामविद्यां नाङ्गीकुर्वन्ति। केवलं बौद्धा एव संवृत्ति मायामविद्यां वा समातिष्ठन्ते।

"अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम्" इति अविद्या लक्षणे "ज्ञाननिवर्त्यत्व" पदानुपादाने अनादिभावरूपत्वात् ब्रह्मणि इदं लक्षणमतिव्याप्तम्, तद्वारणार्थं विशेष्यदलमुपात्तम्। उत्तरज्ञाननिवर्त्ये पूर्वज्ञाने भावरूपत्वस्य ज्ञाननिवर्त्यत्वस्य च सत्वात् यथा अतिव्याप्तिर्न स्यात् तदर्थं विशेषणकोटौ "अनादित्वपदं गृहीतम्। उत्तरज्ञाननिवर्त्यपूर्वज्ञानस्य भावरूपेऽपि अनादित्वाभावान्नातिव्याप्तिः। एवं "भावरूप" पदानुपादाने ज्ञानप्रागभावस्य अनादित्वात् ज्ञाननिवर्त्यत्वाच्चातिव्याप्तिः स्यात्। भावरूपपदोपादानात्तु ज्ञानप्रागभावस्य भावरूपत्वाभावान्नातिव्याप्तिः। किञ्च ज्ञानपदमत्र अपरोक्षज्ञानपरं बोध्यम्, अन्यथा अविद्यायाः परोक्षज्ञाननिवर्त्यत्वाभावादव्याप्तिः स्यात्। अत्र भावरूपपदसन्निवेशात् अभावविलक्षणमनिर्वचनीयं वा अज्ञानं स्यादित्यर्थः पर्यवस्यति।

अविद्या ब्रह्मविषयिणी भवति। अन्यविषयकत्वे "तत्र को मोहः" "कः

शोक एकत्वमनुपश्यतः" ज्ञात्वा देवं मुच्यते सर्वपापैः" इत्यादि श्रुतिप्रतिपाद्या ब्रह्मविषयकज्ञानेन तस्या निवृत्तिर्न स्यात्, समानविषयकज्ञानाज्ञानयोः निवर्त्यनिवर्तकत्वभावात्" इति सर्ववादिसिद्धसिद्धान्तः।

अविद्या ब्रह्मविषयिण्यपि जीवाश्रिता भवति। "अहमज्ञः", "ब्रह्म न जानामि" इत्यनुभवे अहमिति शब्दवाच्यो जीवः अज्ञ इति अज्ञानाश्रयत्वेन प्रतीतेरिति वाचस्पतिमिश्रमतम्।

विवरणकृतां संक्षेपशारीरककृताञ्च मते अविद्या ब्रह्माश्रिता एव। जीवभावश्च अज्ञानकार्यः, तर्हि कथं जीवोऽज्ञानाश्रयः। एवमीश्वरभावोऽपि अज्ञानकार्य एव। तस्मादज्ञानं नेश्वराश्रितम्, न सा पुनः स्वतंत्रा निराश्रया वा तिष्ठति। तस्मात् पारिशेष्यात् अनाद्यज्ञानं शुद्धब्रह्माश्रितं भवति।

ब्रह्मणः अविद्याश्रयत्वाभ्युपगमे अविद्याया आवरकस्वभावतया ब्रह्म अपि आवृतं भवति। ब्रह्मणः आवृत्तत्वे तु प्रकाशानुपपत्या जगदान्ध्यप्रसङ्गः। किञ्च, ब्रह्मणः अविद्याश्रयत्वे सर्वमुक्तेः प्राग् एकैकस्य जीवस्य शुद्धब्रह्मप्राप्तिसम्भावनैव अपलप्येत। तदानीमपि ब्रह्मणः जीवान्तरगताविद्याया आश्रयत्वादिति मुक्तेरनुपपत्तिप्रसङ्गः। अपि च ब्रह्मणः नित्यबुद्धमुक्तशुद्धतया तत्र अविद्या न स्थातुमर्हति, अविद्यायाः बन्धस्वरूपत्वादिति न सा ब्रह्माश्रिता, किन्तु जीवाश्रितैव। न चास्मिन् मते जीवभावस्य अज्ञाननिबन्धनत्वात्, अज्ञानस्य च जीवाश्रितत्वात् अन्योन्याश्रयप्रसङ्गः स्यात् इति वाच्यम्, अज्ञानस्य अनादित्वाभ्युपगमात्, तत्र च अनादिवस्तुनि तादृश दोषस्य अमूलकत्वादिति।

आत्मैव परमार्थभूतः सत्यः इति शांकरदर्शनस्य मान्यता। एष एव ब्रह्मशब्देनोच्यते। स चात्मा दृग्रूपः। दृगेव चिच्छब्देन ज्ञानशब्देन चोच्यते। स च निर्विशेषः कथमपीदृशस्तादृश इति वक्तुं न शक्यते। अचिन्त्यत्वात्मनसोऽप्यगोचरः। तस्य चात्मनः शक्तिरविद्या मायादिपदवाच्या सत्वरजस्तमोमयस्य जगतो मूलकारणम्। इयं चात्मशक्तिः पारमार्थिकसत्यत्वाभावादसती व्यावहारिकसत्यत्वात् सतीति चोच्यते। अस्याश्च चिता सह सम्बन्धस्त्रिविधः। यथाकाशं काष्ठलोष्टादीनन्तो बहिश्च सर्वान् व्याप्नोति, तथेयं चिदविद्यामन्ततो वहिश्च व्याप्नोति। अविद्यायां चिद्व्याप्तौ अविद्या कार्ये मूर्ते पृथिव्यादावमूर्ते बुद्धयादौ चेत्यखिले प्रपञ्चे चिद्व्याप्तिरर्थादेव सिद्धयति। इयमेकाविद्या। यथा स्फटिकः स्वच्छतया स्वसमीपवस्तुगतं रक्तिमानं गृह्णाति तथेयमविद्यान्तो गुणत्रयबीजभूतापि स्वरूपतः स्वच्छां चितं गृह्णाति। अयमेव चिदाभासः। इयं द्वितीयाविद्या। यथा च दर्पणः स्वपुरोवस्थितस्य मुखादेः प्रतिबिम्बं गृह्णाति, प्रतिबिम्बतायाश्चितोऽपि चिदाभासशब्देन व्यपदेशो भवति। इयं तृतीयाविद्या।

एतस्मिन् प्रकारत्रये प्रथमेन प्रकारेण चिद्व्याप्तिः समष्ट्यविद्यायामिव व्यष्ट्यविद्यायामपि तत्कार्येषु मूर्तेष्वमूर्तेषु पृथिव्यादिषु बुद्ध्यादिषु चापि सर्वत्र संभवति। यथाकाशस्य मृत्समूहे तत्खण्डेषु तत्कार्येषु नानाविधेषु घटशरावचित्रादिषु व्याप्तिस्तद्वत् द्वितीयेन तृतीयेन च प्रकारेण जायमानश्चित्सम्बन्धः स्वच्छवस्तुन्येव, वस्तुस्वभावात्। स्फटिक एव हि समीप वस्तुगतरक्तिमाद्याभासं गृह्णाति नास्वच्छा लोष्टादयः। तथा दर्पणादिरेव च प्रतिबिम्बं गृह्णाति नास्वच्छा लोष्टादयः। प्रथमेन प्रकारेण चिद्व्याप्तिस्तु सर्वत्रैव स्वच्छे चास्वच्छे च। द्वितीयेन तृतीयेन च प्रकारेण चित्सम्बन्धेन बुद्ध्यादौ प्रतीयमानो यश्चिदाभासश्चित्प्रतिबिम्बं वा तादृशे चिदाभासे चित्प्रतिबिम्बे च पुनः प्रथमेन प्रकारेण चिद्व्याप्तिर्दुर्वारैव। तथा च बुद्ध्यवच्छिन्नेव चिदाभासावच्छिन्नापि चित्प्रतिबिम्बावच्छिन्नापि च चिद्भवति। एतदेव च य आत्मनि तिष्ठन्नात्मनोऽन्तरः"[1] इत्यनया घटकश्रुत्या बोध्यते इति।

## वेदान्तदर्शनदृष्ट्या ब्रह्मणोरैक्यं न वेति सोपपत्तिविमर्शः

तत्र कौमुदीकृतः "जगज्जन्मस्थितिलयेष्वेकैकं ब्रह्मलक्षणम्, एकैकस्य ब्रह्मलिङ्गत्वात्"[2] इत्याहुः। इदञ्च तटस्थं लक्षणम्, अविद्यमानत्वे सति व्यावर्तकत्वात् शाखायाश्चन्द्रलक्षणत्ववत्। अन्ये तु जगज्जन्मादिकारणत्वं समुदितं लक्षणम्, न तु प्रत्येकम्। जन्मकारणत्वस्य स्थितिकारणत्वस्य च निमित्तकारणसाधारण्यात्। लयकारणत्वप्रदर्शनेन उपादानकारणत्वलाभः। ताभ्याञ्च निमित्तकारणत्वलाभः इत्यभिन्ननिमित्तोपादानत्वं ब्रह्मणः सिद्ध्यति। किञ्च, चेतनत्वात्कर्तृत्वं सर्वकर्तृत्वात् सर्वज्ञत्वं सर्वोपादानत्वादद्वितीयत्वञ्च सिद्धम्, तत्र ब्रह्मणः सर्वोपादानत्वं सर्वविवर्तास्पदत्वम्। विवर्तलक्षणन्तु स्वाभिन्नन्यूनसत्ताकत्वम्। परिणामब्रह्मणः पारमार्थिकसत्वात् जगतस्तु व्यावहारिकसत्वाल्लक्षणसमन्वयः। यद्वा कारणसजातीयो-ऽन्यथाभावः परिणामः। तद्विलक्षणोऽन्यथाभावः विवर्त इति। स्वरूपलक्षणन्तु सच्चिदानन्दादिकम्। "सत्यं ज्ञानमनन्तं ब्रह्म"[3] इत्यादि श्रुतेः। तत्र शुद्धस्य ब्रह्मणः जगदुपादानत्वमिति संक्षेपशारीरककृतः जन्मादिसूत्रदिभाष्ययोः उपादानत्वस्य ज्ञेयलक्षणत्वोक्तेः। आत्मन आकाशः सम्भूत[4] इत्यादिश्रुतिषु मायोपहितब्रह्मवाचिनामात्मा-दिशब्दानान्तु शुद्धे ब्रह्मणि लक्षणैवेति शुद्धस्य विवर्तोपादानत्वम्।

---

1. बृ0 3/7/22
2. तत्त्वकौमुदी।
3. तै0 उप.–2.2
4. तदेव।

विवरणानुसारिणस्तु "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।[1] इत्यादि श्रुत्यनुरोधेन सर्वज्ञत्वादिधर्मविशिष्टं मायोपहितमीश्वरमेव ब्रह्म जगदुपादानकारणमिति वदन्ति। अत एव सर्वोपादानत्वं जीवव्यावृत्तमीश्वरं लिङ्गम्। जीवेश्वरानुगतचैतन्यमात्रस्य जगदुपादानत्वे तु तन्न स्यात्। ईश्वरस्य स्वरूपलक्षणमपि जगज्जन्मादिकर्तृत्व-मीश्वरानुगताखण्डचैतन्यस्य तटस्थलक्षणमिति जन्मादिसूत्रभाष्ये[2] तस्य ज्ञेय ब्रह्मलक्षणत्वोक्तिरपि संगच्छते।

केचित्तु मायाऽविद्ययोर्भेदमाश्रित्य वियदादिप्रपञ्चोपादानमीश्वरो वियदादेरी-श्वराश्रितमायापरिणामत्वात्, अन्तःकरणादिरूपे लिङ्गशरीरे तु जीवेश्वरयोरुभ-योरुपादानत्वम्, लिङ्गस्येश्वराश्रितमायापरिणाममहाभूतोपष्टम्भत्वात्, जीवाविद्याकृत-भूतसूक्ष्मकार्यत्वाच्चेति वदन्ति। लिङ्गस्याविद्याकार्यत्वादेव विद्ययोच्छेदोऽपि तत्र-तत्र दर्शितः सम्भवति।

"लिङ्गे जीवस्यैव तादात्म्याभिमानात् जीव एव लिङ्गोपादानमिति त्वन्ये।

अपरे तु सर्वस्य व्यवहारिकजगतः उपादानकारणमीश्वरः।

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी।।**[3]

प्रातिभासिकस्य तु सर्वस्य स्वप्नप्रपञ्चस्य चोपादानं जीवः। ब्रह्मणो जगदुपादानत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरिक्ते ब्रह्मणोऽभावो वा, एकदेशेन परिणामे निरवयवत्वश्रुतिविरोधो वा प्रसज्येत्।

केचित्तु स्वाविद्यायाः समस्तस्य सेश्वरस्य जगतः कल्पकत्वात् स्वप्नद्रष्टृत्ववत् जीवस्यैव एकस्य सर्वकर्तृत्वमित्याहुः किन्तु मतमिदमुपेक्ष्यम्। ईश्वरप्रतिपादक-श्रुत्यादिविरोधात् बन्धमोक्षव्यवस्थानुपपत्तेश्च।

तत्त्वनिर्णयकृतस्तु ब्रह्म माया चेत्युभयमुपादानकारणम्। "यः सर्वज्ञः सर्वविद्"[4] "मायां तु प्रकृतिं विद्यात्"[5] तत्र ब्रह्म विवर्तोपादानम्। माया तु परिणाम्युपादानम्।[6]

1. मुण्ड.-2.2.7
2. ब्र0 सू0 1/1/2
3. मुण्ड.-2.1.3
4. मुण्ड.-2.2.7
5. श्वेताश्वतर-4.10
6. वेदान्तदर्शनम्-चौखम्बा।

संक्षेपशारीककृतस्तु ब्रह्मैवोपादानकारणम्। माया तु द्वारकारणम्। कूटस्थस्य चितः स्वतः कारणानुपपत्तेः। यथा-मृदः श्लक्ष्णता घटं प्रति द्वारकारणम्। अकारणमपि द्वारं कार्येऽनुगच्छति।[1] यथा मृदः श्लक्ष्णता घटे।

कल्पतरौ तु भाष्यकारभामतीकारयोर्जगदुपादानत्वविषये मतद्वयमस्ति। तच्चेत्थम्-

स्वशक्त्या नटवद्ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवभ्रान्तिनिमित्तं तत् बभाषे भामतीपतिः॥[2]
अज्ञातं नटवत् ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवाज्ञानं जगद्बीजं जगौ वाचस्पतिस्तथा॥[3]

सिद्धान्तमुक्तावलीकृतस्तु ब्रह्म नोपादाकारणम्। "तदेतत् ब्रह्मापूर्वमनपरमबाह्यम्" "न तस्य कार्यं करणञ्च विद्यते" इत्यादिश्रुतिविरोधात्। किन्तु मायैवोपादान-कारणम्। ब्रह्मणि उपादानव्यवहारस्तु जगदुपादानमायाधिष्ठानत्वेन औपचारिकः।

अथ क ईश्वरः को जीव इति जिज्ञासायां प्रकटार्थकृतः- अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसम्बन्धिनी माया, तस्याश्चित्प्रतिबिम्ब ईश्वरः। तस्या एव परिच्छिन्नान्तप्रदेशेष्वावरणविक्षेपशक्तिमत्सु अविद्याभिधानेषु चित्प्रतिबिम्बो जीव इति।

रजस्तमसोऽनभिभूतशुद्धसत्त्वप्रधाना सत्त्वरजस्तमोगुणात्मिका माया, तदभिभूत-मलिनसत्त्वाऽविद्येति मायाऽविद्याभेदं परिकल्प्य मायाप्रतिबिम्ब ईश्वरः, अविद्याप्रतिबिम्बो जीव[4] इति। तत्र प्रमाणम्-"जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इति श्रुतिः।"

एकैव मूलप्रकृतिर्विक्षेपशक्तिप्रधाना मायापदवाच्येश्वरोपाधिः आवरण शक्तिप्रधानाविद्याऽज्ञानशब्दाभिधेया जीवोपाधिरित्यपि कश्चित्। तदुक्तम्-

सत्त्वशुद्ध्य्विशुद्धिभ्यां मायाविद्ये च ते मते।
मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः॥
अविद्या वशगस्त्वन्यस्तद्वैचित्र्यादनेकधा॥[5]

---

1. संक्षेपशारीरकभाष्यम्।
2. कल्पतरु।
3. तदेव।
4. विवरणप्रमेयसंग्रहः।
5. पञ्चदशी-1.16

संक्षेपशारीरककृतस्तु मायायां चित्प्रतिबिम्ब ईश्वरः। अन्तःकरणे चित्प्रतिबिम्बो जीवः। "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतेः। अत्र कार्यपदेन मायाकार्यमन्तःकरणं गृह्यते।[1]

पञ्चदश्यां चित्रदीपप्रकरणे तु जीव ईशो विशुद्धा चिदिति त्रैविध्यप्रक्रियां विहाय–

**कूटस्थं ब्रह्मजीवेशावित्येवं चिच्चतुर्विधा।**
**घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा॥**
**यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम्।**
**परमात्मनि विज्ञेयं तथावस्थाचतुष्टयम्॥**[2]

इत्यादिना अन्यैव प्रक्रियाऽश्रिता। जीवब्रह्मणोरैक्यञ्च "एकमेवाद्वितीयं ब्रह्म" इत्यादिश्रुतिसिद्धम्। तदनुकूलतर्कसिद्धञ्च। तथाहि श्रुत्या ऐक्यावधारणद्वितीयप्रतिषेधैः ब्रह्मणः स्वगतसजातीयविजातीयभेदराहित्यं बोध्यते। अन्यथा विशेषणत्रयवैयर्थ्यात्। "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इति श्रुतिरपि द्वैतपदोत्तरमिवपदमुपन्यस्यन्ती द्वैतस्य वस्तुसत्तां नाभिप्रैति। तच्च जगतो मायामयत्वेन सत्वादिनाऽनिर्वाच्यत्वादुपपद्यते। जगतो मिथ्यात्वञ्च सत्वादिनाऽनिर्वाच्यत्वमेवाद्वैतिनामभिमतं न तु असत्वम्। शशश्रृङ्गादिवदप्रतीत्यापत्तेः। जगतो निस्तत्त्वरूपता च युक्त्याऽपि सिद्धयति। यतोऽवैदिकैरपि माध्यमिकैः शून्यत्वं जगतोऽभ्युपेयते।

जीवब्रह्मणोरैक्ये च जीवस्याणुत्वं ब्रह्मशब्दार्थविरुद्धं तद्विभुत्वप्रतिपादकश्रुतिविरुद्धमन्तर्यामी ब्रह्मविरुद्धञ्च। जीवस्याणुत्वप्रतिपादकश्रुतयश्च सूक्ष्मत्वेन दुर्ज्ञानत्वपराः। अत एव जीवस्यानन्दरूपब्रह्मरूपता प्राप्तिर्निश्शेषानर्थनिवृत्तिश्च मुक्तिरित्यपि प्राप्तविस्मृतकण्ठगतचामीकरादिप्राप्तिवत् परिहृतरज्जुभुजङ्गपरिहारवन्मन्तव्या। न तु अप्राप्तप्राप्तिरूपाऽपरिहृतपरिहाररूपा च मुख्या। अत एव श्रुतिरपि–

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता।**[3]

तथा च बन्धस्य नित्यवृत्तस्यापि स्वात्मतत्त्वाननुभवात् विपर्ययाच्च स्वात्मनि कल्पितस्य प्रहाणायात्मैकत्वविद्याप्तये च सर्वे वेदान्ताः आरब्धाः। सर्वाणि च

1. संक्षेपशारीरकम्।
2. पञ्चदशी–चित्रदीपप्रकरणम्।
3. माण्डूक्यकारिका।

शास्त्राणि विधिप्रतिषेधमोक्षपराणि। आत्मैकत्वविद्या प्रतिपत्तिरेव च ब्रह्मप्राप्त्युपायः। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"[1] इति श्रुतेः। तत्र च सर्वत्र वेदान्तेषु शास्त्रेषु च प्रतिपादिता नानाविधा उपायाः सर्वेऽपि परस्पराऽविरोधिनः साक्षात्परम्परया प्रकारभेदेन मार्गभेदेन च स्वरूपप्राप्तिहेतुत्वात्। तदुक्तम्–

"सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः"[2] "ऋजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव"[3] इति। तथा च एवं साम्प्रदायिकानां परस्परं कलहः बधिरकलहवदुपेक्ष्य एव। ते सर्वेऽप्युपायाः भगवद्रूपतयोपास्यत्वेन शास्त्रे उपदर्शिताः स्वरुच्यनुसारेणाधारिताः स्वान्तःशुद्धिद्वारा ज्ञानजननेन भगवत्प्राप्तिसाधका एव। तथा च श्रूयते–"एकं सद् विप्रा बहुधा वदन्ति"। भगवदुपासनञ्च स्वस्यैव कल्याणाय जीवने कर्तव्यं न तु नित्यतृप्ते भगवति तेन कश्चन परितोषलेशोऽपि। तदुक्तं भागवते–

नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते।
यद्यज्जनो भगवते विदधीतमानं
तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः॥[4]

किञ्च निश्शेषानर्थप्रहाणाय नित्यानन्तानन्दस्वरूपात्मावाप्तये च यथाकामं यं कश्चन शास्त्रपथं समाश्रितवताऽपि भगवद्भक्तिरशेषविघ्नवारिका जगतस्तारिका विविधदुःखदारिका आनन्दकारिका न ज्ञानगर्वाद् हातव्या, यतस्तद्धाने निरवलम्बाम्बरगमन इव विनिपातोऽवश्यंभावी। तदुक्तं भागवते–

ये चारविन्दाक्षविमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः॥[5] इति

## वेदान्तदर्शनदृष्ट्या बिम्बप्रतिबिम्बस्वरूपम्

आभासस्वरूपो जीवः, बिम्बस्वरूपो जीवः, प्रतिबिम्बस्वरूपो वा जीवः इति संशये प्राप्ते प्रथमं तावदाभास एव विचार्यते। श्रुतौ–"जीवेशावाभासेन करोति

---

1. शु० यजु० 31.18
2. श्रीमद्भग० गीता 15/15
3. शिवमहिम्नस्तोत्रम्।
4. श्रीमद्भागवतमहापुराणम् 7.9.11
5. तत्रैव–10.2.32

माया चाविद्या च स्वयमेव भवति"[1] इति वाक्याच्चैतन्याभासौ ईश्वरजीवौ इति विज्ञायते। तत्र आभासपदेन किं प्रतिपाद्यते? बिम्बः प्रतिबिम्बः अन्यद्वा इति संशये प्रतिबिम्ब एव नान्यदिति निश्चीयते। यथा दर्पणे मुखाभास इत्यादि शब्देन दर्पणादौ मुखप्रतिबिम्ब एव गृह्यते नान्यत्। अत एव प्रतिबिम्बस्यैव जीवस्वरूपस्य विचारणा समायाति। तत्रादौ प्रतिबिम्बरूपो जीव इति विचार्यते–

प्रतिबिम्बगताः पश्यन् ऋजुवक्रादिविक्रियाः।
पुमान् क्रीडेद् यथा ब्रह्म तथा जीवेशविक्रियाः॥[2]
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥[3]

इत्यादि प्रतिपादनेन "जीवः प्रतिबिम्बश्चेतनात्मनः परमात्मनः" इति निश्चीयते। किन्तु कुत्र चेतनप्रतिबिम्बो जीव इत्यत्र विप्रतिपत्तिः। केषाञ्चिन्मतम्–"जीवेशावाभासेन करोति"[4] इत्यादिश्रुत्या विशुद्धसत्वरूपायां मायायां चित्प्रतिबिम्ब ईश्वरः, अविद्यायां मलिनसत्वरूपायां चित्प्रतिबिम्बो जीवः, शुद्धचिद्रूपं ब्रह्म, अनादिविद्योपाधिको जीव इति "जीव ईशो विशुद्धाचित्" इति चित्त्रैविध्यप्रक्रियानुमोदितो भवति। अत एव आवरणप्राधान्याविद्याप्रतिबिम्बत्वात् जीवस्याज्ञोऽहम् इति प्रतिपत्तिः, न ईश्वरस्येति।

किन्तु "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः"[5] इति श्रुत्या कार्यरूपान्तःकरणोपाधिक एव जीवो नाविद्योपाधिकः, अविद्यायाः कारणभूतायाः ईश्वरोपाधित्वात् इत्यपि केषाञ्चिन्मतम्। वस्तुतस्तु उभयोः श्रुत्योः सामञ्जस्याय अविद्यापरिणामरूपान्तःकरणमिति मत्वा तत्प्रतिबिम्बो जीव इति कल्पनया अविद्योपाधिकाज्ञानलेशोऽपि नेश्वरे समागच्छति। तस्य मायाप्रतिबिम्बभूतत्वादिति प्रतिबिम्बभूतौ ईश्वरजीवौ इति मन्वानस्य मतम्।

येषां मते मुक्तौ जीवस्य ईश्वररूपेण महाप्रलयपर्यन्तावस्थानम् "स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा"[6] इत्यादि ऐश्वर्यश्रुत्या "संकल्पादेवास्य" इत्यादि सत्यसङ्कल्पश्रुत्या चेति ईश्वररूपतां प्रतिबिम्बेश्वरवादे न संभवति, जीवेश्वरयोः उपाधिभेदात् ज्ञानात् अज्ञाननाशे सति जीवोपाधिविनाशेऽपि

1. नृ.उ.ता.-9
2. कल्पतरु।
3. तदेव।
4. नृ.उ.ता.-9
5. श्रुतिवाक्यम्।
6. छान्दोग्य.8.12.3

ईश्वरोपाधेः स्थितत्वेन प्रतिबिम्बस्योपाधिनाशे प्रतिबिम्बान्तरगमनासम्भवात् बिम्बरूपेण अवस्थानस्य उचितत्वात् बिम्बरूप एव ईश्वरः प्रतिबिम्बो जीवः बिम्बप्रतिबिम्बरहितो ब्रह्म इति तेषां मतम्। सर्वञ्चैतत् बिम्बप्रतिबिम्बवादिविवरणप्रस्थानाद्यनुगामिनां मतम्।

भामतीप्रस्थानानुगामिमते नैतत् शोभनम्। यतः "घटसंवृतमाकाशम्" नीयमाने यथा घटे, घटो नीयते नाकाशम्, तद्वत् जीवो नभोपमः" इत्यादिश्रुत्या अविद्यापरिणामान्तःकरणावच्छिन्नो जीवो न प्रतिबिम्बः। बिम्बप्रतिबिम्बभाव-प्रतिपादिकाः श्रुतयोऽपि नावच्छिन्नवादविरुद्धाः। तासामपि प्रतिबिम्बोपाधिदर्पणाधिगत-मलिनकुटिलादिविक्रियाया बिम्बभूतचन्द्रमुखादौ असम्बन्ध इव उपाधिगतदोषेण चिदात्मनि असम्बन्धमात्रबोधपरत्वात् नावच्छिन्नवादबाधनम्। अत एव भगवान् बादरायणः-"अत एव चोपमा सूर्यकादिवत्"[1] अम्बुवदग्रहणात्तु न तथात्वम्"[2] "वृद्धिह्रासभाक्तमन्तर्भावादुभयसामञ्जस्यादेवम्"[3] इति वेदान्ते प्रथमसूत्रेण सूर्यादिप्रतिबिम्बवत् जीवोपमां प्रदर्श्य, द्वितीयसूत्रेण एकदेशे बिम्बप्रति-बिम्बभावाभावमाशंक्य तृतीयसूत्रेण यथा जलाद्युपाधेर्वृद्धिह्रासचलनादिनोपहितस्य वृद्धिह्रासचलनादिकम् आध्यासिकं भवति, तद्वदेवान्तःकरणोपाध्यनुरोधि जीवगतदुःखित्वादिकमित्यर्थ एव दृष्टान्तदर्शनमिति प्रतिपादितवान्। तथा श्रीमच्छङ्कराचार्येणापि शारीरकभाष्ये दृष्टन्तरूपेणैव बिम्बप्रतिबम्बभावं वर्णयता कण्ठत एवावच्छिन्नवादे स्वारस्यं दर्शितम्। अत एव अन्तःकरणावच्छिन्नो जीव इत्येव समुचितम्, न प्रतिबिम्ब इति।

अत्र विचार्यते-श्रुतौ द्वौ वादौ विद्येते, प्रतिबिम्बवादः अवच्छिन्नवादश्च। तत्र प्रतिबिम्बवादिनी श्रुतिः अवच्छिन्नवादानुयायिभिः अवच्छिन्नवादपरतया व्याख्यायते। एवं प्रतिबिम्बवादानुयायिभिः अपि अवच्छिन्नवादिनी श्रुतिस्तु प्रतिबिम्बपरतयैव व्याख्यायते। अत्र सम्भवे उभयोः प्रतिबिम्बवादावच्छिन्नवादयोरेकत्र सामञ्जस्ये महान् लाभो भवेत् अतः उभयोः का सङ्गतिः? इति विचार्यते तावत्-

वादिना एतत् प्रतिपाद्यते यत् व्यापकबिम्बस्थितोपाधौ कथं प्रतिबिम्बः तथा नीरूपस्य नीरूपे को प्रतिबिम्ब इति। तत्र तावदेकः स्वच्छः काचघटो रक्तजलपूर्णः रक्तजले निमग्नः उदाहरणरूपेण नीयताम्, तत्र रक्तजलमध्ये स्थितोऽपि स्वच्छः

1. वेदान्तसूत्रम्-3.2.18
2. तदेव-3.2.19
3. तदेव-3.2.20

काचघटः अन्तःस्थरक्तजलरञ्जितः रक्तप्रतिबिम्बश्च जपाकुसुमाश्रितस्फटिक इव दृश्यत एव। अनेन स्थलान्तर एव बिम्बप्रतिबिम्बभावो भवतीत्याक्षेपो निराकृतः।

द्वितीये नीरूपे नीरूपस्य प्रतिबिम्बाभावो विचार्यते–सोऽपि प्रतिबिम्बो महाकाशे नीरूपस्य शब्दस्य प्रतिध्वनिरूपेण ज्ञायत एव, यद्यपि उक्तदृष्टान्तयोरपि खण्डनमण्डने भवेतामेव, किन्तु अचिन्त्यशक्तिरूपायाः मायायाः किमकार्यम्? यतोऽघटित घटनापटीयसी माया, अतो ब्रह्मणः शक्तिरूपायाः मायायाः ब्रह्माभिन्नायाः अनिर्वचनीयायाः सर्वमतर्क्यमपि कार्यं भूषणमेव न तु दूषणम्। उक्तञ्च–"मायया जायते विश्वं सा च माया न विद्यते"[1] इति। तस्मादिदं निष्पन्नं यत् अविद्याकार्यान्तःकरणावच्छिन्नचित्प्रतिबिम्बो जीवः इति। सोऽपि मिथ्यैव, ब्रह्मभिन्नस्य सर्वस्य मिथ्यात्वात्। तदुक्तम्–

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।**
**न मुमुक्षुर्नवै मोक्ष इत्येषा परमार्थता॥**[2] इति।

## वेदान्ताभिमताध्यासस्वरूपम्

अत्र सर्वेऽपि प्राणिनः सुखमभिलषन्तः दुःखाच्च बिभ्यतः समेऽनुभूयन्ते। तत्र दुःखकारणं जननमरणाविच्छेदलक्षणा संसृतिः। सा च अध्यासमूलिका। अतः अध्यासस्य स्वरूपं ज्ञात्वा तन्निरासोपायश्च ज्ञातव्यः। तज्ज्ञात्वा च तदनुष्ठतीति नियमेन ज्ञाने सत्येवोपायानुष्ठाने प्रवृत्तिः स्यात्। तत एव च स्वरूपसुखावाप्तिः स्यात्। अत्र अध्यासस्य लक्षणं, भेदाः, साधनानि, निरासोपायश्च उपस्थाप्यते।

प्रथमं तावत् अध्यासस्य लक्षणं किमिति जिज्ञासायां चतुःसूत्रीभाष्यादौ अध्यासलक्षणम्–"स्मृतिरूपः परत्र पूर्वदृष्टावभासः"[3] इति। अत्र परत्र पूर्वदृष्टावभास इत्यध्यासलक्षणम्। स्मृतिरूप इति उपलक्षणतया प्रदर्शनमात्रम्। "अवभासनमवभासः, अवभास्यते इति अवभासः"[4] इति व्युत्पत्तिद्वयी अवभासपदस्य कृता विद्यते।

तत्र प्रथमव्युत्पत्या शुक्तिरजतादिविषयकमविद्यावृत्तिरूपं ज्ञानं गृह्यते, द्वितीय-व्युत्पत्या तु शुक्तिरजतादिकमाविद्यकं गृह्यते। तत्र प्रथमो ज्ञानाध्यासः, द्वितीयस्तु

---

1. माण्डूक्यकारिका।
2. तदेव।
3. चतुःसूत्रीभाष्यम्।
4. तत्रैव।

अर्थाध्यासः इति। उक्तलक्षणे परत्र घटकपरपदेन भ्रमस्याधिष्ठानमुच्यते। एतच्चाधिष्ठानं लौकिकसत्यं शुक्तिकादिरूपम्, पारमार्थिकसत्यं साक्षिचैतन्यरूपम्। अत एवोच्यते-"सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपयर्य"[40] इति।

अपरञ्चाध्यासलक्षणं कैश्चिद् विद्वद्भिः कृतम्-

"अधिष्ठानविषमसत्ताकोऽवभास" इति। तदभाववति तत्प्रकारकोऽवभास इति। अर्थाध्यासस्य षड्भेदाः भवन्ति। धर्माध्यासः, धर्मसहितस्य धर्मिणोऽध्यासः, सम्बन्धाध्यासः, सम्बन्धसहितस्य सम्बन्धिनोऽध्यासः, अन्यतराध्यासः, अन्योन्याध्यास इति। प्रकारान्तरेण ज्ञानाध्यासस्य द्वौ भेदौ। स्वरूपाध्यासः, सम्बन्धाध्यास इति। उक्तेषु षट्सु अध्यासेषु प्रथमद्वितीयपञ्चमाः स्वरूपाध्यासेऽन्तर्भवन्ति। तृतीयः संसर्गाध्यासे, चतुर्थषष्ठौ संसर्गाध्यासे तिष्ठतः। अध्यासस्थले अध्यस्तधर्मा अधिष्ठान् धर्मान् आवृण्वन्ति। यथा आत्मनश्चत्वारि विशेषणानि-सत्, चित्, आनन्द, अद्वयेति। एतद्विपरीताश्चत्वारः एव अध्यस्तधर्माः-अनृतत्वम, जडत्वम्, दुःखरूपत्वम्, सद्वयञ्च। एतेऽध्यस्तधर्माः आत्मधर्मान् सत्त्वादीन् आवृण्वन्ति इति। इयमेव चिदचिद्ग्रन्थिरुच्यते।

उपर्युक्तानामध्यासानां भेदाः दृष्टान्ताश्च शास्त्रेषु दृश्यन्ते। तद्यथा-भेदभ्रमः, कर्तृत्वभ्रमः, सङ्गभ्रमः, विकारो ब्रह्मभिन्न इति भ्रमः जगत्सत्यमिति भ्रमः इति पञ्चभ्रमाः।[1]

भेदकर्तृत्व-संसर्ग-विकृति-विंश्वसत्यता।
विभ्रान्तयो निराकार्या दृष्टान्तैः पञ्चभिः क्रमात्॥
बिम्बकप्रतिबिम्बोऽथ लोहितः स्फटिको मणिः।
घटाकाशश्च विज्ञेयो रज्चहिर्हेमकुण्डलम्॥[2]

आचार्यमण्डनमिश्राः स्वकीये विभ्रमविवेकग्रन्थे एवं वदन्ति-

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
परीक्षकाणां विभ्रान्तो विवादात्मा विविच्यते॥[3]

अत्र अनिर्वचनीयख्यातिमादाय विभ्रमपञ्चकं सम्पद्यते।

अथ धर्मिणः सामान्यज्ञानम्, प्रमेयदोषः, प्रमातृदोषः इति दोषत्रयम्, आरोप्यसजातीयवस्तुनः संस्कारः एतत्सर्वं दण्डचक्रादिन्यायेन अध्यासकारणम्।

1. वेदान्तदर्शनम्।
2. वेदान्तदर्शने।
3. विभ्रमविवेकः।

कश्चन तार्किकचक्रवर्ती धर्मिज्ञानमध्यासस्य कारणं न मन्यते, किन्तु धर्मिणा सह इन्द्रियसन्निकर्षः। इदं तु न समीचीनम्। "कुलालजनकोऽपरः"[1] इत्युक्तरीत्या जन्येन ज्ञानेन जनकस्य इन्द्रियार्थसन्निकर्षस्य अन्यथासिद्धत्वात्। उक्ते चक्रवर्तिमते इदमाकारा रजताकारा च मनोवृत्तिरेव भवति। तत्र इदमर्थेन सह चक्षुषः संयोगः सम्बन्धः, रजतेन सह तु ज्ञानलक्षणप्रत्यासत्तिलक्षणः संसर्गः। एतन्मतेऽपि मनोवृत्ति- लक्षणो ज्ञानाध्यासः, अर्थाध्यासस्तु न व्यावहारिकसत्यस्यैव रजतस्य तत्र भानात्। इदञ्च नैयायिकवादानुसारेण। धर्मिज्ञानमध्यासकारणमिति वादिनां मतत्रयम्। तथाहि–

एकस्मिन् मते इदमाकारा वृत्तिरधिष्ठानज्ञानरूपा। तत्रैव रजताकारा अविद्यावृत्तिश्चोत्पद्यते।

द्वितीये मते धर्मिज्ञानरूपा इदमाकारा मनोवृत्तिर्भवति। अनिर्वचनीयं रजतम्। तत्र इदन्तायाः संसर्गोऽनिर्वचनीयः। रजताकारा अविद्यावृत्तिश्चानिर्वचनीया उत्पद्यते।

तृतीयमते धर्मिज्ञानरूपा इदमाकारा मनोवृत्तिरेव भवति। न तु रजताकारा अविद्यावृत्तिः। रजतं तु तत्र अनिर्वचनीयमुत्पद्यते। इदन्ताया रजते संसर्गोऽप्यनिर्वचनीय एव उत्पद्यते। इदञ्च द्वयं साक्षिण्यध्यस्तं साक्षिभाष्यम् इति नास्ति रजताकाराऽविद्यावृत्यपेक्षा। अत्र मते केवलमर्थाध्यास एव भवति न तु ज्ञानाध्यासः।

इदञ्च मतत्रयमपि समीचीनम्। तदुक्तम्–

**यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।**
**सा सेह प्रक्रिया साध्वी विपरीता ततोऽन्यथा॥**[2]

यत्तु कैश्चिदुच्यते-तृतीयमते वृत्तेरभावात्संस्काराभावे स्मृतिर्नोपपद्यते इति तन्न युक्तम्। साक्ष्यभिव्यञ्जकाया इदमाकाराया मनोवृत्तेरेव संस्कारजनकत्वसम्भवात्। तृतीयमते इदम्पदार्थस्य रजते तादात्म्यमनिर्वचनीयमुत्पद्यते इत्यस्यापि स्वीकारात्।

अध्यस्ताधिष्ठानयोः सादृश्यं प्रमेयदोषः। तच्च "इदं रजतम्" इत्यादिस्थले चाकचिक्यादिरूपम्। "सन् घटः" इत्यादौ कल्पिताकल्पितसाधारणं सत्त्वादिरूपं सादृश्यम् "अहं गौरः" इत्यादौ कोशपञ्चके आत्मत्वभ्रमे सापेक्षानपेक्षसाधारणमान्तरत्वं सादृश्यम्।

अन्तःकरणगतः प्रारब्धः कर्मसंस्कारः प्रमातृदोषः अन्तःकरणावच्छिन्नचैतन्यस्य

---

1. न्या0 सि0- कारिका0-22
2. माण्डूक्यकारिका।

प्रमातृत्वात् विशेषधर्मस्य विशिष्टे उपचारः।

प्रमाणदोषस्तावत् रजतादिभ्रमस्थले चक्षुरादिगतः काचकामलादिर्दोषः। अनात्मन्यात्मभ्रमस्थले अन्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य प्रमाणगताविद्यैव दोषः।

वेदान्तदर्शने यत्र तत्र अन्यशास्त्रेष्वपि अध्यासस्य इमान्युदाहरणानि प्रसिद्धानि सन्ति प्रतिबिम्बः, स्वप्नः, माया, गन्धर्वनगरम्, शुक्तिरजतम्, मरुमरीचिकोऽयम्, मनोराज्यमिति।

अथ अध्यासनिरासोपायश्चिन्त्यते-तत्र पूर्वमीमांसा वेदापौरुषेयत्वरक्षणार्थमीश्वर-मपह्नुवाना सृष्टिप्रलयौ न मन्यते। उत्तरमीमांसा तु ब्रह्मणः शक्तिभूतां मायां प्रकृतिपदवाच्यां जगतः परिणाम्युपादानं मन्यते। सांख्ययोगावपि प्रकृतेरेव परिणामं जगन्मन्येते। प्रमाणशास्त्रानुयायिनस्त्वारम्भवादिनः परमाणूनेव द्व्यणुकादिद्वारा जगतः उपादानकारणत्वेन मन्यन्ते। ईश्वरं तु निमित्तकारणमिति।

एवञ्च उत्तरमीमांसामते स्थूलसूक्ष्मप्रपञ्चोपहितं सगुणं ब्रह्म तदनुपहितं तु निर्गुणमिति स्पष्टं प्रतीयते। परमाणवो जगदुपादानकारणमिति नये तु नेदं प्रतीयते। किन्तु जगत्कर्तृत्वेन धृत्यादिना च भगवाननुमीयते। उत्तरमीमांसानये अविद्योपादानकस्य जगतो मृषात्वेन ब्रह्मणि कल्पितत्वेन विचारेण अधिष्ठानसाक्षात्कारे सति अविद्या निवृत्या मुक्तिरिति।

सांख्ययोगनये तु प्रकृतेः सत्यत्वेन जगतोऽपि सत्यत्वात् "तदा द्रष्टुः स्वरूपेऽवस्थानम्" "वृत्तिसारूप्यमितरत्र"[1] इतिसूत्रद्वयोक्तरीत्या चित्तवृत्तिनिरोधरूपेण योगेन प्रकृतितः पुरुषस्य भेदसाक्षात्कारेण कैवल्यमिति कैवल्यभेदः। अत एव आत्मा द्रष्टव्यः, प्रकृतितो विवेक्तव्य इति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः निगदितवन्तः। उत्तरमीमांसानये तु सगुणस्य ब्रह्मणः उपासनया प्राप्तिः निर्गुणस्य तु विचारेण इति विवेकः। सगुणस्य ब्रह्मणः अहंग्रहोपासनायामपि भेदग्रहो न निवर्तते। इदन्तु सर्वेषां मतम् यत् "अज्ञानाद् बन्धः ज्ञानात्तु कैवल्यम्।"

तत्र ज्ञानस्वरूपे बहुविवादः-"षोडशपदार्थानां तत्त्वज्ञानान्मोक्षः"[2] इति नैयायिकवैशेषिकौ। प्रकृतिपुरुषयोर्भेदज्ञानान्मोक्षः"[3] इति सांख्ययोगौ। "जीवब्रह्मणोरभेद-

---

1. योगसूत्रम्-1.3-4
2. न्या0 सू0 1/1/1
3. सां0 द0 सि0।

ज्ञानान्मोक्ष"[1] इति उत्तरमीमांसकाः वदन्ति। यत् किञ्चन् जगति भासते तत्सर्वं ब्रह्माभासैव भासते, वेदादिरूपं शास्त्रञ्च ब्रह्मणो ज्ञापकत्वात् योनिः इति द्वयमपि "शास्त्रयोनित्वात्"[2] इति सूत्रेणोक्तं व्याख्यातञ्च तथैव श्रीशङ्करभगवत्पादैः। ब्रह्मणश्च प्रत्यक्षं तत्त्वमस्यादिमहावाक्येभ्य एव भवति, "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतौ ब्रह्मणः औपनिषदत्वोक्तेः। उपनिषदा गृह्यते औपनिषदः पुरुष इति हि व्युत्पत्तिः। यद्यपि पुराणादिस्मृतिशास्त्राणि उपासनाभेदान् प्रतिपादयन्ति। ब्रह्मस्वरूपं भिन्न-भिन्नं वर्णयन्ति, तथापि निरुपाधिकं विज्ञेयमेकमेव ब्रह्म। मनुष्यो यदा सर्वा अज्ञानभूमिका ज्ञानभूमिकाभिः तावतीभिरेव अतिक्रम्य तुरीयावस्थां प्राप्तो भवतीति तदैव निजं सर्वपरिच्छेदातीतं रूपं लभते।

उपनिषद्रूपं शास्त्रं वेदस्य शिरोभागः। उपनिषदां प्रवृत्तिर्द्विधा भवति। विधिमुखेन, निषेधमुखेन च। तत्र निषेधमुखेन प्रवृत्तिः-अर्थात् आदेशो नेति नेति। विधिमुखेन प्रवृत्तिः-"सत्यं ज्ञानमनन्तं ब्रह्मेति। कश्चिद्भाग्यवान् एव महापुरुषः ब्रह्मज्ञानस्य पराकाष्ठां प्राप्य ब्रह्मनिष्ठो भवति।

वेदे त्रीणि काण्डानि सन्ति-कर्मकाण्डम्, उपासनाकाण्डम्, ज्ञानकाण्डञ्चेति। वेदस्य सम्यक्पर्यालोचनया विज्ञायते यदसौ प्रवृत्तिमार्गनिवृत्तिमार्गयोः प्रविभक्तः। तत्र निवृत्तिविषया अत्यल्पा उपलभ्यन्ते, प्रवृत्तिमार्गविषयाः कर्मसाध्येन बाहुल्येन उपलभ्यन्ते।

इह घोरे कलियुगे समस्तोपायसारभूता भगवद्भक्तिरेव अध्यासस्य अशेषतो निरासे सामर्थ्यदधाना चकास्तीति।

**अध्याससमालोचना-**

जडप्रकाशात्मकं सर्वं जगत्। जडप्रकाशयोश्च स्वाभाविकोऽनादिपरम्पराध्यासः। अयमेव शारीरकभाष्यारम्भे श्रीशङ्कराचार्यभगवता विषयविषयिणोरध्यासः इति वर्णितः। अत एव कीदृशं ज्ञानम् को ज्ञातः? इति प्रश्नयोः समानमेव "घटः" इत्युत्तरम्। प्रथमः प्रश्नः ज्ञानाकारस्य द्वितीयश्च विषयाकारस्य। परं विविच्य दर्शयितुमशक्यत्वात् तदुत्तरमेकाकारकमेव। विषयविषयिणोरभेदमेवाभिमन्यमाना योगाचार्याः सर्वमतसिद्धत्वेन सहोपलम्भनियमं हेतुं व्याचख्युः। सहोपलम्भस्वीकारेऽपि पृथग्विविच्य दर्शयितुमशक्यत्वमेव कारणम्।

---

1. वे० द०।
2. ब्र० सू० 1/1/3

विज्ञानवादिमते विज्ञानवैचित्र्यसम्पादक आकारो विज्ञानस्यैवेति न तु विज्ञानातिरिक्तो विषयः, तेन दृढोऽस्य विषयविषयितादात्म्याध्यासः। यद्यपि बौद्धमते सांख्यानां बुद्धिरिव किमपि चित्तत्वमस्ति तत्रैव वासनात्मना विषया वर्तन्ते विज्ञानात्मना च प्रकाशन्त इति प्रतिभाति। तथापि विज्ञानविशेषादिकमेव चित्तादिशब्देन व्यपदिश्यते, स्वप्रकाशं विज्ञानमेव स्वात्मविषयप्रकाशस्वरूपमित्येव प्रसिद्धः सिद्धान्तः। उत्तरज्ञानं प्रतिकारणीभूतं पूर्वज्ञानमेव मनः इति केचन अभिधर्मानुयायिनो वदन्ति।

न्यायनये शुक्तौ अन्यत्र प्रसिद्धस्य रजतस्य यथाऽध्यासो न तथा विज्ञानवादे किन्तु स्व–स्व कारणाधीनं पूर्वविज्ञानादिकमेव कारणं तत्तदाकाराकारितं तदुत्तरविज्ञानं जनयति न तु शुक्तिमिव विज्ञानं स्थिरम्, यत्र विषयाकारस्याध्यासः स्यात्। आरोप्यमाणस्य रजतादेः सत्ता यथा न्यायनये अपेक्षिता न तथा विज्ञानवादे वेदान्ते च, उभयमते वासनाया एवापेक्षिततत्वात्। वेदान्ते शुद्धबुद्धमुक्तस्वभावं नित्यविज्ञानमधिष्ठानम्, विज्ञानवादे च तादृशं क्षणिकं विज्ञानमिति विशेषः।

ननु परत्र परस्यावभासोऽध्यायः, विज्ञानतदाकारयोः क्वचिदपि पृथगनुपलम्भात्तयोः परत्वस्यासंभवात् कथमध्यासः यथा विज्ञानं सत्तथा तदभिन्नस्तदाकारोऽपि सन्, उभयोः सत्वादिति चेत् वेदान्तदृष्ट्या अध्यासस्य जागरूकत्वात्, असङ्गे निष्कलंके प्रकाशस्वभावेऽपि विज्ञाने कस्यचित् वस्तुन आकारस्यासंभवात्।

अथवा निरुपप्लवा चित्संततिर्मोक्ष इति विज्ञानसद्वादिनो वदेयुः संततेर्विराम इति तु शून्यवादस्यैव शोभते। न च स्वभावभूतस्य सत आकारस्य प्रच्युतिः सम्भवति येन निरुपप्लवा उत्पद्येत, साकाराणि विज्ञानानि विरतानि मुक्तौ प्रवहतां विज्ञानानां नाकारः स्वभाव इति चेदायातं वेदान्तविज्ञानस्येव बौद्धविज्ञानस्य निराकारस्वभावतया कदाचित्क आकारावभासस्त्वध्यासमाश्रयते।

वेदान्ते समेषामधिष्ठानतया उपादानं विज्ञानमेव, उत्पद्यमान मध्यस्तमेवोत्पद्यते, अन्यत्र तस्य सत्त्वानिरूपणात्। अधिष्ठानस्य आवृततयावृत्या आवरणक्षये प्रकाशते, विज्ञानवादे विज्ञानात्मक एव आकारो विज्ञानमेव प्रकाशः, विज्ञानादन्यत्र आकारस्य सत्ता नास्ति। अतः आकारः उत्पद्यमान एव प्रकाशते। वेदान्तदृष्टिसृष्टिवादे तु सममेव, एकद्विक्षण वैलक्षण्यस्य अनुभवविहीनस्य अकिञ्चित्करत्वात्।

**विदेशीयदर्शनेऽध्यासः–**

विदेशीयवर्कलेजार्जस्य दर्शनमपि विज्ञानवादमनुसरति। ज्ञातैकसत्वं समेषामङ्गीकरोति, अज्ञेयस्य वस्तुत्वमेव न मनुते। एतच्च प्रकाशमानत्वं सत्वं

प्रकाशस्वरूपविज्ञानात्मत्व एव वस्तुनः स्यात्। अत एव सर्वं मानसं मन्यन्ते, यथा बौद्धं तथा मानसमिति व्यवहारः। बौद्धं विज्ञानात्मकं मानसमपि विज्ञानात्मकं प्राचां विदेशीयानामध्यासं मनोमात्रं गतिः। अष्टादशशताब्द्यामनन्तरं तु भारतीयदर्शनसम्पर्क-वशात् कतिपये नित्यात्मन्यपि विश्वासभाजोऽभिनवाः सञ्जाताः। बाह्यस्याङ्गीकारे-प्यान्तरेण प्रकाशेन बाह्यस्य सम्बन्धो न सम्भवतीति मानसमेव वस्त्वङ्गीकर्त्तव्यम्। एषा युक्तिस्तु तस्य विज्ञानवादे अद्वैतदर्शने च प्रधानतामाश्रयते। भाषायाः उपपादन-शैल्याश्च भेदेऽपि दृष्टिरेकैव, विज्ञानमात्रस्य प्रकाशत्वात् विज्ञानात्मतां विनाकारो न प्रकाशतेति विज्ञानात्मैव वस्त्वाकार इति विज्ञानवादः।

यद्यपि भारतीयाः क्षणिकविज्ञानात्मत्वे दृष्टिसृष्टिवादे च प्रकारान्तरेण प्रत्यभिज्ञां सम्पादयन्ति, जार्जस्तु तदर्थमीश्वरमानसं विभुः, तेन सह जीवमानसानां घटाकाशमहाकाशवत् सम्बन्धं कल्पयति तथापि विचारेण ईश्वरमानसस्य अन्यः अपि उपयोगः इति तेनैव प्रत्यभिज्ञायाः अपि समर्थने न न्यूनता। तथा च विज्ञानवादवदेव अत्रापि अध्यासस्य गतिः।

जार्मनेयलीब्नीजदर्शनन्तु-सर्वं चेतनम्, परमाणवः अपि चेतनाः येभ्यः स्थूल जगतः सृष्टिः, पृथिवी पाषाणादयो मूकचेतनाः, मूकचेतनेभ्योऽपि वनस्पत्यादिक्रमेण जीवचैतन्यं वाचालं स्थूलं जायते। परमोत्कृष्टचैतन्यं तु ईश्वरचैतन्यमिति वर्णयति। चैतन्यं विज्ञानात्मैव मूकवाचालभेदेऽपि ग्राह्यग्राहकयोः साजात्यं स्पष्टम्। साजात्ये तादात्म्यम्, प्रकाशाच्चैतन्याऽतिरिक्तं नास्तीति प्रतिभाति, तथा च प्रकाशप्रकाश्ययोः ऐक्यम् अध्यासमूलकमेव।

**सांख्यमतेऽध्यासः**

सांख्यमतेऽपि वेदान्तिमतमिव विषयविषयिणोरध्यासः वर्णयितुं शक्यते। ब्रह्म एव सांख्यपुरुषः असङ्गः, न स्वतः विषयाणां सम्बन्धः सम्भवति। सङ्गस्य परिणामस्य वा आपत्तेः। सम्बन्धमन्तरा विषयप्रकाशो न सम्भवेत्। वस्तुतः सम्बन्धः अनुपपद्यमानः स्वस्य आध्यासिकतामादायैव विश्राम्यति। बुद्धिद्वारा सम्बन्ध इति चेत् वेदान्तेऽपि मायाद्वारैव अध्यासः, मायाऽधिष्ठाने ब्रह्मणि वस्तूनि उत्पद्यन्ते। पुरुषस्य तु न वस्तूत्पादे उपयोगः इति विशेषोऽपि न तथा प्रकृतेर्बुद्धेर्वा परिणामे पुरुषसन्निधानस्य चैतन्यावेशस्य वापेक्षितत्वात्।

तत्र वृत्यात्मिका बुद्धिर्विषयाकारा जायते तत्र पुरुषस्याभासोऽपि तदाकार एव, अत एव तदानीं पुरुषबुद्ध्योः विवेको न भवति। वृत्तिसारूप्यमितरत्रेति

योगसूत्रमपि। यत्र प्रकाशप्रकाश्ययोः सारूप्यं तत्र प्रकाशप्रकाश्ययोः तादात्म्यं तदपि न वस्तुत इत्याध्यासिकम्, न च असङ्गस्य अपरिणामिनः पुरुषस्य इतरसारूप्यं वास्तवम्। प्रतिभासते च तथेत्यध्यासस्योदाहरणम्। एवं प्रायः प्रत्ययवादिषु कतिपयदर्शनेष्वा- ध्यासिकतादात्म्यस्योदाहरणमस्ति।

अन्ये च प्रायो दार्शनिकाः सम्बन्धाध्यासवादिना ज्ञानेन प्रकाशेन सह ज्ञेयस्य विषयस्य तादात्म्यं नाङ्गीकुर्वन्ति, किन्तु सम्बन्धविशेषम्, कश्चिदवान्तरप्रक्रिया-विभेदोऽपि वर्तते। आन्तरज्ञानेन सह बाह्यस्य संयोगादिप्रसिद्धसम्बन्धासंभवात् सम्बन्धविशेषं कल्पयन्ति। वेदान्तिनस्तु तादृशस्य सम्बन्धस्य असिद्धेः सम्बन्धाध्यासं वदन्ति, सम्बन्धाध्यासे न वेदान्तिनां काठिन्यम्। यथा वासना तथाध्यासः। विषयविषयिणोर्भेदवासनावतां सम्बन्धस्यैव अध्यासात्। अतएव अहमिदं ममेदमिति द्विविधाध्यासवादिनां मतम्।

विदेशीयानुभववादिदर्शनेषु प्रायः सम्बन्धाध्यासः एव आयास्यति। परं न तद्भारतीयदर्शनमिव स्फोरयितुं प्रभवति। भारतीय प्रतिपादनशैल्या तेषां विश्लेषणा-संभवात्। तत्रापि आङ्गलभाषानभिज्ञस्य मम हिन्दी द्वारा दूरादेव स्पृशतः यथा लॉकदर्शने (इङ्गलैण्ड) श्रूयते-मनुष्येषु सहजं ज्ञानं नास्ति बाह्यवस्तूनामनुभवेन मनसि ज्ञानं जायते। अस्यैव नाम अनुभववादः। सर्वं ज्ञानं शिक्षाधीनम्, संस्काररूपेण मनसि ज्ञानमस्ति, समेषां ज्ञानानां मूलं प्रत्यक्षमित्यादि सहजज्ञानस्य खण्डनात् अनित्यज्ञानस्य वर्णनात् बाह्यस्य अङ्गीकाराच्च वस्तुनः ज्ञानात्मत्वं नास्ति। ज्ञानस्य विषयेण सह कश्चित् सम्बन्ध एव न तादात्म्यम्, किन्तु सम्बन्धभेदेऽपि आकाराकारिभावो विषयविषयिभावो वेति स्फुटं प्रतिपादनं न कर्तुं शक्यते। यदि बौद्धदर्शनस्य प्रभावः तदा आकाराकारिभावः, अन्येषाञ्चेद् विषयविषयिभावः।

आकाराकारिभावो यथा—ज्ञानाकारवादिनो बौद्धाः तत्र विज्ञानवादिमते ज्ञानाकारो न बाह्यविषयाधीनः, बाह्यस्य अनङ्गीकारात्, किन्तु आन्तरकारणाधीनः। बाह्यसद्वादिनां बौद्धानान्तु विज्ञानेष्वाकारो बाह्यवस्त्वधीनः। इदं विज्ञानं घटविज्ञानमित्यत्र विज्ञानस्य घटाकारत्वमेव तन्त्रम्। स्वाकाराकारित्वमेव विज्ञानविषययोः सम्बन्धः। विज्ञाने जाते बाह्यवस्तुवशादाकाराः समुत्पद्यन्त इति प्रक्रिया तु क्षणिकविज्ञानेन क्षमते किन्तु बाह्याभ्यन्तरकारणसमवाये सकृदेव तदाकारं विज्ञानं जायते। तत्र यथा विज्ञाने विषयः कारणं तथा तदाकारेऽपि। तथा च ज्ञानविषयाकारयोर्जन्यजनकभावः। परोक्षेऽपि विषयाणां स्वानुभवजन्यसंस्कारद्वारा कारणत्वम्, परोक्षेऽपि सम्बन्धस्यानुभवा-देतादृशपरम्परासम्बन्धस्य कल्पनम्। एतादृशं कल्पनमन्येषां मतेऽपि विद्यते। अत्र

घटे तद्विज्ञाने च एक एव आकारो भिन्नो वा? एकस्याकारस्य समकालमेव भिन्नद्वयवृत्तित्वासंभवात्। नाद्यः, भिन्नश्चेद् घटविज्ञानस्य पटविज्ञानत्वापत्तिः सजातीयता नियामकधर्मस्य अनिर्वचनाच्च। आन्तरबाह्याकारयोः कथं कीदृशः सम्बन्धः इत्यवशिष्यत एव। तस्मात् विज्ञानविषययोः अध्यास एव।

**न्यायनयेऽध्यासः—**

अतः परं नैयायिकादीनां विषयविषयिभावादिसम्बन्धाध्यासः। तत्र प्रकारभेदः कश्चिदवश्यमवधातव्यः। बौद्धवेदान्तसांख्यानां नये चैतन्यं चेतनश्चैक एव पदार्थः। तथा सति प्रकाशकप्रकाशयोरभेदः इन्द्रियबुद्धि तद्वृत्यादीनां वस्तुतः प्रकाशत्वाभावात्। प्रकाशश्चैतन्यं तत्र क्रियाप्रकाशान्तरं नास्ति, येन चैतन्यस्य वस्तुतः प्रकाशकत्वं स्यात्, प्रकाशकत्वव्यवहारस्तु क्वाचित्को भाक्तः। न्यायादिनये तु आत्मा चेतनः प्रकाशकः प्रकाशश्चैतन्यं ज्ञानम्, ज्ञानेन सह विषयस्य विषयविषयिभावः सम्बन्धः। यथा-पाचकः शयानोऽपि पाचकः तथा ज्ञानाभावसमयेऽपि आत्मा प्रकाशकः चेतनश्च। येषां मते नित्यं ज्ञानं तेषां मते ज्ञानं निर्विषयमपि। बौद्धानां विज्ञानमपि कदाचिन्निर्विषयं भवति, परं नैयायिकादीनामनित्यं ज्ञानं न कदापि निर्विषयम्, विषयावभासोहि ज्ञानम्, स च सांख्यवेदान्तमतेप्यनित्य इति साधर्म्यमवधेयम्।

प्रकृते तु आन्तरस्य ज्ञानस्य कथं बाह्येन विषयेण सम्बन्ध इति सम्बन्धावभावो मिथ्या अतः सम्बन्धाध्यासः। विषयत्वादीनां सम्बन्धत्वं नास्तीति खण्डनं तु वेदान्तग्रन्थेषु वर्तत एव।

गुरुमतेऽप्येष एव मार्गः। अतीन्द्रियं ज्ञानं स्वांशेऽतीन्द्रियम्, विषयांशे तु प्रकाश एव। ज्ञाततादिसमुत्पादेन नात्र विशेषः, ज्ञानस्य विषयेण सह सम्बन्धे सत्येव तदुत्पादव्यवस्था, सम्बन्धस्याध्यासिकत्वमात्रेण उदाहरणम्।

रामानुजदर्शनेऽपि विषयविषयिभावः, परमाभासः प्रक्रियारीत्या अन्यस्य सम्बन्धस्य आयाति। ते हि ज्ञानस्य गुणत्वं द्रव्यत्वञ्चाङ्गीकुर्वन्ति। दूरस्थस्य विषयस्य प्रभाज्ञानमपि स्वीकरोति। प्रभाऽपि द्रव्यं स्यात्। सूर्यचन्द्रनेत्रादीनां प्रभा एव ज्ञानप्रभया सह संयोगादेरपि संभवः तथापि तेन न निर्वाहः। प्रत्यक्षस्थले ज्ञानप्रभया निर्वाहेऽपि परोक्षस्थले संस्कारद्वारैव विषयाणामान्तरज्ञानेन सम्बन्धो वर्णनीयः स्यात्। संस्कारेण सह तु विषयविषययिभाव एव।

अत्रापि ज्ञानं स्वसम्बद्धविषयेषु प्रभां सञ्चारयति, असम्बद्धेष्वपि वा? द्वितीयेऽतिप्रसङ्गः। प्रथमे कः सम्बन्धः? इन्द्रियद्वारक इति चेत् अन्येन्द्रियसम्बन्धे

सति अतिप्रसङ्गः इन्द्रिये स्वीयत्वं दीयते चेत्, किं नाम स्वीयत्वम्? अदृष्टद्वारकत्वे अन्योन्याश्रयः तथा च इन्द्रिये शरीरे च अध्यासनिमित्तं स्वीयत्वमुदाहरणम्। किञ्च परोक्षस्थले विषयाणामान्तरसम्बन्धः संस्काराद्वारा वर्णनीयः, संस्कारविषययोः सम्बन्धो विषयानुभवसम्बन्धाध्यासपूर्वक एव इति तदपि अध्यासस्योदाहरणम्।

## ब्रह्मणः कथं लक्ष्यत्वमिति वेदान्तदिशा समर्थनम्

वेदान्तदर्शनेषु ब्रह्मसूत्राणां व्याख्या विशेषमूलकं बहूनि दर्शनानि सन्ति। तेषु दर्शनेषु मध्ये पूर्णप्रज्ञदर्शनमप्येकम्। तथाहि-स आत्मा तत्वमसि श्वेतकेतो" इत्यादि वेदान्तवाक्यजातस्य भङ्ग्यन्तरेणार्थान्तरपरत्वमुपपाद्य ब्रह्ममीमांसा विवरणव्याजेन आनन्दतीर्थः प्रस्थानान्तरं व्यवस्थापितम्। तन्मते च-द्विविधं तत्त्वं स्वतन्त्रास्वतन्त्रभेदात्। तदुक्तं तत्त्वविवेके-स्वातन्त्र्यमस्वातन्त्र्यञ्च द्विविधं तत्त्वमिष्यते। स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्गुणः।[1] इति। अस्वतन्त्रञ्च तदितरचराचरम्। जीवेश्वरयोश्च भेद एव नाभेदः। तत्त्वमस्यादिश्रुतयस्तु नैकत्वप्रतिपादनपरा किन्तु तयोर्बुद्धिसारूप्यम्, शरीररूपैकस्थाननिवेशित्वं हृदयादिरूपाभिव्यक्तिस्थानैक्यमपेक्ष्य वा प्रवृत्ताः। तथा च परमा श्रुतिः–

जीवस्य परमैक्यञ्च बुद्धिसारूप्यमेव वा।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य वा॥
न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः।
स्वातन्त्र्यपूर्णताऽल्पत्वपारतन्त्र्ये विरूपता॥ इति।

किञ्च एकमेवाद्वितीयं ब्रह्मेत्यादयः श्रुतयस्तु अस्मिन् ग्रामेऽयमेक एवाद्वितीयः पुरुष इतिवत्सजातीयभेदं वारयन्ति। किञ्च प्रत्यक्षादिप्रमाणसिद्धो भेद इति तद्बलेन तत्त्वमस्यादिश्रुतेः "आदित्यो यूपः" इत्यादिवदन्यार्थपरत्वमेव युक्तम्। तथा हि सर्वविधप्रत्यक्षसिद्धो भेद इति नापलपयितुं शक्यते। अनुमानेनाऽपि भेदोऽवसीयते। परमेश्वरो जीवाद्भिन्नः, तं प्रति सेव्यत्वात्, यो यं प्रति सेव्यः स तस्माद् भिन्नः, यथा भृत्याद् राजा इति। नहि "सुखं मे स्याद् दुःखं मे न मनागपि" इति पुरुषार्थमर्थयमानाः पुरुषाः स्वपतिपदं कामयमानाः सत्कारभाजो भवेयुः प्रत्युत सर्वानर्थभाजनं भवन्ति। तदाह–

घातयन्ति हि राजानो राजाऽह मितिवादिनः।
ददत्यखिलमिष्टञ्च स्वगुणोत्कर्षवादिनाम्।[2] इति

1. तत्त्वविवेकः।
2. सुभा० र० भाण्डा०

एवं ज्ञेयत्वादिनाऽपि भेदोऽनुमातव्यः। तथा श्रुत्यापि भेदोऽवगन्तव्यः। तथा च श्रुतिः-"सत्यमेतमनुविश्वे" इत्यादिकमुपक्रम्य" सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा मयि वारुण्यो मयिवारुण्यः" इति। "इदं ज्ञानमुपाश्रित्यं मम साधर्म्यमागताः"[1] इति स्मृतिः। "जगद्व्यापारवर्जम्"[2] इत्यादिसूत्राणि च भेदप्रख्यापकाणि। "ब्रह्मविद् ब्रह्मैव भवति" इति श्रुतिस्तु-"संपूज्य ब्राह्मणं भक्त्या शुद्रोऽपि ब्राह्मणो भवेत्" इतिवत्।

**प्रपञ्चो यदि वर्तेत निवर्तेत न संशयः।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः।।**[3]

इति वचनन्तु यद्ययं प्रपञ्चो वर्तेत उत्पद्येत तर्हि निवर्तेत न संशयः। तस्मादनादिरेवायं प्रकृष्टः पञ्चविधो भेदप्रपञ्चः। इदं द्वैतं मायामात्रम्। मायेति भगवदिच्छा उच्यते प्रज्ञप्तिश्च। अद्वैतं समाभ्यधिकशून्यं विष्णुतत्त्वमेव परमार्थतः, विष्णुसमाभ्यधिकल्पनारूपा द्वैतकल्पना तु अपरमार्था इति। तथा च परमा श्रुतिः-

**मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः।**
**सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात्।।**

द्वैतं न विद्यते इति तस्मादज्ञानिनां मतम्। एकविज्ञानेन सर्वविज्ञानञ्च विष्णोः प्रधानत्वकारणत्वादिना युज्यते न तु सर्वमिथ्यात्वेन। यथा प्रधानपुरुषाणां ज्ञानाज्ञानाभ्यां ग्रामो ज्ञातोऽज्ञात इत्येवमादिव्यपदेशो दृष्टः। यथा कारणे पितरि ज्ञाते जानात्यस्य पुत्रम्, एवं मृत्पिण्डेन ज्ञातेन सर्वं मृण्मयं जानाति। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेरप्ययमाशयः। यस्य नाम्नो वाचारम्भणं बहिः सदपि वाचा बुद्धौ प्रकल्पिताकारं मृदादिकं विकारस्तदविकृतं नित्यं नामधेयं मृत्तिकेत्यादिकमित्येतद् वचनं सत्यमिति। "अथातो ब्रह्मजिज्ञासा"[4] इति सूत्रार्थस्तु-अथशब्दो मङ्गलार्थः, ब्रह्मजिज्ञासा मङ्गलमिति। यतो नारायणप्रसादमन्तरेण न मोक्षो लभ्यते, प्रसादश्च न ज्ञानमन्तरेण, अतो ब्रह्मजिज्ञासा कर्तव्येति। जिज्ञास्यब्रह्मणो लक्षणमुक्तम्-जन्माद्यस्य यत[5] इति। सृष्टिस्थित्यादि यतो भवति तद् ब्रह्मेति

---

1. श्रीमद्भगवद्गीता 14/2
2. वेदा0 सू0-4.4.17
3. गौडपदकारिका।
4. वेदा0 सू0 1/1/1
5. तदेव 1/1/2

वाक्यार्थः। तत्र प्रमाणमप्युक्तम्-"शास्त्रयोनित्वात्"[1] इति। शास्त्रं योनिर्ज्ञापकं यस्येति बहुव्रीहिः। शास्त्रस्य तत्र प्रामाण्यमुपपादितम्-तत्तु समन्वयात् इति।[2] शास्त्रस्वरूपन्तु स्कान्दे उक्तम्-ऋग्यजुः सामाथर्वञ्च भारतं पाञ्चरात्रकम्। मूलरामायणञ्चैव शास्त्रमित्यभिधीयते।[3] यश्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्त्तितम्।

तत्र भगवतः स्वरूपं विग्रहश्च विज्ञानानन्दः। विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानात्, रसो वै स इत्यादिश्रवणात्। तच्च भगवत्स्वरूपमैश्वर्यात्मकं शक्त्यात्मकञ्च। मायाख्यया परया शक्त्या च बुद्धिमनोऽङ्गप्रत्यङ्गरहितोऽपि तद्वानिव लक्ष्यते। ज्ञानानन्दविग्रहत्वन्तु तस्य श्रुतिमात्रेण गम्यम्, न तु तर्केण, अचिन्त्यालौकिक-वस्तुत्वात्। तदुक्तं भगवता सूत्रकृता-अरूपवदेव हि तत्प्रधानत्वात्[4] इत्यत्राधिकरणे गुणाश्च भगवतः सत्यकामत्वसत्यसंकल्पत्वादयो ज्ञानानन्दादयश्चानन्ताः, तेषाञ्च भगवतोऽभिन्नानामपि जलकल्लोलवद् भेदव्यपदेशः। तदुक्तं सूत्रकृता- उभयव्यपदेशा-त्त्वहिकुण्डलवत्"।[5] तस्मिंश्च भगवति स्वगतसजातीयभेदौ न स्तः, विजातीयभेदस्त्वस्त्येव, द्वा सुपर्णा इत्यादिश्रुत्या द्वाविमौ पुरुषौ[6] इत्यादिस्मृत्या च भेदस्य सिद्धत्वात्। यद्यपि ज्ञानं कर्म भक्तिश्चेति त्रयं निःश्रेयसोपायस्तथापि ज्ञानभक्त्योरेव समुच्चितयोः साक्षान्निःश्रेयसहेतुत्वम्, कर्मणस्तु चित्तशुद्धिद्वारा तद्धेतुत्वम्। आह्लादसंविदोरभिन्नयोः सारो रतिप्रेमाख्या भक्तिरिति च तस्याः लक्षणम्। एषा खलु भक्तिरहैतुक्येव मुक्तिं साधयति नान्यथा। अहैतुकी निष्कामा।

ऐश्वर्यमाधुर्यभेदेन च भगवतो रूपं द्विविधमिति तज्ज्ञानमपि द्विविधम्-तत्र श्रीयशोदाया ऐश्वर्यज्ञानम्-तद्यथा-

**किं स्वप्न एतदुत देवमाया किं वा मदीयो बतबुद्धिमोहः।**
**अथो अमुष्यैव मयार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः।**[7] इति

मृद्भक्षणावसरे मुखव्यादाने। श्रीवसुदेवस्य वा-युवां न नः सुतौ साक्षात्प्रधान-पुरुषेश्वरौ इति। अर्जुनस्य-

---

1. तदेव 1/1/3
2. तदेव 1/1/4
3. स्कन्दपुराणम्।
4. ब्र0 सू0 3/2/14
5. वेदा0 सू0 3/2/27
6. श्रीमद्भगवद्गीता 15/16
7. श्रीमद्भागवतमहापुराणम् 10/8/40

**सखेति मत्वा प्रसभं यदुक्तमिति।**[1]

माधुर्यज्ञानन्तु श्रीराधायाः, तद्यथा-भागवते दशमे भ्रमरमुद्दिश्यश्रीराधावाक्यम्-
**मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृतविरूपां स्त्रीजितः कामयानाम्।**
**बलिमपिबलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः।**[2] इति।

सर्वासाञ्च व्रजगोपिकानाम्-धन्या अहो अमी आल्यो गोविन्दाङ्घ्रयब्जरेणवः। यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्नाऽघनुत्तये। एतेषां भगवति गुणत्वादेव भगवान् निर्दोषपूर्णगुणः स्मर्यते। त एते मौग्ध्यादयो भगवति स्वरूपशक्तिसारभूतलीलानन्दात्मका एव स्वरूपानतिरेकिनखकुन्तलादिवन्मन्तव्याः। तदेवमैश्वर्यमाधुर्यविषयत्वेन भगवतो ज्ञानं द्विविधम्। तद्द्वारिका भक्तिरपि द्विविधा। तत्राद्या विधिभक्तिः।

अत्र विधिर्भगवन्माहात्म्यप्रतिपादकं शास्त्रमुच्यते। तया सिद्धाः सन्निष्ठा दृप्ताश्चाऽर्चिरादिमार्गेण परं पदं लभन्ते। ये तु आर्ता हरिं विना क्षणमात्रमपि स्थातुमशक्ता अत एव तदतिकृपार्द्रास्ते खलु भगवतैव ताक्ष्र्यवाहनेन नीतास्तद्धाम विशन्ति इति। द्वितीया तु रुचिभक्तिः। तया सिद्धास्तु स्वयं भगवतैव तद्विशन्ति। यत एते तस्यातिप्रेष्ठः। तदेवं विविधज्ञानभक्तिगोचरः कृष्णाभिधानः पुरुषोत्तमः कृत्स्नशक्ति व्यञ्जी स्वयं भगवान् उच्यते। अकृत्स्नतद्व्यञ्जी द्व्येकतद्व्यञ्जी च विलासोंऽशः कला चेति एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्, इति पुराणवचनात्। गौतमीये तन्त्रे च-श्रीकृष्णस्य भगवतस्तच्छक्तिभूतायाः श्रीराधायाश्च तत्त्वत्रयरूपत्वं कार्यत्वकारणत्वतदुभयपरत्वरूपैरुक्तं भगवता स्वयं श्रीबलदेवं प्रति-

**सत्वं तत्वं परत्वं च तत्वत्रयमहं किल।**
**त्रितत्वरूपिणी सापि राधिका मम वल्लभा।**
**प्रकृतेः पर एवाहं सापि मच्छक्तिरूपिणी।। इति।**

भगवतस्तु वैकुण्ठाख्यं धाम नित्यम्, अप्राकृतत्वात्। तदुक्तं पाद्मे-वैकुण्ठभुवने नित्ये निवसन्ति महोज्वला[3] इति। सूत्रकृता श्रीव्यासेनापि "अन्तराभूतग्रामवत् स्वात्मनः"[4] इत्यत्र वैकुण्ठाख्यं धाम ब्रह्मात्मकत्वेन वर्णितम्-तदुपरि द्वारावती पुरी तदुपरि मधुपुरी तदुपरि गोकुलमित्येवं भगवद्धामस्थितिक्रमव्यवस्था। भगवतो लीला तु द्विविधा-स्वरूपेण चिच्छक्त्या च कृता लीला सनातनी। तेन

---

1. श्रीमद्भगवद्गीता 11/41
2. श्रीमद्भागवतमहापुराणम् 10/47/17
3. पद्मपुराणम्।
4. वेदान्तसूत्रम्-3.3.35

प्रकृतिकालाभ्याञ्च कृता तु लीला कादाचित्की। सा च सर्गादौ दैत्यवधादिरूपैव स्यात्। तदेवमैश्वर्यमाधुर्यौदार्यादिगुणरत्नाकरस्य नित्यधामादेः पुरुषोत्तमस्य पूर्णाविर्भावे स्वयं भगवच्छब्दोदितस्यापूर्णाविर्भावेतु विलासांशादिशब्दबोधस्य तस्यैश्वर्यमाधुर्य्यविषय-तया द्विविधेन ज्ञानेन जायमाना विधिप्रवृत्ता रुचिप्रवृत्ता चेति द्वेधा भक्तिः साधनरूपा साध्यरूपा च। सैवात्यन्तिकयोः सुखदुःखपरिहारयोः सिद्धौ हेतुः। तदिच्छयैव तस्यां तस्यां ते ते जीवाः प्रवर्तन्ते, तेषूत्तरे श्रेष्ठा इति दर्शितं भगवता सूत्रकृता-"छन्दत उभयाविरोधात्, गतेरर्थवत्वमुभयथाऽन्यथा हि विरोधः"[1] इत्यादिसूत्रेषु। सुबालोपनिषदि च तमः शब्दितसूक्ष्मशक्तिकात्पुरुषाद ब्रह्माण्डं जातम्, तस्मिन् सहस्रशीर्षाख्यपुरुषवपुषा स एवाविर्भूतः, तस्माद् ब्रह्मरुद्रादिस्रष्टिरभूदिति श्रूयते। तथा च परस्य भगवतः परमकारणत्वं सर्वान्तर्यामित्वं च। तस्माद् ब्रह्मरुद्रयोरुत्पत्तिः रुद्राद् ब्रह्मणो भीतिः, रुद्रस्यानपहतपाप्मत्वञ्च अवगम्यते।[2] "अनपहतपाप्मा वा अहमस्मि"[3] इति सृष्टिप्रकरणे शतपथे श्रवणात्। न चैवं विष्णोः श्रूयते। तस्मात्सर्वेश्वरो विष्णुश्चौरेषु मिलितो राजेव जगत्कार्याय देवेषु प्रविष्टः, तस्य स्वेच्छयाऽभिव्यक्तिर्जन्मेत्यभिधीयते। तच्च दिव्यमिति ज्ञानाद् नृणां जन्मनिवृत्तिरिति श्रीभगवताऽभिहितम्-जन्म कर्म च मे दिव्यमित्यादि। तस्मात् त्रिमूर्तिमध्येऽवतीर्णो विष्णुः साक्षात्सर्वेश्वर इति सिद्धम्। किञ्चाप्राकृतानन्तगुणरत्नाकरो हरिः साक्षात्परम्परया वा आपरोक्ष्येण पारोक्ष्येण वा सर्ववेदवाच्यः। यानि तु निर्गुणब्रह्मप्रतिपादकवाक्यानि तानि हरौ प्राकृतगुणनिषेधपराणि। किञ्च स वेदः कृष्णादिशब्दैः सर्वस्याश्रयभूतं शुद्धं विभुचैतन्यं प्रतिपादयति। जीवप्रकृतिकालादिशब्दैस्तु चिज्जडात्मकमाश्रितमिति। "यतो वाचो निवर्तन्ते, यद्वाचाऽनभ्युदितम्" इत्यादिवचनानि तु भगवतः साकल्येन वाच्यत्वं निषेधन्ति, न तु सर्वथैवावाच्यत्वं वदन्ति, "सर्वे वेदा यत्पदमामनन्ति" इत्यादिश्रुतिविरोधात्। साकल्येनावाच्यत्वञ्चानन्तगुणत्वात्। तथा चायं गौडीयवेदान्तदर्शनकृतान्तसंग्रहः- ज्ञानस्वरूपो ज्ञाताऽहमर्थश्चात्मा कर्तृत्वादिमान्। स चेशो जीवश्चेति द्विविधः। तत्रेशो विभुः स्वद्वारा जगत्कर्ता, स्वायत्तवृत्तिकप्रकृतिद्वारा तु तदुपादानञ्चेति "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादिकात् सूत्रपञ्चकात् तद्भाष्यपञ्चकाच्चावसीयते। प्रकृतिजीवरूपात्प्रपञ्चात् तदाश्रयस्येशस्य भेदस्त्वानन्दमयाद्यधिकरणेभ्यः सिद्धः। जगज्जन्मादिहेतुत्वञ्च ब्रह्मणः स्वरूपलक्षणम्। तच्च दर्शितम्-"जन्माद्यस्य यतः" इति सूत्रेण। जगच्च परमार्थतः सत्यम्। जीवस्त्वणुः। बालाग्रशतभागस्य शतधा

---

1. तदेव-3.3.28-29
2. गोविन्दभाष्यम्।
3. शतपथब्राह्मणे।

कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते इत्यादिश्रुतिभ्यः। परमार्थतो बहुत्वञ्च जीवस्य। **ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्।**[1] इति। इदं ज्ञानमुपाश्रित्येत्यादिषु विध्वस्ततमसां भगवत्साम्यभाजां बहुत्वाभिधानात्। ज्ञानस्वरूपस्यापि तस्य ज्ञानगुणकत्वं स्वीकार्यम्। यो विज्ञाने तिष्ठन् मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषइति श्रुतेः। अत्र प्रथमवाक्यस्य योऽन्तर्यामी विज्ञाने चिदेकधातौ जीवे तिष्ठन् तदन्तर्यमयतीत्यर्थः। द्वितीयवाक्ये तु विज्ञानात्मा इत्यनेन चिदेकधातुत्वम्, बोद्धा इत्यनेन तु विज्ञातृत्वमुक्तम्। किन्तु स ज्ञानरूपो गुणस्तस्य नित्यः, नहि विज्ञातुर्विज्ञाते लोपो विद्यत इत्यादि श्रुतेः। इत्थञ्चेशतुल्योऽपि स्वरूपसामर्थ्याभ्यामल्पीयस्त्वेनोपसर्जनत्वात् तादृशोऽसौ भण्यत इत्यंशाधिकरणे तद्भाष्ये च विवृतम्। तदेवं नित्यज्ञानादि गुणकमणुचैतन्यं जीवस्वरूपम्। तदेवं ब्रह्मवदनासिद्धोऽपि ज्ञानात्मा जीवस्तद्भिन्नोऽपि तच्छक्तिरूपत्वात्तदंशो निगद्यते। तस्य तदंशभूतस्य स्वांशिभगवद् वैमुख्यान्मायया परिभवस्तत्सांमुख्ये तु सा विलीयते। तत्स्वरूपसाक्षात्कारश्च सदा स्फुरति। तद्वैमुख्यञ्चानादिकालिकमपि सत्सङ्गाद् विनश्यति साम्मुख्यञ्चाविर्भवति। सत्सङ्गविशुद्धे जीवे ज्ञानानन्दात्मकभगवत्स्वरूपा-वरकाविद्या विशेषविनाशात्मावेदान्तजन्यभगवद्विषयकमानसापरोक्षप्रागभाव विनाशात्मा वा भगवत्सम्बन्धः। स एष सत्सङ्गहेतुकाद् भगवत्प्रसादशब्दितात् तत्साम्मुख्यादेव भवति। ततो विरतोऽनृवृत्या जीवं प्रति भगवद्गुणावरकोऽविद्याविशेषो विनश्यति। ततस्तम् असौ साक्षात्करोतीति द्वयोरविद्ययोर्ध्वंसो विमोक्षः। तद्ध्वंसश्च कार्योऽपि नित्यः, अभावरूपत्वात्। एवञ्च दुःखहानिसुखलाभरूपो मोक्षः। किञ्च दुःखाभावोऽपि आत्मनिष्ठः सन् पुरुषार्थो न तु स्तम्भादिनिष्ठः। तदेवं सर्वेश्वरस्य भगवतः श्यामसुन्दरस्य जीवजडात्मकात् प्रपञ्चाद् भेदः, तज्ज्ञानभक्तिभ्यां जीवस्यात्यन्तिकदुःखहानि-सुखप्राप्तिसंभव इति कृत्स्नं वेदान्तशास्त्रं जीवेशभेदपरम्। तत्र यान्यभेदपराणीव वाक्यानि कानिचित्प्रतीयन्ते तानि क्वचित्तन्मात्रायत्तवृत्तिकतया तन्निष्ठतया तद्व्याप्यतया वा विश्वं तदात्मकमिति। क्वचिज्जीवेशयोः स्थानैक्यान्मत्यैक्याच्चाभेदं बोधयन्ति। क्वचिच्छक्तेर्जीवजडरूपायाः शक्तिमतः परेशादनन्यत्वादभेदमाहुः, क्वचिच्च भगवदाविर्भावेषु प्रतीतेः स्वगतभेदं निवारयन्तीति।

तदेवमद्वैतादिगौडीयान्तेषु सप्तस्वेषु वेदान्तदर्शनेषु उपनिषदो ब्रह्मसूत्राणि गीताशास्त्रं चेति प्रस्थानत्रयं मूलम्। सर्वेष्वपि चैषु दर्शनेषु भक्तिर्ज्ञानं कर्म चेति मुक्तिप्राप्त्यै प्रस्थानत्रयं निर्दिष्टम्। तत्रापि चाधिकारिभेदेन रुचिभेदेन च ज्ञानकर्मभक्तीनां समुच्चितानां समं प्राधान्यम्। सोऽयं वैष्णवानां ज्ञानकर्मसमुच्चयवादः, भक्तेरपि ज्ञानपर्यवसायित्वात्, तत्प्रयुक्तभगवत्सेवारूपव्यापारस्य च कर्मरूपत्वात्। अद्वैतवादिनां

1. श्रीमद्भगवद्गीता- 5/16

तु–अद्वितीयात्मविज्ञानमेवैकं मुक्त्यै प्रभवति। भेदज्ञानसापेक्षस्य कर्मणस्तु न तदानीं सम्भवः, अद्वितीयात्मविज्ञानेन भेदज्ञानस्योपमर्दनात्। कर्म तु चित्तशुद्धिद्वारा ज्ञानस्य साधनम्, भक्तिरपि तथैव।

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥**[1]

इति गीतास्मरणाच्च। तदेवम्–

**द्वैतमद्वैतमद्वैतद्वैतं सर्वं पराहतम्।**
**परस्परं ततः स्वात्मा ब्रह्माऽपि परिशिष्यते॥**
**आगमस्तमुपासीनैस्तस्य रक्षा विधीयताम्॥**

1. श्रीमद्भगवद्गीता– 18.55

# उपसंहारः

अथ जगतोऽस्य निखिलप्राणिवर्गो निसर्गत एवेष्टमभीप्सत्यनिष्टं परिजिहीर्षति च। अतो भगवानाम्नायस्तुदपायं प्रतिपादयन्निखिलं प्राणिजातमनुगृह्णाति। तत्र ज्ञानाकरे वेदे सर्वविषयकज्ञानस्योपदेष्टृत्वमस्तीति सर्वेऽप्यास्तिका अनुमन्यन्ते। स तु वेदः पूर्वविभक्त एवासीदिति ह्यैतिहासिका विद्वांसो वदन्ति, किन्तु सोऽतिदुरूहतया, सर्वैस्सारल्येनावगन्तुमशक्यतया च क्रमशः उत्सीदन्नासीत्। अतः परमकारुणिकेन भगवता व्यासेन तस्य चतुर्धा विभागः कृतः। यथोक्तम्—

अवतीर्णो महायोगी सत्यवत्यां पराशरात्।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम्॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः।
शतधा चैकधा चैव तथैव च सहस्रधा॥[1] इति।

तेन कियतः सारल्यस्य सम्पन्नतया जनेषु तदध्ययनाध्यापने प्रावर्तेताम्, सम्पूर्णा मानवजातिश्च साक्षात्परम्परया वा येन चिरमुपकृता बभूव परं कालक्रमेण।

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्॥[2]

इत्युदयनाचार्यवचनानुसारेण वेदानामनुशीलनमुत्तरकालेषु शिथिलं मलिनं चाभूत्। अत एव तत्प्रतिपादितार्थसारस्य सारल्येनावबोधनार्हतासम्पादनाय महर्षिभिर्दर्शनानि प्रणीतानि।

दर्शनेषु च तेषु यद्यप्यधिकारिभेदप्रयुक्तं दृष्टिभेदप्रयुक्तञ्च वैषम्यं नूनमस्ति, तथापि दुःखनिवृत्तिस्सर्वेषामप्यभीष्टं प्रयोजनमित्यत्र समेषां दर्शनानामैकमत्यं निर्विवादम्। ये खलु सुखं चरमप्रयोजनतयाऽऽकलयन्ति, तन्मतेऽपि दुःखाभावस्य प्रयोजनत्वमपरिहार्यम्, सुखस्यापि दुःखसहितस्य केनाप्यनभीप्सितत्वात्। दुःखस्य

1. न्या० परि० न्या० सारा०–पृ० 4
2. न्या० कु० द्वि० स्त० श्लोक 3

कारणं तु मिथ्याज्ञानमित्यत्रापि सर्वेषां दर्शनानामविवाद:। तच्च मिथ्याज्ञानं स्वात्मगोचरं स्वात्मतत्त्वज्ञाननिवर्त्यञ्चेत्यत्रापि सर्वदर्शनानामविप्रतिपत्तिरेव। जगतो निदानं मिथ्याज्ञानं यद्यप्यात्मगोचरमिति सत्यम्, तथाप्यात्मनोऽस्तित्वस्वरूपयोर्विषये मतनानात्वेन तन्नानाविधत्वमालम्बते। यथाहि–केचित् पुत्रादिष्वात्मबुद्धिं कुर्वन्तस्तद्विकलतायामहमेव विकल:, तत्सम्पन्नतायाञ्चाहमेव सम्पन्न इति प्रतियन्तश्च स्वीयां धारणाम् "आत्मा वै जायते पुत्र:" इत्यादिवाक्यै: प्रमाणयन्ति। तादृशजनान् कश्चिद् देहात्मवादी शिक्षयति–न पुत्रादय आत्मा, भूतचतुष्टयसङ्घातविशेषात्मकं चेतनं शरीरमेवात्मेति–

**"आत्मास्ति देहव्यतिरिक्तमूर्तिः भोक्ता स लोकान्तरितः फलानाम्।**
**आशेयमाकाशतरोः प्रसूनात् प्रथीयसी स्वादुफलप्रसूतौ।[1]**

इति वृद्धोक्तेः, "एष[2] पुरुषोऽन्नरसमय:" इति श्रुतेश्च। एतद् देहात्मदर्शनं चार्वाकदर्शननाम्ना जगति सुप्रसिद्धम्। तच्च न केवलं तत्रैव परिसमाप्तम्, किन्तु इन्द्रियात्म–मन–आत्मा–प्राणात्मदर्शनाद्यात्मना बहुधा विततम्। मतमिदमुत्तरोत्तरं विचारसौक्ष्म्यक्रमेणस्कन्ध–पञ्चकात्म–क्षणिकविज्ञानात्म–शून्यात्म–इत्यादिबहुविधबौद्धदर्शनात्मना द्रव्यपर्यायोभयात्मकात्मेत्यनेकान्तवादिजैनदर्शनाद्यात्मना च जगति प्रसारं प्रापत्।

किन्तु वैदिकदर्शनप्रणेतारो महर्षयस्तत्रसर्वत्र–"[3]शरीरदाहे पातकाभावात्, पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः"[4] प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्[5], वीतरागजन्मादर्शनात्[6]" इत्यादिसूत्रोक्तरीत्या दोषान् प्रपश्यन्तोऽतिरिक्तनित्यात्मवादव्युत्पादकानि विभिन्नानि दर्शनानि निर्ममिरे।

वैदिकदर्शनप्रणेतारो महर्षयोऽपि तत्तत्समये जनमनस्सु निरूढपदानां नानाविधमिथ्याज्ञानानां निराकरणाय विभिन्नविधानि तत्त्वज्ञानान्युपदिदिशुः। एवञ्च यादृशविषयविशेषनिरूपणे तत्तच्छास्त्राणां तात्पर्यम्, तत्तदर्थे तेषां प्रामाण्यमप्रतिबद्धम्। अतएव साङ्ख्यप्रवचनभाष्यकारैरीश्वरनिराकरणे साङ्ख्यस्य न परमं तात्पर्यमिति द्योतयद्भिरुक्तम्–

---

1. प्रबो0 चन्द्रो0 60 पृ0 2/16
2. तैत्तिरीयोप0 2/1
3. न्या0 सू0 3/1/4
4. न्याय सू0 3/1/18
5. न्या0 सू0 3/1/21
6. न्या0 सू0 3/1/24

"साङ्ख्यशास्त्रस्य तु पुरुषार्थतत्साधनप्रकृतिपुरुषविवेकावेव मुख्यो विषयः"[1] इति।।

एवमेव प्रमाणादिहेत्वाभासान्तपदार्थनिरूपणद्वारेतरभिन्नत्वेन नित्यात्मानुमाने चक्षुरादीन्द्रियाणां तैजसत्वादिभौतिकत्वव्यवस्थापने न्यायशास्त्रस्य परमं तात्पर्यम्। इमे हि पदार्था न्यायशास्त्रमुपदिशद्भिरुक्ताः[2], अन्यैश्च परिगृहीताः। अत एव च ब्रह्मसूत्रभाष्ये[3] दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां कार्यकारणभावः[4] पूज्यपादैः श्रीशङ्कराचार्यैः परिगृहीतः, ऋषिप्रवरस्य श्रीगौतमस्याचार्यत्वञ्च समादरेण स्वीकृतम्।[5] "एतेन योगः प्रत्युक्तः"[6] इति वेदान्तसूत्रे शाङ्करभाष्यादौ च योगस्यापि यमनियमादिविभूत्यादिनिरूपणे परमं तात्पर्यं तदंशे प्रामाण्यमपि न तु प्रासङ्गिकमहत्वादि-निरूपण इत्युक्तम्, व्याकृतञ्च भामत्यां श्रीवाचस्पतिमिश्रैः–

"न चैतानि योगशास्त्राणि प्रधानादिसद्भावप्रतिपादनपराणि, किन्तु योगस्वरूपतत्साधनतदवान्तरफलविभूतितत्परमफलकैवल्यव्युत्पादनपराणि।[7] तच्च यत्किञ्चिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतम्, न तु तद्विवक्षितम्" इति।

स्वीकृतञ्चासनस्य महत्वम् "आसीनः सम्भवात्"[8] इति सूत्रे तद्भाष्यादौ च।

किन्त्वात्मविषयकविचारे प्रवृत्ते श्रीमदुदयनाचार्यैर्वेदान्तदर्शनस्यैव तन्निरूपणे प्रामाण्यं स्वीकुर्वद्भिः स्वस्य च प्रमाणादीनां निरूपण एव प्रामाण्यं प्रकटयद्भिः–

"तदास्तां तावत्, किमार्द्रकवणिजो वहित्र चिन्तयति"[9] इत्युक्तम्। व्याख्यातञ्च नारायणीटीकायाम्–

वेदान्तसिद्धान्तचिन्तायां नास्तिकानामनधिकारात्, कृतं तच्चिन्तया[10]

1. सा0 प्र0 भा0 1/1/1
2. न्या0 सू. प्रस्ता. 1/1/1
3. ब्र0 सू0 प्रोक्ताः 1/1/4
4. मुण्डकोपनिषद्–1.1.9
5. तथा चाचार्यप्रणीतं न्यायोपबङहितं सूत्रम् इत्यादिना 1/1/4 ब्र0 सू0 भा0।
6. ब्र0 सू0 2/1/3
7. ब्र0 सू0 2/2/3–भामतीटीका।
8. ब्र0 सू0 4/1/7
9. आत्मतत्त्वविवेके प0 223
10. अत्रैव नारायटीटीका।

इति।

अन्यत्रापि–"आयातोऽसि मार्गेण"[1] इत्यभिहितम्। व्याख्यातञ्च तत्र–"वैदिकेन मायावादिमार्गेणेत्यर्थः"[2] इति।

आचार्येण वेदान्तनये महती श्रद्धा प्रदर्शिता–

**न ग्राह्यभेदमावधूय धियोऽस्ति वृत्ति।**
**स्तद्बाधने बलिनि वेदनये जयश्रीः।।**[3]

इत्यादिकं वदता तत्र नारायणी–"वेदनये वेदानुसारिणी अनिर्वचनीयसिद्धान्तन्याये जयश्रीर्भवति"[4] इति।

आचार्यैरेव किरणावल्याख्यवैशेषिकग्रन्थे–"वेदान्तिनामपि अविद्यायां निवृत्तायां केवलमात्मैवापवर्गे वर्तत इति मते न नो विवादः"[5] इति घोषयद्भिरेतद्विषये न केवलं स्वस्य, अपितु वैशेषिकतन्त्रस्याप्यद्वैते न विवाद इति स्फुटीकृतम्। कन्दलीकारा अपि–

**ध्यानैकतानमनसो विगतप्रचाराः**
**पश्यन्ति यं कमपि निर्मलमद्वितीयम्।**
**ज्ञानात्मने विघटिताखिलबन्धनाय**
**तस्मै नमो भगवते पुरुषोत्तमाय।।**[6]

इति मङ्गलश्लोके परमात्मनोऽद्वितीयत्वं केवलज्ञानरूपत्वञ्च वदन्तोऽद्वैतपक्षमेव समाश्रयन्ति।

"ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते"[7] इत्याद्यनुमिति ग्रन्थस्य-दीधितिकारमङ्गलश्लोकमद्वैतवादं विहाय व्याकर्तुमशक्यत्वेन श्रीगदाधरभट्टाचार्यैरपि "अथवा भट्टमतस्यैवात्र परिष्कृतत्वात्"[8] इत्याद्युक्तम्। भट्टमतेनात्राद्वैतमेव

---

1. आत्मतत्त्वविवेके पृ0 221
2. आ0 त0 वि0 नारायणीटीका।
3. आ0 त0 वि0 पृ0 230
4. किरणावली पृ0 48-49
5. प्रश0 पा0 भा0 न्या0 क0
6. न्यायकन्दली-श्रीधरः।
7. अनुमितिचिन्तामणिदीधितिटीकायां मङ्गलश्लोकः।
8. तत्रैव गादाधरीटीका।

विवक्षितमिति।

मीमांसकप्रवरैश्च–

**इत्याहनास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।**
**दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन॥**[1]

इत्यादिकं वदद्भिरात्मनित्यत्वमात्रस्थापनद्वारा केवलं नास्तिक्यनिराकरण एव स्वीयपरमतात्पर्यमुद्घोषयद्भिरात्मनः सम्यङ्निरूपणे वेदान्तदर्शस्यैव परमतात्पर्यं प्रामाणिकत्वञ्चेति स्वीकृतम्।

तथा च वैदिकर्शनानां सर्वेषामपि सोपानभेदेनाधिकारिभेदेन वोपयोगः प्रामाण्यञ्चेत्यत्र नास्ति स्तोकतरोऽपि सन्देहः। अतएव–

**द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव।**
**योगस्तद्वृत्तिरोधश्च ज्ञानं सम्यगवेक्षणम्।**
**असाध्यः कस्यचिद्योगः कस्यचित्तत्वनिश्चयः॥**[2]

इत्यादिना योगवासिष्ठे योगज्ञानयोरधिकारिभेदेनावश्यकत्वमुपदिष्टम्। अतश्च न्यायशास्त्रस्यापि प्रामाण्यं वेदान्तशास्त्रे श्रीगौडब्रह्मानन्दस्वामिभिरपि स्वीकृतम्। उक्तञ्च–

"ननु देहाद्यधिष्ठानतयाऽऽत्मज्ञानं कथं शुद्धात्मसाक्षात्कारं प्रति हेतुः? तस्याप्रमाणत्वादिति[3] चेत्, उच्यते–तादृशविवेकज्ञानोत्तरं देहादीनां हेयतया केवलात्मन एव जिज्ञास्यत्वात्। तेनैव प्रतिबन्धादहङ्काराद्यभाने साक्षिमात्रविषयकसौषुप्तवृत्तिरिवा-विद्यावृत्तिविशेषरूपस्तादृशविवेकज्ञानोत्पत्तौ पदार्थशोधकस्मृत्या मनोवृत्तिरूपो वा शुद्धात्मसाक्षात्कारः" इति।

अत एव च नानात्मैकात्मत्वयोर्विरोधं निराकुर्वद्भिः साङ्ख्यप्रवचनभाष्यकारैः सर्वेषां वैदिकदर्शनानां प्रामाण्यं कण्ठरवेणोक्तम्–

"एतेन श्रुतिस्मृतिप्रसिद्धयोर्नानात्मैकात्मत्वयोर्व्यावहारिकपारमार्थिकभेदेना-विरोधः"[4] इति "तस्मादास्तिकशास्त्रस्य न कस्याप्यप्रामाण्यं विरोधो वा स्वस्वविषयेषु

---

1. मीमांसाश्लोकवार्तिकस्य पञ्चमसूत्रस्थात्मवादेऽन्तिमोऽयं श्लोकः।
2. यो0 वा0 10/8।
3. सि0 बि0 न्या0 रत्ना0 प्रथमश्लोकव्याख्याने, पृ0 46
4. सा0 प्र0 भा0 1/1/1, पृ0 6

सर्वेषु सर्वेषामबाधादविरोधाच्चेति"[1] इति च। इममेवार्थं द्योतयन्ति वार्तिककारपादाः श्रीसुरेश्वराचार्याः–

यदर्थं सर्वशास्त्राणां प्रवृत्तिरतिविस्तरा।
आत्मज्ञानावतारार्थः सर्वशास्त्रसमुद्यमः।।
संसारोच्छेदमेवामी फलं शास्त्रकृतोऽब्रुवन्।
स्वत एव मनुष्याणां प्रकृतिर्भोगसिद्धये।।
विरोधः सर्वशास्त्रेषु पदार्थानां व्यवस्थितौ।
युक्तस्तात्पर्यहीनत्वात् श्रुतौ सृष्टिविगानवत्।
अपि वात्स्यायनादीनां शास्त्राणां द्वारभेदतः।।
प्रामाण्यमविरुद्धं स्यादैकात्म्यज्ञानजन्मने।।[2]

इत्यादिकं वदन्ति।

तथैव तत्तन्मतासाधारणविभिन्नविषयमादाय सर्वेषामेव मतानां प्रामाण्यमविरोधञ्च ज्ञापयन्ति भगवत्पादाः–"न च प्रमाणं प्रमाणान्तरेण विरूप्यते, प्रमाणान्तराविषयमेव हि प्रमाणान्तरं ज्ञापयति"[3] इत्यादिकं प्रतिपादयन्ति।

एवञ्च वैदिकदर्शनानि परस्परविरुद्धतयाऽऽप्रामाणिकानीत्यवैदिकानामाक्षेपश्चेत्, निरस्तः, अधिकारिभेदेन सोपानभेदेन वा सर्वेषामपि प्रामाण्यस्याप्रत्यूहत्वात्।

तेषु च सर्वेषु वेदप्रामाण्याभ्युपगन्तृत्वं वैदिकत्वमितिप्राचीनवचनाद् वेदस्य परमं प्रामाण्यमभ्युपगम्यते। तेषां मध्ये साङ्ख्ययोगन्यायवैशेषिका लौकिकानुभव-मधिकृत्य पदार्थव्युत्पादने प्रवृत्तास्तर्कप्रधानाः, मीमांसावेदान्तौ तु श्रुतिवाक्यमधिकृत्य प्रवृत्तौ श्रौताविति।

---

1. तत्रैव।
2. न्यायवार्तिकम्।
3. बृ० उप० शा० भा० 2/1/20, पृ० 120



डॉ. महानन्दझाः

जन्मस्थानम् - ग्रा.-पत्रा. -पटसा

वाया - कुण्डलम्

जनपदम् - समस्तीपुरम्, बिहारप्रदेशः

पिता - श्रीधर्मनाथझाः

माता - श्रीमतीचन्द्रकलादेवी

शिक्षा - श्रीस्वामीपराङ्कुशाचार्यसंस

आदर्शमहाविद्यालयः, हुलासगञ्जः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वारा

उपाधयः - नव्यन्यायाचार्यः, विद्यावारि

शैक्षणिकसेवा - 07.01.2002 तः निर

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्य

नवदेहल्याम् - 16।

प्रकशिताः कृतयः- पञ्चलक्षणी (चतुर्थलक्ष

न्यायसिद्धान्तमुक्तावली-दिनकर्य्याः- 'चन्द्र

हिन्दीव्याख्या (अनुमानोपमानखण्डः)।

20 शोधलेखाः विभिन्नासु राष्ट्रियशोधपत्रि

प्रकाशिताः।

सम्पादनम्- तर्कसङ्ग्रहसर्वस्वम्, न्यायशास

परिचर्चा (शक्तिवादः) पञ्चलक्षणी, संशय

सिद्धान्तवादः, संत समाज के कलश पु

ई-मेल : mahanandjha1972@gmail.

